उज्ज्वलजलजे । तत्र लसन्तः भासमानाः । ते च ते पांसवश्च । एतादृशाः पादपांसवः **अस्मान् पुनन्तु** ॥ पावयन्तु विगलितकलुषान् कुर्वन्त्विति वाक्ययोजना । क्र्यादिकात् 'पूञ् पवने' इत्यस्माद्धातोः 'एरुः'(पा.सू-३.४.८६) इत्युत्वे कृते आशिषि लोट् प्रथमपुरुषबहुवचनम् । पुनस्तानेव विशिनष्टि– **वाचामित्यादिना** ॥ **यत्र** पादपांसुषु ॥ **वाचां प्रणेत्री** स्रष्ट्री ॥ प्रसुप्ता वाचः सञ्जीवयन्तीत्यर्थः । अन्यार्थश्च वाचां सकलश्रुतिस्मृतीतिहासपुराणादीनां द्विजफणिपमृडेन्द्रादीन् प्रत्युपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्मुख्यवृत्या श्रीविष्णुपरत्वेन प्रणेत्री प्रतिपादयन्ती । तदुक्तं ब्रह्माण्डे– 'यस्याः प्रसादात् परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः । माता च यैषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ'(म.हा.भा.ता.नि.२.१६८) इति । पुनः किम्भूताः ? त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । (पात्रादिभ्यः प्रतिषेधो वक्तव्यः) 'पात्राद्यन्तस्य न' (वा[१]) इति 'द्विगोः' (पा.सू-४.१.२१) इति ङीप् न भवति । त्रिभुवनेन महिता । 'मह पूजायाम्' इति धातोः कर्मणि निष्ठा ॥ **शारदेन्दुज्योत्स्ना-भद्रस्मित-श्रीधवलितककुभा** ॥ शरदि भवः शारदः । स चासौ इन्दुश्च । तस्य ज्योत्स्ना । तद्वत् भद्रस्मितस्य श्रीः । तया धवलिताः ककुभो यया सा तथोक्ता । 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति ककुम् शब्दात् टाप् ॥ **शारदा** भारती ॥ **प्रेमभारं** अनुरागसमृद्धिं **बभार** भृतवती ।

अत्रायमभिप्रायः । उद्यदादित्यचण्डप्रभाऽभयवरज्ञानपुस्तकाञ्चितदोर्दण्डषण्डा भारती एतेष्वशेषदोषनिराकरणचणेषु श्रीमदानन्दतीर्थपादपांसुष्वनुरक्तवतीत्युक्तौ तदवर-गरुडकुण्डलीशमृडादिसुरसेव्यत्वमेषां (सुतरां) प्रतीयत इति । अत्र जलजलेति द्वयोः स्वरव्यञ्जनयोरनुवृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । आदौ लक्ष्मीदेवताकमगणप्रयोगादयं स्तवो न केवलं कैवल्यप्रदः किन्तु क्षित्याद्यनेकश्रेयस्करश्चेति द्रष्टव्यम् । तदुक्तम्– 'लक्ष्मीर्मस्त्रिगुरुः क्षितिं वितनुते' (गंगालहरी व्याख्यानोदाहृतवचनम् ) इति ॥१॥

---

९. स नपुंसकम् (पा.सू-२-४-१७) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

# विश्वपतितीर्थविरचिता बालबोधिनी

**श्रीमन्तं विठ्ठलं नत्वा पूर्णबोधेष्टदैवतम्**
**श्रीमद्वायुस्तुतिव्याख्यासङ्ग्रहः क्रियते मया ॥ १ ॥**

श्रीमद्विष्णुप्रीत्यतिशयस्यैवात्यन्तिकसुखदत्वात्तस्य च कर्मज्ञानसापेक्षत्वात्तस्य चेष्टदेवतागुरुभक्त्या समुदयादिष्टदेवता च भगवान् विष्णुरेव । सर्वेषां मुख्यगुरुरपि प्राण एवेति स्वयं निरन्तरं तद्गतान्तःकरणोऽपि भगवान् त्रिविक्रमाचार्यः सकल-सौभाग्यदेवतां श्रियमपि स्मरन् तयोः स्तुतिं ग्रथयति– **श्रीमदिति ॥ श्रीमद्वि-ष्णवङ्घ्रिनिष्ठातिगुणगुरुतमश्रीमदान्दतीर्थत्रैलोक्याचार्यपादोज्ज्वलजलजल-सत्पांसवः ॥** श्रीरस्यास्तीति श्रीमान् । 'तदस्यास्त्यस्मिन्निति मतुप्' (पा.सू-५.२.९४) लक्ष्मीसमेत इत्यर्थः । स चासौ विष्णुश्च तस्य अङ्घ्री पादौ तयोर्निष्ठा सुस्थिरा भक्तिरित्यर्थः । सैव अतिगुणोऽधिकश्चासौ गुणश्चातिगुणः । तयातिगुण इति वा । तेन गुरुतमः । अथवैषां रुद्रादीनामतिशयेन गुरुर्गुरुतमः । मुख्यगुरु-रित्यर्थः । स चासौ श्रीमदानन्दतीर्थश्च । आनन्दकरं तीर्थं शास्त्रं यस्मात्स आनन्दतीर्थः । एतत्कृतभाष्यादिशास्त्रस्य विष्णुविषयकपरोक्षापरोक्षज्ञानद्वारा स्वरूपभूतानन्दाभिव्यक्तिलक्षणमोक्षहेतुत्वादिति भावः । त्रयो लोकाः त्रैलोक्यम् । 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' इति स्वार्थे ष्यञ् । तस्य आचार्यो गुरु-स्त्रैलोक्याचार्यः । श्रीमदानन्दतीर्थ एव त्रैलोक्याचार्यः । श्रीमदाचार्याणां त्रैलोक्य-गुरुत्वे प्रमाणं च 'तत्पुरुषो मानवः, स एनान् ब्रह्म गमयति' (छां.उ.अ-४. मन्त्र.१५-५) इत्यादिवाक्यम् । अस्मिन्वाक्ये सर्वेषामपि विरजातरणानन्तरं चतुर्मुखोपदेशादेव मोक्षप्रतिपादनात् । तस्य पादौ तावेव उज्ज्वलजलजे विशदपद्मे तयोर्लसन्तो भासमानास्ते च ते पांसवश्च ते **अस्मान् पुनन्तु** विगतदोषान् कुर्वन्तु । 'पूञ् पवने' लोट् । कथं भूताः पांसव इत्यत आह **यत्रेति ॥** यत्र येषु पांसुषु वाचां वागिन्द्रियाणां **प्रणेत्री** अभिमानिदेवतात्वेन नियामिका प्रसुप्ता वाचः सञ्जीवयन्तीत्यर्थः ।

यद्वा वाचां सकलश्रुतिस्मृतीतिहासपुराणादीनां रुद्रशेषगरुडान्प्रति उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्मुख्यवृत्त्या श्रीविष्णुपरत्वेन प्रणेत्री प्रतिपादयन्तीत्यर्थः। पुनः कथं भूतेत्यत आह– **त्रिभुवनेति** ॥ त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। 'पात्राद्यन्तस्य न' इति वचनात् 'द्विगोः'(पा.सू-४.१.२१) इति सूत्रेण न ङीप्। त्रिभुवनेन महिता पूजिता 'मह पूजायाम्' इति धातोर्भूते कर्मणि क्तप्रत्ययः। त्रीणि च तानि भुवनानि च त्रिभुवनानि तेषु महितेति वा। पुनः कथं भूता शारदेत्यतस्तां विशिनष्टि **शारदेन्द्विति** ॥ **शारदेन्दुज्योत्स्नाभद्रस्मितश्रीधवलितककुभा** ॥ शरदि शरदृतौ भवः शारदः स चासौ इन्दुश्च तस्य ज्योत्स्ना चन्द्रिका तद्वत् भद्रा कल्याणा स्मितश्रीर्मन्दहासस्य कान्तिस्तथा धवलिताः ककुभ दिशो यया सा तथोक्ता। 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति वचनात् ककुभ्शब्दात् टाप्। शारदा भारती प्रेम्णोऽनुरागस्य भारः समृद्धिस्तं भक्त्यतिशयमित्यर्थः। 'भारो भक्त्यतिशययोः' इति रत्नमाला ॥ **बभार** धृतवती। 'भृञ् भरणे' लिट् ॥ १ ॥

## छलारिशेषाचार्यकृता मन्दबोधिनी

**छलारिनरसिंहार्यशिष्यः शेषाभिधो बुधः।**
**श्रीमद्वायुस्तुतेष्टीकां कुरुते मन्दबोधिनीम्॥**

अथ सकलकविकुलतिलकः श्रीमदाचार्यपूर्णानुग्रहपात्रः परमास्तिकशिरोमणिः त्रिविक्रमपण्डिताचार्यवर्यः विशिष्टवस्तुसङ्कीर्तनरूपमङ्गलं कुर्वन् एव साधूनुद्दिधीर्षुः मूलरूपस्य वायोस्तदवताराणां च स्तुतिं विधत्ते– **श्रीमद्विष्ण्वङ्घ्रिनिष्ठेत्यादिना॥ श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणगुरुतमश्रीमदान्दतीर्थत्रैलोक्याचार्यपादोज्ज्वलजलजलसत्पांसवः** ॥ तत्रादौ तावत् श्रीमदाचार्यपादपांसून् प्रार्थयते। श्रीमद्विष्ण्वङ्घ्रिनिष्ठेत्यारभ्य पांसव इत्यन्तमेकं पदम्। श्रीः लक्ष्मीः अस्यास्तीति श्रीमान्। 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः। श्रीमान् चासौ विष्णुश्च श्रीमद्विष्णुः। श्रीमद्विष्णोः अङ्घ्री चरणौ। पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। तयोः

निष्ठा भक्त्युत्कर्षः । सैव अतिगुणः अतिशायितो गुणः, प्रधानगुणविष्ण्वङ्घ्रिनिष्ठावत् लक्ष्म्यङ्घ्रिनिष्ठापि कर्तव्येति सूचयति । श्रीर्येषामस्तीति श्रीमन्तः ज्ञानभक्त्यादिगुणैः शोभमाना इत्यर्थः । आनन्दस्य आनन्दरूपस्य हरेः तीर्थं क्षेत्रमिवावासयोग्यं मनः यस्य सः आनन्दतीर्थः ।

यद्वा आनन्दप्रदं तीर्थं शास्त्रं यस्मात् स तथोक्तः । 'तीर्थं शास्त्रेऽध्वरे क्षेत्रे' इति धनञ्जयः । तदुक्तं श्रीमन्मध्वविजये 'आनन्दरूपस्य परस्य पात्रधीरानन्द-सन्दायिसुशास्त्रकृत् स यत् । आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनु-रूपरूपकम्' (सु.वि.सर्ग-५,श्लोक-२) इति । त्रयश्च ते लोकाश्च त्रिलोकाः । त्रिलोका एव त्रैलोक्यम् । स्वार्थे ष्यञ् । तस्याचार्याः गुरवः । त्रैलोक्याचार्ये-त्याचार्यपदप्रयोगेण 'आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते' (लिङ्ग.पु उत्तरभाग.अ.२०,श्लो-२०) इति आचार्य-पदपुष्कलप्रवृत्तिनिमित्तं एतद्ग्रन्थप्रतिपाद्ये श्रीमदानन्दतीर्थाचार्येऽस्तीति सूचितम् । श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणगुरुतमाश्च ते श्रीमन्तश्च ते आनन्दतीर्थनामानश्च ते त्रैलोक्याचार्याश्चेति कर्मधारयः । तेषां पादावेव उज्ज्वलजलजे निर्मलपद्मे । तयोर्लसिताः शोभमानाः ॥ **पांसवः** रेणवः ॥ **अस्मान् पुनन्तु** पावयन्त्विति क्रियाकारकयोजना । 'पूञ् पवने' इत्यस्माद्धातोः कर्तरि प्रार्थनायां लोट् परस्मैपदम् । पुनातु पुनीतात् पुनीतां पुनन्तु । कथं भूताः पांसवः इत्याकांक्षायां पादपांसून् विशिनष्टि **वाचां यत्रेति** ॥ यत्र पादपांसुषु **प्रेमभारं** भक्त्यतिशयम् । 'भारोऽतिशयभारयोः' इत्यभिधानम् । **बभार** दधार । 'भृञ् भरणे' इत्यस्माद्धातोः कर्तरि लिट् परस्मैपदम् । बभार बभ्रतुः बभ्रुः इत्यादिरूपाणि । कथम्भूता शारदा ॥ **वाचाम्** ॥ सकलवचनानाम् । उपलक्षणमेतत् मनसामपि ॥ **प्रणेत्री** ॥ नियामिका । सर्ववाङ्मनोऽभिमानिनीत्यर्थः । तदुक्तम् 'सकलवचनचेतो देवता भारती सा' (न्यायसुधा.जि.अ.मं.प-४) इति । अनेन ग्रन्थारम्भकाले भारत्याः स्मरणं कार्यमिति सूचयति । पुनः कीदृग्विधा भारती ॥ **त्रिभुवनमहिता** ॥ त्रिलोकपूजिता । पुनः कीदृशी ॥ **शारदेन्दुज्योत्स्नाभद्रस्मितश्रीधवलितककुभा** ॥

शरदि भवः शारदः। शारदश्चासाविन्दुश्चेति शारदेन्दुः। शरत्कालसम्बन्धिपूर्णचन्द्र इत्यर्थः। तस्य ज्योत्स्ना चन्द्रिका। चन्द्रिका कौमुदी ज्योत्स्ना इत्यमरः। तद्वत् भद्रा रुचिरा स्मितश्रीः मन्दहासशोभा तया धवलिताः धवलीकृताः ककुभः दिशः यस्याः सा तथोक्ता। हलन्तादपि ककुभ्शब्दात् टाप् वाच्यः। 'यथा वाचा निशा दिशा' इति। 'दिशस्तु ककुभः काष्ठा' इत्यमरः। आदौ लक्ष्मीदेवताकमगणप्रयोगात् अयं स्तवः न केवलं कैवल्यप्रदः किन्तु क्षित्याद्यनेकश्रेयस्करश्चेति ज्ञातव्यम्। तदुक्तम्- 'लक्ष्मीर्मस्त्रिगुरुः क्षितिं वितनुते' (गङ्गालहरी व्याख्यानोदाहृतवचनम्) इति ॥ १ ॥

## कूर्मनरसिंहाचार्यविरचितभावप्रदीपिका

**प्रणम्य श्रीपतेरङ्घ्री पूर्णबोधं तथापरान्।**
**गुरूचित्यै व्याकरिष्ये वायुस्तवनमुत्तमम्॥**

**अत्रान्वयमुखेनैव सर्वं व्याक्रियते मया।**
**नोद्ग्रन्थं लिख्यते किञ्चित् तेन तुष्यन्तु सूरयः॥**

इहानेकसांसारिकदुःखदर्शनेन विरक्तान् सारासारविवेकवतः शमदमादिमतो मुमुक्षून् सज्जनान् अनुजिघृक्षुः तेषां च इष्टदेवतागुरुप्रसादमन्तरेण विशिष्टपुरुषार्थ-प्राप्तेरयोगात् तदुपायमादिदिधित्सुः, स च स्तवनेनापि जायते इति इष्टदेवतागुरु-प्रसादोपायभूतं स्तवनं चिकीर्षुः साक्षात् श्रीमद्भवत्पादाचार्यलब्धब्रह्मविद्यः श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यो निरन्तरायप्रारिप्सितपरिसमाप्त्यादि-प्रयोजनकत्वेनाविगीतशिष्टाचारपरम्पराप्राप्तं स्वचिकीर्षितग्रन्थाधिकृतविशिष्टेष्ट-देवताप्रार्थनादिरूपं कृतमाशीर्लक्षणं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति- **श्रीमदिति॥ श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणगुरुतमश्रीमदानन्दतीर्थत्रैलोक्याचार्य-पादोज्ज्वलजलजलसत्पांसवः॥** श्रयतीति श्रीः। कर्तुः कर्मापेक्षायां योग्येतरान्वितस्वार्थे पदशक्तिबलात् 'असाधारण्येन व्यपदेशाः भवन्ति' इति न्यायाच्च निरन्तरं यथा भवति तथा विष्णुं श्रयतीत्यर्थः।

अथवा श्रीयते सा इति श्रीः कर्मणः कर्त्राकाङ्क्षायां ब्रह्मादिभिराश्रियते सेव्यते सा श्रीः इत्यर्थः । 'श्रिञ् सेवायां' इत्यस्माद्धातोः 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च' (उणादि-२२५) इति वचनात् कर्तरि कर्मणि वा क्विप् प्रत्ययो दीर्घश्च । उक्तं प्रथमे भागवते– 'ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामा यथोक्तविधिना(तपः समचरन्)भगवत्प्रपन्नाः । सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजते (जुषते)ऽनुरक्ता'(भाग.स्कं-१,अ-१६,श्लो-३३) इति । केवलश्रीतत्त्वोपासनस्य 'क्लेशोऽधिकतरस्तेषाम्'(भग.गी.अ-१२,श्लो-५) इति निषिद्धत्वात् भगवत्प्रपन्ना इति ब्रह्मादयो विशेषिताः । सा नित्यमस्यास्तीति अस्मिन् वेति श्रीमान् । नित्यं लक्ष्मीसमेत इत्यर्थः । 'भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः'[१०] इति वचनात् 'तदस्यास्त्यस्मिन्निति मतुप्'(पा.सू-५.२.९४)इति नित्ययोगे मतुप् । श्रीमांश्चासौ विष्णुश्च । 'विष्लृ व्याप्तौ' इत्यस्मादौणादिको नुक् प्रत्ययः । तथा च वेष्टि व्याप्नोतीति विष्णुः । विशेषानुक्तेरुचितत्वात् देशतः कालतो गुणतश्च व्याप्त इत्यर्थः । 'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः । सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः'(गी.ता-२.१७) इत्युक्तेः । अथवा 'विश प्रवेशने' इत्यस्मात् नुक् प्रत्यये शस्य षादेशे च कृते विष्णुरिति रूपम् । सर्वत्रान्तर्यामित्वादिना प्रविष्टत्वात् सर्वं प्रविशत्यस्मिन्निति सर्वाधारत्वात् सर्वगुणपूर्णत्वाद्विष्णुः । तथा च निरुक्तं मोक्षधर्मे–

'गतिश्च सर्वभूतानां प्रजनश्चापि भारत ।
व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।
अधिभूतं निविष्टश्च तदिच्छुश्चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' इति ।

---

१०. 'तदस्यास्त्यस्मिन्निति मतुप्' (पा.सू.५-२-९४) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

यद्वा अत्युत्कृष्टपरिपूर्णबलचेष्टास्वामित्वशीलत्वात् विष्णुः । 'णकारो बलं षकारः प्राण आत्मा' (ऐ.उ.आ-३.अ-२.मन्त्र-६) इति श्रुतेः । अथवा विपूर्वात् 'ष्णु प्रसवे' इत्यतः कर्तरि विच् प्रत्ययः । एवं च विविधं जगत् सौति प्रसूते सृजतीति वा । वि विविधेभ्यो विशिष्टेभ्यो वा जनेभ्यो विविधान् पुरुषार्थान् सौति ददाति इति वा विष्णुः । एतेन लक्ष्म्या भगवन्नित्यावियोगित्वं भगवतो वन्द्यत्वप्रयोजकं वैशिष्ट्यादिकं च निरूपितं भवति । एवम्भूतस्य हरेः अङ्घ्री चरणौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । तयोः निष्ठा व्यवस्था नियतावस्थितिः तदेकासक्तचित्ततेति यावत् । 'निष्ठोत्कर्षे व्यवस्थायाम्' इत्यभिधानात् । यद्वा निष्ठा निष्पत्तिः प्राप्तिरिति यावत् । 'निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । सैव अतिशयितो गुणः अतिगुणः । 'प्रादयो गताद्यर्थे प्रथमया'(वा)[११] इति समासः । अथवा गुणान् शमदमादीन् अतिक्रान्तो गुणः अतिगुणः मुख्यो गुण इत्यर्थः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'(वा)[१२] इति समासः । तेन कारणेन गुरुतमः । इष्टानिष्टप्राप्तिपरिहारोपायं गृणाति उपदिशति इति गुरुः । अतिशयेन गुरुः गुरुतमः । 'अतिशायने तमबिष्ठनौ' (पा.सू-५.३.५५) इति तमप् प्रत्ययः । स च असौ श्रीमदानन्दतीर्थत्रैलोक्याचार्यश्च । अत्र 'एकविशेषणविशिष्टे इतर-विशेषणान्वयः' इति न्यायेन 'विशेषणं विशेष्येण बहुलम्' (पा.सू-२.१.५७) इति वा कर्मधारयसमासो बोध्यः । एवमन्यत्रापि द्रष्टव्यम् । श्रीमान् नित्य-ज्ञानादिगुणैः शोभमानः योऽयं आनन्दतीर्थः । आनन्दो विष्णुः । 'आनन्दो ब्रह्मेति व्यजानात्' (तै.भृगुवल्ली-६) इति श्रुतेः तत्प्रतिपादकम् । अथवा आनन्दः सुखं तत्साधनम् । तार्यते संसारात् अनेन इति तीर्थं शास्त्रं यस्य स तथोक्तः ।

अथवा श्रीमांश्च असावानन्दश्च श्रीमदानन्दः । श्रीमान् विष्णुः । श्रीमत् सुखं

---

११. 'जीविकोपनिषदावौपम्ये' (पा.सू.१-४-७९) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

१२. 'जीविकोपनिषदावौपम्ये' (पा.सू.१-४-७९) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

वा । श्रीमत्वं च ऐश्वर्यप्रभृतिगुणानामुपलक्षणम् । सुखस्य श्रीमत्वं च दुःखादि-दोषाननुषक्तत्वम् । तथा च ऐश्वर्यादिगुणविशिष्टब्रह्मप्रतिपादकनिर्दुष्टसुखसाधनं वा । तीर्थं शास्त्रं यस्येति श्रीमदानन्दतीर्थः । अन्यप्रणीतं च शास्त्रं निरस्तैश्वर्यादि-कल्याणगुणब्रह्मप्रतिपादकं आत्यन्तिकदुःखसाधनं चैवेति भावः । 'तॄ प्लवनतरणयोः' इत्यस्मात् करणे थ प्रत्ययः ।

यद्वा आनन्दः तीर्थमुपायो यस्य इत्यर्थः । तत्प्रसादातिरिक्तपुमर्थसाधनानपेक्ष इति भावः । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इत्यभिधानम् । अथवा आनन्दो विष्णुरेव तीर्थं योनिः उत्पादकः यस्य इत्यर्थः । 'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि' इत्यभिधानम् । आनन्दरूपस्य हरेः तीर्थभूता धीर्यस्य इति वा । त्रयो लोका एव त्रैलोक्यम् । चतुर्वर्णादिभ्यः स्वार्थे ष्यञ् वाच्यः, 'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्' (वा) इति ष्यञ् प्रत्ययः । स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति त्रैलोक्यशब्दस्य क्लीबत्वम् । तस्य आचार्यः मन्त्रव्याख्यानकर्ता । 'मन्त्र-व्याख्यानकृदाचार्यः' इत्यमरः । धर्मानाचरितुं आचारयितुं वा परावरार्थान् प्रतिपादयितुं वा शिष्यबुद्धिं विस्तारयितुं वा योग्यः आचार्यः । 'चरेराङि चागुरौ'[१३] (वा) इत्युक्तत्वात् आङ् पूर्वाच्चरगतिभक्षणयोरित्यस्मात् 'ऋहलोर्ण्यत्' (पा.सू-३.१.१२४) इत्यहर्थे ण्यत् प्रत्ययः । कस्मादाचार्यः । आचारं ग्राहयति 'आचिनोति अर्थान् आचिनोति बुद्धिं इति वा इति तन्निर्वचनात् । 'आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते'(लिङ्ग.पु उत्तरभाग अ.२०श्लो-२०) इति वचनात् । अत एव गुरुतम इति भावः । अत्र त्रैलोक्याचार्यपदस्य मुख्यप्राणे रूढ्या विशेष्यपरत्वम् । अन्ययोस्तु रूढ्यविवक्षायां विशेषणपरत्वं बोध्यम् । अथवा 'विशेषणं विशेष्येण बहुलम्' (पा.सू-२.१.५७) इति बहुलग्रहणात् विशेषणसमासेन विशेषणस्य परनिपातः । तस्य पादोज्ज्वजलजे

---

१३. **'गदमदचरयमश्चानुपसर्गे'** (पा.सू-३.१.१००) **इति सूत्रस्य सम्बन्धि वार्तिक-मिदम् ।**

यद्वा अत्युत्कृष्टपरिपूर्णबलचेष्टास्वामित्वशीलत्वात् विष्णुः । 'णकारो बलं षकारः प्राण आत्मा' (ऐ.उ.आ-३.अ-२.मन्त्र-६) इति श्रुतेः । अथवा विपूर्वात् 'ष्णु प्रसवे' इत्यतः कर्तरि विच् प्रत्ययः । एवं च विविधं जगत् सौति प्रसूते सृजतीति वा । वि विविधेभ्यो विशिष्टेभ्यो वा जनेभ्यो विविधान् पुरुषार्थान् सौति ददाति इति वा विष्णुः । एतेन लक्ष्म्या भगवन्नित्यावियोगित्वं भगवतो वन्द्यत्वप्रयोजकं वैशिष्ट्यादिकं च निरूपितं भवति । एवम्भूतस्य हरेः अङ्घ्री चरणौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । तयोः निष्ठा व्यवस्था नियतावस्थितिः तदेकासक्तचित्ततेति यावत् । 'निष्ठोत्कर्षे व्यवस्थायाम्' इत्यभिधानात् । यद्वा निष्ठा निष्पत्तिः प्राप्तिरिति यावत् । 'निष्ठानिष्पत्तिनाशान्ताः' इत्यमरः । सैव अतिशयितो गुणः अतिगुणः । 'प्रादयो गताद्यर्थे प्रथमया'(वा)[११] इति समासः । अथवा गुणान् शमदमादीन् अतिक्रान्तो गुणः अतिगुणः मुख्यो गुण इत्यर्थः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'(वा)[१२] इति समासः । तेन कारणेन गुरुतमः । इष्टानिष्टप्राप्तिपरिहारोपायं गृणाति उपदिशति इति गुरुः । अतिशयेन गुरुः गुरुतमः । 'अतिशायने तमबिष्ठनौ' (पा.सू-५.३.५५) इति तमप् प्रत्ययः । स च असौ श्रीमदानन्दतीर्थत्रैलोक्याचार्यश्च । अत्र 'एकविशेषणविशिष्टे इतर-विशेषणान्वयः' इति न्यायेन 'विशेषणं विशेष्येण बहुलम्' (पा.सू-२.१.५७) इति वा कर्मधारयसमासो बोध्यः । एवमन्यत्रापि द्रष्टव्यम् । श्रीमान् नित्य-ज्ञानादिगुणैः शोभमानः योऽयं आनन्दतीर्थः । आनन्दो विष्णुः । 'आनन्दो ब्रह्मेति व्यजानात्' (तै.भृगुवल्ली-६) इति श्रुतेः तत्प्रतिपादकम् । अथवा आनन्दः सुखं तत्साधनम् । तार्यते संसारात् अनेन इति तीर्थं शास्त्रं यस्य स तथोक्तः ।

अथवा श्रीमांश्च असावानन्दश्च श्रीमदानन्दः । श्रीमान् विष्णुः । श्रीमत् सुखं

---

११. 'जीविकोपनिषदावौपम्ये' (पा.सू.१-४-७९) इति सूत्रस्य सम्बन्धि वार्तिक-मिदम् ।

१२. 'जीविकोपनिषदावौपम्ये' (पा.सू.१-४-७९) इति सूत्रस्य सम्बन्धि वार्तिक-मिदम् ।

वा। श्रीमत्वं च ऐश्वर्यप्रभृतिगुणानामुपलक्षणम्। सुखस्य श्रीमत्वं च दुःखादि-दोषाननुषक्तत्वम्। तथा च ऐश्वर्यादिगुणविशिष्टब्रह्मप्रतिपादकनिर्दुष्टसुखसाधनं वा। तीर्थं शास्त्रं यस्येति श्रीमदानन्दतीर्थः। अन्यप्रणीतं च शास्त्रं निरस्तैश्वर्यादि-कल्याणगुणब्रह्मप्रतिपादकं आत्यन्तिकदुःखसाधनं चैवेति भावः। 'तॄ प्लवनतरणयोः' इत्यस्मात् करणे थ प्रत्ययः।

यद्वा आनन्दः तीर्थमुपायो यस्य इत्यर्थः। तत्प्रसादातिरिक्तपुमर्थसाधनानपेक्ष इति भावः। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इत्यभिधानम्। अथवा आनन्दो विष्णुरेव तीर्थं योनिः उत्पादकः यस्य इत्यर्थः। 'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि' इत्यभिधानम्। आनन्दरूपस्य हरेः तीर्थभूता धीर्यस्य इति वा। त्रयो लोका एव त्रैलोक्यम्। चतुर्वर्णादिभ्यः स्वार्थे ष्यञ् वाच्यः, 'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्' (वा) इति ष्यञ् प्रत्ययः। स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति त्रैलोक्यशब्दस्य क्लीबत्वम्। तस्य आचार्यः मन्त्रव्याख्यानकर्ता। 'मन्त्र-व्याख्यानकृदाचार्यः' इत्यमरः। धर्मानाचरितुं आचारयितुं वा परावरार्थान् प्रतिपादयितुं वा शिष्यबुद्धिं विस्तारयितुं वा योग्यः आचार्यः। 'चरेराङ्गि चागुरौ'[१३] (वा) इत्युक्तत्वात् आङ् पूर्वाच्चरगतिभक्षणयोरित्यस्मात् 'ऋहलोर्ण्यत्' (पा.सू-३.१.१२४) इत्यहर्थे ण्यत् प्रत्ययः। कस्मादाचार्यः। आचारं ग्राहयति 'आचिनोति अर्थान् आचिनोति बुद्धिं इति वा इति तन्निर्वचनात्। 'आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते'(लिङ्ग.पु उत्तरभाग अ.२०श्लो-२०) इति वचनात्। अत एव गुरुतम इति भावः। अत्र त्रैलोक्याचार्यपदस्य मुख्यप्राणे रूढ्या विशेष्यपरत्वम्। अन्ययोस्तु रूढ्यविवक्षायां विशेषणपरत्वं बोध्यम्। अथवा 'विशेषणं विशेष्येण बहुलम्' (पा.सू-२.१.५७) इति बहुलग्रहणात् विशेषणसमासेन विशेषणस्य परनिपातः। तस्य पादोज्ज्वजलजे

---

१३. **'गदमदचरयमश्चानुपसर्गे'** (पा.सू-३.१.१००) **इति सूत्रस्य सम्बन्धि वार्तिक-मिदम्।**

उज्ज्वले प्रकाशमाने च ते जलजे च उज्ज्वलजलजे । पादौ उज्ज्वलजलजे इव 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा.सू-२.१.५६) इति समासः रक्ताम्भोजवतो वर्तेते इति भावः । तयोः लसन्तः शोभमानाः पांसवः रेणवः 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रज' इत्यमरः । अस्मान् एते च अहं च वयं तान् अस्मान् इत्यर्थः । 'त्यदादिभिः सह समासोक्तौ यत्परं तदवशिष्यते' (वा) इति वचनात् एतच्छब्देनात्र बुद्धिस्थो योग्य एव जनो ग्राह्योऽतो न कश्चिद्दोषः अथवा 'सप्तमी शौण्डैः' (पा.सू-२.१.४०) इतिवत् बहुवचनमाद्यर्थे। तथा च मदादिकान् सर्वसज्जनान् इत्यर्थः । यद्वा 'अस्मदो द्वयोश्च' (पा.सू-२.१.५९) इत्येकत्वे बहुवचनविधानात् मामित्यर्थः ।

'एते वां नावादयः आदेशा अनन्वादेशे वा वक्तव्याः'(वा)[१४] इत्युक्तत्वात् नः इत्यनुक्तिर्न दोषः ॥ **पुनन्तु** पूतान् शुद्धान् रागादिदोषरहितान् कुर्वन्तु इत्यर्थः । 'पूञ् पवने' लोट् । ननु एषां पांसूनां कथमस्मदादिपवित्रीकरणसामार्थ्यमित्यतः आह– **वाचामित्यादिना** ॥ शारदा भारती । शार्यते हिंसाद्यनर्थः प्राप्यते अनेनेति शारं अज्ञानं तत् द्यति खण्डयति । शत्रूणां शारं हिंसाद्यनर्थं ददातीति वा । यस्मात् सैव सरस्वती इत्याद्युक्तेः । यत्र येषु पांसुषु विषये 'सप्तम्यास्त्रल्' (पा.सू-४.३.१०) इति सप्तम्यन्तात् त्रल् ॥ **प्रेमभारम्** ॥ प्रेम्णः स्नेहस्य । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । भरः अतिशयः स एव भारः । तं स्नेहातिशयं भक्तिमिति यावत् 'प्रज्ञादिभ्यश्च' (पा.सू-५.४.३८) इति स्वार्थे अण् प्रत्ययः 'अणातिशयो भरः' इत्यमरः । अथवा प्रेम्णः भक्तेः भारं दार्ढ्यं इत्यर्थः । 'ज्ञानपूर्वः परः स्नेहो नित्यो भक्तिरितीर्यते' (म.भा.ता.नि.अ-१,श्लो-१०५) इति वचनात् ॥ **बभार** दधार । डुभृञ् धारणपोषणयोर्लिट् । किं तावतापीत्यतो पांसून् विशिनष्टि **वाचां यत्र प्रणेत्री इत्यादिना** ॥ उच्यते प्रतिपाद्यते याभिरिति वाचः आगमाः । 'वच परिभाषणे' इत्यस्मात् क्विबित्यादिना करणे क्विप् प्रत्ययः । तासां, सकलश्रुतीतिहासपुराणादितात्पर्यनिर्णायकलिङ्गेन परममुख्यवृत्या

१४. 'त्वामौ द्वितीयायाः' (पा.सू.८.१.२३)इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

विष्णुपरत्वेन नेत्री प्रतिपादयन्तीत्यर्थः । 'णीङ् प्रापणे' इत्यस्माद्धातोः 'ण्वुल्तृचौ' (पा.सू-३.१.१३३) इति कर्तरि तृच् प्रत्यये कृते 'ऋन्नेभ्यो ङीप्' (पा.सू-४.२.५) इति ङीप् । अथवा वेदादिवाचां **प्रणेत्री** स्वामिनी अभिमानिनी इति यावत् । अथवा सकलवागाभिमानिनीत्यर्थः । अत्र तु 'षष्ठी शेषे' (पा.सू-२.३.५०) इति षष्ठी ॥ **त्रिभुवनमहिता** ॥ त्रयाणां भुवनानां समाहारः त्रिभुवनम् । (पात्रादौ न) 'पात्राद्यन्तस्य न' (वा) इति वचनात् 'द्विगोः' (पा.सू.४.१.२१) इति न ङीप् । तस्मिन् महिता पूजिता । अत्र त्रिभुवनशब्देन तन्निष्ठो जनोऽत्र लक्ष्यते । तेन पूजितेत्यर्थः । मह पूजायां इत्यस्मात् निष्ठेति भूतार्थे कर्मणि क्तः ।'मतिबुद्धिपूजार्थेभ्यश्च' (पा.सू-३.२.१८८) इति वर्तमाने क्तप्रत्ययविधाने तु 'क्तस्य च वर्तमाने' (पा.सू-३.३.६७) इति त्रिभुवनशब्दस्य षष्ठ्यन्तत्वापत्या 'क्तेन च पूजायां' (पा.स-२.२.१२) इत्यस्य प्रसङ्गेन समासो न स्यात् । तथा च भारत्याः सकलवागभिमानित्वात् तदाराधनमन्तरेण न कोऽपि वाग्व्यवहारः सम्पद्यते इति तदर्थतया सर्वैः पूज्यते इति भावः ।

ननु अस्याः एतादृग्गुणवत्त्वमभिज्ञातुमशक्यम् । 'प्रायो वेत्तुं न शक्यन्ते भक्त्याद्यास्त्रीषु यत्नतः' (महा.भा.ता.नि.अ-२.श्लो-३८) इत्याद्युक्तेरित्यत-स्तदनुमापकं निरूपयंस्तद्विशिनष्टि **शारदेति** ॥ **शारदेन्दुज्योत्स्ना-भद्रस्मितश्रीधवलितककुभा** ॥ शरदि भव शारदः । 'तत्र भवः' (पा.सू-४.३.५३) इत्यण् प्रत्ययः । एवम्भूतो य इन्दुः चन्द्रः तस्य ज्योत्स्ना चन्द्रिका 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । तद्वत् भद्रं शोभमानं स्मितं ईषद्धसितं स्मिङीषद्धसने इत्यस्मात् 'नपुंसके भावे क्तः' (पा.सू-३.३.११४) इति क्तप्रत्ययः । तस्य श्रीः कान्तिः । 'श्रीर्विषे च सरस्वत्यां लक्ष्म्यां कान्तौ च सम्पदि' इति विश्वः । तद्वत् भद्रा या स्मितश्रीः इति वा । तया धवलिताः प्रकाशिताः । धवलः सितो वर्णः । 'अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इत्यमरः । स सञ्जातो यासां ताः । 'धवलिताः ककुभः दिशः यया सा तथोक्ता । 'तदस्य सञ्जातं तारकादिभ्य इतच्' (पा.सू-५.२.२७) इति इतच् प्रत्ययः ।

'दिशस्तुः ककुभः काष्टा आशाश्च हरितश्च ताः' इत्यमरः । 'वष्टिभागुरिरल्लोप-मवाप्योरुपसर्गयोः । टापश्चैव हलन्तानां यथा वाचा निशा दिशा' (व्या. महाभाष्यम्) इति वचनात् हलन्तादपि टाप् । इदं च 'तच्च नैसर्गिकं रूपं द्वात्रिंशल्लक्षणैर्युतम्' (महा.भा.ता.नि.अ.२ श्लो-३८) इत्यस्योपलक्षणम् । तेन 'यासां रूपं गुणास्तासां भक्त्याद्याः' (महा.भा.ता.नि.अ-२.श्लो-३७) इति वचनावधारितव्याप्तिकमुक्तलक्षणवत्सौन्दर्यलिङ्गमुक्तं भवति ।

अयमत्र प्रयोगः । भारती भक्त्यादिविशिष्टगुणवती द्वात्रिंशल्लक्षणोपेतत्वात् लक्ष्मीवदिति । अत्र स्त्रीत्वे सतीति हेतौ विशेषणीयम् । ज्ञानादिविशिष्टगुणवतीति वा साध्यं करणीयम् । तेन न पुरुषे व्यभिचारः । 'आसुरीणां वरादेस्तु वपुर्मात्रं भविष्यति । न लक्षणान्यतस्तासां नैव भक्तिः कथञ्चन' । (महा.भा.ता.नि.अ. २.श्लो-३९) इत्युक्तेः हेतोरेवावगमनात् नासुरीषु स्त्रीषु व्यभिचार इति भावः ।

यद्वा वाग्देवतायाः प्रसन्नीकरणौपयिकं सुमुखत्वमाचष्टे– **शारदेति** ॥ अथवा रुद्रादिभ्यो व्याख्यातुं प्रवृत्तां शारदां वर्णयति– **शारदेति** ॥ अत्र स्मितश्रीपदेन व्याख्यानप्रयुक्तश्रमाद्यभावः । प्रसादपूर्वकव्याख्यातृत्वं च ध्वन्यते । तदुक्तं 'यस्याः प्रसादात्परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः । माता च येषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ' । (महा.भा.ता.नि.अ.२-१६८) इत्यादि । तथा च अतिमहत्वौपयिकसकलविद्यास्वामित्वादिगुणवद्भारत्युपास्यत्वेन विशिष्टतमत्वात् श्रीमद्भगवत्पादाचार्यश्रीमच्चरणाम्भोजरेणूनां अस्मदादिपवित्रीकरणसामर्थ्ययुक्त-मेवेति भावः । अत्रादितः सकलसौभाग्यदेवताकमलाविशिष्टतया भगवत्सङ्कीर्तनेन मङ्गलात्मकश्रीशब्दयुक्तमगणप्रयोगेन चायं स्तवो न केवलं कैवल्यप्रदः अपि तु ऐहिकपुरुषार्थप्रदश्चेति सूचितम् । ननु अस्मन्मते स्वातन्त्र्येण भगवदितरदेवतो-पासनस्यानङ्गीकारादस्य ग्रन्थस्य वायुदेवताकत्वेऽपसिद्धान्तः । विष्णुदेवताकत्वे तु वायुस्तुतित्वप्रसिद्धिव्याघातः अतः किं देवताकोऽयं ग्रन्थः इति । उच्यते अन्तर्यामितया विष्णुः तत्प्रतिमात्वेन तु वायुः प्रतिपाद्यत इति । परममुख्यदेवता

विष्णुः । वायुश्च मुख्यदेवता प्राणसंवादादिप्रतिपादकवाक्यवदित्युभयदेवताकोऽयं ग्रन्थः । कुतः । श्रीमद्विष्णवङ्घ्रिनिष्ठेत्युपक्रमात् स्तुतिमकृतहरेः वायुदेवस्य चास्येत्युपसंहारात् । मध्येऽपि तत्र तत्र भगवद्गुणनिरूपणाच्च । वायोर्विष्णुमुख्य-प्रतिमात्वं च 'अथ ह य एवायं मुख्यप्राणस्तदुद्गीथमुपासांचक्रिरे । तद्धासुरा ऋत्वा विदध्वसुः' (छां.उ.१.२.७) इति छान्दोग्योपनिषत्सु प्रसिद्धम् । अत एव वक्ष्यमाणसर्वान्तर्यामित्वाद्यविरोधः । वायोः परममुख्यत्वेन सर्वान्तर्यामित्वादेर-सत्त्वेऽपि मुख्यत्वेन तस्य सम्मतत्वात् तदुक्तं– 'मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते' (अनु.व्या-१.४.५१) इति दिक् ॥ १ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

**निर्दोषं गुणसागरं श्रुतिमतिध्यानोत्थसद्बुद्धिभिः ।**
**गम्यं नम्यमुदारचक्रवरशंखाभीतिभृत्सद्भुजम् ॥**
**भैष्मीसत्रजिदात्मजाभुजसमाश्लिष्टं वरिष्ठं हरिम् ।**
**सच्छक्रासितमण्युरुप्रभमजं ज्ञानप्रदं नौम्यहम् ॥**

**अथ त्रिविक्रमार्यास्यसरसीरुहनिसृतेः ।**
**हरिवायुस्तुतेर्व्याख्यां करवाणि यथामति ॥**

**सुगमा वायुपरता न प्रायोऽत्र प्रदर्श्यते ।**
**सुदुर्गमत्वतो विष्णुपरतैव प्रकाश्यते ॥**

तत्रादौ विष्णोः सर्वोत्तमत्वं कैमुत्येन साधयन् तत्पदपांसून् महामाहात्म्योपेततया स्तुत्वा प्रार्थयते– **श्रीमद्विष्णवङ्घ्रीत्यादिश्लोकद्वयेन** ॥ श्रीमद्विष्णोरङ्घ्र्योर्निष्ठाः नितरां स्थिताः अतिशयितगुणैर्विशिष्टज्ञानभक्त्यादिभिर्गुरुतमाः श्रेष्ठतमा ये श्रीमदा-नन्दतीर्थत्रैलोक्याचार्यपादाः तैस्समर्पितैः उज्ज्वलजलजैः लसन्त शोभमानाः । श्रीमद्विष्णवङ्घ्रिनिष्ठाश्च ते लसन्तश्च ते पांसवश्च । ते अस्मान् पुनन्त्वित्यन्वयः ।

यद्वा श्रीमद्विष्णोरङ्घ्र्योर्निष्ठा संस्थितिः सैवातिगुणस्तेन गुरुतमाः श्रीमतां ब्रह्मादीनामानन्दो येभ्यस्ते तथोक्ताः। पवित्रत्वात्तीर्थशब्दवाच्याः। त्रैलोक्यं आ सम्यक् चार्यं चरणीयम्। चरणोपलक्षितसमस्तचेष्टायुक्तत्वेन करणीयं येषां ते त्रैलोक्याचार्याः लोकत्रयचेष्टाप्रदा इति यावत्। पद्यन्ते ज्ञायन्ते इति पादाः योगिध्येयाः। उज्वलाः लक्ष्म्यादिसमर्पितजलजैर्लसन्तश्च ये पांसवस्ते। अथवा पादो ज्ञानम्। 'पदलृगतौ' इति धातोः। तेन उज्वलाः पादोज्वलाः जलजलाः जडजडाः अतिमन्दाः अपि पादोज्वलाः यत्सेवया भवन्ति ते तथा ते च ते सत्पांसवश्चेति।

यद्वा श्रीमद्विष्णुश्चासौ अङ्घ्रिनिष्ठातिगुणगुरुतमश्रीमदानन्दतीर्थत्रैलोक्याचार्यश्चेति विशेष्यपूर्वपदकर्मधारयः। अङ्घ्रिषु पादेषु अंशभूतेषु समस्तभूतेषु निष्ठा नितरां व्याप्तोऽङ्घ्रिनिष्ठः। 'पादोऽस्य विश्वा भूतानि' (पुरुषसूक्तम्-३) इति श्रुतेः। अतिगुणो गुणातीतः। अतिशयितगुणो वा। गुरुतमश्रीमान्। गुरुतमशोभादिमान्। आनन्दतीर्थसुखनिधिस्त्रैलोक्याचार्यश्चेति। तस्य पादोज्ज्वलजयोर्लसन्तः पांसव इति।

अथवा श्रीमद्विष्ण्वङ्घ्रिश्चासौ निष्ठातिगुणगुरुतमश्रीमदानन्दतीर्थत्रैलोक्याचार्य-पादोज्वलजलजश्चेति पूर्ववद्विशेष्यपूर्वपदः। निष्ठा भक्त्युत्कर्षः। तल्लक्षणातिशयित-गुणेन गुरुतमः श्रीमदानन्दतीर्थः त्रैलोक्याचार्यः पादोज्वलो ज्ञानोज्वलश्च यद्भजनाद्बभूव स तथोक्तः। जलं जलोपलक्षितभूताद्यात्मकं जगज्जायतेऽस्माल्लीयते चास्मिन्निति जलजलस्तादृशाङ्घ्रौ सन्तो विद्यमानाः पांसव इति। अवयवावयविनो-रत्यन्ताभेदात्पादस्य जगज्जन्मादिकर्तृतोक्तिर्युक्ता। पादपांसूनां माहात्म्यान्तरं चाह **॥ वाचां यत्रेति ॥** वाचां प्रणेत्री वेदवाचामभिमानिनी त्रिभुवनमहिता शारदा। अतीतानागतवर्तमानसर्वसंवत्सरेषु विद्यमाना अनादिनित्येति यावत्। शारदेन्दु-ज्योत्स्नाभद्रस्मितश्रिया धवलितककुभा महालक्ष्मीर्यत्र पादपांसुषु प्रेमभारं बभार ते पांसव इति सम्बन्धः ॥ १ ॥

**उत्कण्ठाकुण्ठकोलाहलजवविदिताजस्रसेवानुवृद्ध-**
**प्राज्ञात्मज्ञानधूतान्धतमससुमनोमौलिरत्नावलीनाम् ।**
**भक्त्युद्रेकावगाढप्रघटनसघटात्कारसङ्घृष्यमाण**
**प्रान्तप्रेख्याङ्घ्रिपीठोत्थितकनकरजःपिञ्जरारञ्जिताशाः ॥ २ ॥**

## कविकर्णामृतम्

पुनः कथं भूता इत्याकाङ्क्षायां तानेव विशिनष्टि– **उत्कण्ठेति ॥ उत्कण्ठाकुण्ठ-कोलाहलजवविदिताजस्रसेवानुवृद्धप्राज्ञात्मज्ञानधूतान्धतमससुमनोमौलि-रत्नावलीनाम् ॥** उत्कण्ठा रणरणिका । अलब्धविषयवेदना । तदुक्तम्– 'रागे त्वलब्धविषये वेदना महती तु या । संशोषणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः' इति । तया अकुण्ठौ प्रवृद्धौ । कोलाहलजवौ कलकलसम्भ्रमवेगौ । ताभ्यां विदिता ज्ञाता । अजस्रसेवा अनवरतपरिचर्या । तया अनुवृद्धं आनुपूर्व्येण प्रवृद्धम् । प्रकर्षेण जानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञः । प्रज्ञादित्वात् स्वार्थे अण् प्रत्ययः । अतति व्याप्नोतीत्यात्मा । औणादिको मनिन्[१५] प्रत्ययः । स चासावात्मा च । परमात्मेत्यर्थः । तस्मिन् ज्ञानं अध्यात्मज्ञानम् । तेन धूतं निरस्तं अन्धतमसं महानरकविशेषो येषाम् । 'अवसमन्धेभ्यस्तमसः' (पा.सू-५.४.७९) इति समासान्तोऽच् प्रत्ययः । ते च ते सुमनसश्च । सुमनसो देवाः । 'मालत्यां पण्डिते पुष्पे देवे च सुमनोऽभिधा' इति विश्वप्रकाशः । तेषां मौलयः किरीटाः । तेषु रत्नानि उत्कृष्टमणयः । तेषामावलयः । तासां तथोक्तानाम् ॥ **भक्त्युद्रेकाव-गाढप्रघटनसघटात्कारसङ्घृष्यमाणप्रान्तप्रेख्याङ्घ्रिपीठोत्थितकनकरजःपिञ्जरा-रञ्जिताशाः ॥** भक्तेरुद्रेकः उत्कर्षः तेन अवगाढं दृढम् । प्रघटनं सङ्घट्टनम् । तेन सघटात्कारम् । घटात्कारोऽनुकरणशब्दः । तेन सह वर्तनं यथा भवति तथा

---

**१५. तथाहि दशपादिका– 'सातिभ्यां मनिन्मनिणौ' इति । स्यतीति साम । अततीत्यात्मा ।**

सङ्घृष्यमाणः सम्पीड्यमानः प्रान्तः पर्यन्तः यस्य तत् । प्राग्र्यं श्रेष्ठम् । 'तत्र साधुः' (पा.सू-४.४.९८) इति यत्प्रत्ययः । अङ्घ्रिपीठं पादपीठम् । तस्मादुत्थितानि ऊर्ध्वं गतानि कनकस्य रजांसि । तैः पिञ्जरं यथा भवति तथा आरञ्जिताः समन्तादरुणीकृताः आशाः दिशो यैस्ते तथोक्ताः । एवं विधप्रौढिमाटीकमानाः श्रीमदानन्दतीर्थश्रीमच्चरणनळिनरेणवोऽस्मान् पुनन्त्विति पूर्वेण सम्बन्धः ॥ २ ॥

## बालबोधिनी

पुनः कथम्भूताः पांसव इत्याकाङ्क्षायां तानेव विशिनष्टि– **उत्कण्ठेति ॥ उत्कण्ठाकुण्ठकोलाहलजवविदिताजस्रसेवानुवृद्धप्राज्ञात्मज्ञानधूतान्धतमससुमनोमौलिरत्नावलीनाम् ॥** उत्कण्ठौ प्रवृद्धौ 'आयाल्लिकमुत्कण्ठा स्यादुत्कालिका रतिश्च रणरणिका । 'औत्कंण्ठ्यं हृल्लेखः' इति हलः । तादृशौ यौ कोलाहलजवौ कलकलध्वनिवेगौ ताभ्यां विदिता या अजस्रम् अनवरतं सेवा परिचर्याजस्रसेवा तया अनुवृद्धम् आनुपूर्व्येण वृद्धं प्रतिदिनमृद्धमित्यर्थः । यत् प्राज्ञात्मज्ञानं प्रकर्षेण जानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः 'प्रज्ञादिभ्यश्च' (पा.सू-५.४.३८) इति प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः । अतति व्याप्नोतीत्यात्मा औणादिको मनिन्प्रत्ययः । स चासावात्मा चेति प्राज्ञात्मा सर्वज्ञविष्णुस्तस्य यज्ज्ञानं तेन धूतं निरस्तम् अन्धतमसम् अज्ञानं महानरकविशेषो वा येषां ते तथोक्ताः 'अवसमन्धेभ्यस्तमसः' (पा.सू-५.४.७९) इति समासान्तोऽच् प्रत्ययः । तादृशा ये सुमनसो देवाः 'मालत्यां पण्डिते पुष्पे देवे च सुमनोऽभिधा' इति विश्वः । तेषां मौलयः किरीटानि तेषु खचितानि रत्नानि मौलिरत्नानि तेषामावलयः पङ्क्तयस्तासाम् । **भक्त्युद्रेकावगाढप्रघटनसघटात्कारसङ्घृष्यमाणप्रान्तप्राग्र्याङ्घ्रिपीठोत्थितकनकरजःपिञ्जरारञ्जिताशाः ॥** भक्तेरुद्रेक उत्कर्षस्तेन अवगाढं दृढं यत्प्रघटनं सङ्घट्टनं तेन घटात्कारोऽनुकरणध्वनिस्तेन सह वर्तनं यथा भवति तथा सङ्घृष्यमाणः सम्पीड्यमानः सघटात्कारसङ्घृष्यमाणस्तादृशः प्रान्तः पर्यन्तो यस्य तत्तथोक्तम् । तादृशं प्राग्र्यमुत्तमं 'तत्र साधुः' (पा.सू-४.४.९८)

इति यत्प्रत्ययः । यत् अङ्घ्रिपीठं पादपीठं तस्मात् उत्थितानि ऊर्ध्वं गतानि यानि कनकस्य रजांसि तैः पिञ्जराः पीतरक्ताः 'पिञ्जर पीतरक्तः । स्यात्' इति हलः । अत एव आसमन्ताद्रञ्जिता अलंकृता आशा दिशो यैस्ते तथोक्ताः । ततो रजः पिञ्जराश्च ते आरञ्जिताशाश्चेति कर्मधारयः ।

यद्वा कनकरजोभिः पिञ्जरं पीतरक्तं यथा भवति तथा आ समन्तात् रञ्जिता अरुणीकृता आशा दिशो यैस्ते इति वा । श्रीमदानन्दतीर्थत्रैलोक्याचार्य-पादोज्ज्वलजलजलसत्पांसवोऽस्मान् पुनन्तु इति पूर्वेणान्वयः ॥ २ ॥

## मन्दबोधिनी

पुनः कथं भूताः पांसव इत्याकाङ्क्षायां तानेव विशिनष्टि– **उत्कण्ठेति** ॥ **उत्कण्ठाकुण्ठकोलाहलजवविदिताजस्रसेवानुवृद्धप्राज्ञात्मज्ञानधूतान्धतमस-सुमनोमौलिरत्नावलीनाम्** ॥ उत्कण्ठेत्यारभ्य मौलिरत्नावलीनामित्यन्तमेकं पदम् । भक्त्युद्रेकेत्यारभ्य रञ्जिताशा इत्यन्तमपरं पदम् । एतत्पदद्वयं मिलित्वा पांसूनां विशेषणमिति ज्ञातव्यम् । उत्कण्ठा हरिशुश्रूषायां परमौत्सुक्यम् । यद्वा रणरणिका अलब्धविषयवेदना । कोलाहलः हरिसेवायां अहं पूर्वमहं पूर्वमिति सन्तोषेण प्रसरः । जवः हरिपरिचर्यायां आलस्यमन्तरा वायुवेगमनोवेगवत् अत्यन्तवेगः । उत्कण्ठया अकुण्ठौ अभिवृद्धौ च तौ कोलाहलजवौ च उत्कण्ठाकुण्ठकोलाहलजवौ, ताभ्याम् । विदिता । सज्जनैरस्माभिरप्येवमेव शुश्रूषा कर्तव्येति विज्ञाता च सा अजस्रसेवा च नित्यशुश्रूषा च तया क्रमेण अभिवृद्धम् । इदं तु ज्ञानस्य विशेषणम् । प्राज्ञः । प्रकर्षेण जानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः । प्रज्ञादित्वात् स्वार्थेऽण् प्रत्ययः ।

यद्वा प्रकर्षेण आ समन्ताज्जानातीति प्राज्ञः स्वातन्त्र्येण स्वपरगताखिल-विशेषज्ञानवानित्यर्थः । स चासावात्मा च परमात्मा अस्य ज्ञानं प्राज्ञात्मज्ञानम् । अनुवृद्धं च तत् प्राज्ञात्मज्ञानं च अनुवृद्धप्राज्ञात्मज्ञानम् । तेन । धूतम् निरस्तम् । अन्धतमसं अज्ञानं येषां ते तथोक्ताः । 'अवसमन्धेभ्यस्तमसः' (पा.सू-५.४.

७९) इति समासान्तेऽच् प्रत्ययः । ते च ते सुमनसश्च देवाश्च । 'मालत्यां पण्डिते पुष्पे देवे च सुमनोऽभिधा' इति विश्वप्रकाशः । तेषां मौलिषु किरीटेषु खचितानि च तानि रत्नानि च नवविधरत्नानि तेषां आवलयः श्रेणयः तासाम् ॥ **भक्त्युद्रेकावगाढप्रघटनसघटात्कारसङ्घृष्यमाणप्रान्तप्राग्र्याङ्घ्रिपीठोत्थित-कनकरजःपिञ्जरारञ्जिताशाः ॥** यत् भक्त्युद्रेकावगाढप्रघटनम् । भक्तेः उद्रेकः उत्कर्षः भक्त्युद्रेकः । तेन अवगाढं दृढं च तत् प्रघटनं च सङ्घट्टनं च तेन । सघटात्कारमिति क्रियाविशेषणम् । घटात्कारो ठङ्कारः । पटकार इत्यादिवत् अनुकारः शब्दः । घटात्कारेण सहितं यथा भवति तथा सङ्घृष्यमाणौ सम्यक् घृष्यमाणौ सम्पीड्यमानौ प्रान्तौ प्रान्तभागौ ययोः पादपीठयोः ते तथोक्ते । प्राग्र्ये श्रेष्ठे च ते अङ्घ्रिपीठे पादुकापरनामके पादपीठे च प्राग्र्याङ्घ्रिपीठे । सङ्घृष्यमाणप्रान्ते च ते प्राग्र्याङ्घ्रिपीठे च सङ्घृष्यमाणप्रान्तप्राग्र्याङ्घ्रिपीठे । ताभ्याम् उत्थितानि उद्गतानि च तानि कनकरजांसि सुवर्णकणानि । तैः पिञ्जरा मिश्राः आरञ्जिताः आ समन्ताद्रञ्जिताः अरुणीकृताः । 'रञ्ज रागे' इति धातोः, आशाः दिशाः यैस्ते आरञ्जिताशाः । 'आशादिगभिलाषयोः' इत्यमरः । एवंविधां महतीं प्रौढिमावहन्तः श्रीमदाचार्यपादपांसवः अस्मान् पुनन्त्विति पूर्वश्लोकेनान्वयः ॥ २ ॥

## भावप्रदीपिका

एवं भगवत्पादाचार्यश्रीमच्चरणनलिनरेणूनां पवित्रीकरणसामर्थ्यानुमापक भारत्युपास्यत्वमुक्त्वाऽनुमापकान्तरं निरूपयितुकामो रुद्रादिसुरवरनिकरोपास्य-त्वेनापि तान् विशिनष्टि– **उत्कण्ठेति** ॥ **उत्कण्ठाकुण्ठकोलाहलजवविदिताज-स्रसेवानुवृद्धप्राज्ञात्मज्ञानधूतान्धतमससुमनोमौलिरत्नावलीनाम्** ॥ उत्कण्ठया आकुण्ठौ अप्रतिहतौ कोलाहलजवौ । कोलाहलः कलकलशब्दः । 'कोलाहलः कलकलः' इत्यमरः । जवः वेगः । ताभ्यां विदिता ज्ञाता या अजस्रसेवा निरन्तरशुश्रूषा तया कारणीभूतया अनुवृद्धं सेवानुसारेण वृद्धिमत् इत्यर्थः । अत्र उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति 'कर्तृकरणयोस्तृतीया' (पा.सू-

२.३.१८) इति करणत्वविवक्षया तृतीयामेव निर्वाह्य 'कर्तृकरणे कृता बहुलम्' (पा.सू-२.१.३२) इति तृतीयातत्पुरुषः कार्यः । हेतुत्वमात्रविवक्षायां तु अनुर्लक्षण इति कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' (पा.सू-२.३.८) इति द्वितीया स्यात् । ततश्च ('कर्मप्रवचनीयानां न समासः'[१६]) 'कर्मप्रवचनीयानां प्रतिषेधः'(वा[१७]) इति निषेधात् समासो न स्यात् । 'गुरुप्रसादो बलवान्'(गुरुस्तोत्र.श्लो-९) इत्याद्युक्तेः तत्सेवैव मुख्यं कारणं न तु श्रवणादिकमिति भावः । एवं विधं यत् प्राज्ञात्मज्ञानं प्रकर्षेण आसमन्तात् सम्यग्वा जानातीति वा प्राज्ञः स्वभावेनैव सर्वपदार्थाशेषविशेषयथार्थज्ञानवान् इत्यर्थः । ज्ञानमात्रस्य भ्रान्तादिसाधारणत्वात् । 'आतश्चोपसर्गे' (पा.सू-३.१.१३६) इति कप्रत्ययः । एवं विधो यः आत्मा आदानादिकर्ता । आप्नोतेर्मनिन् । पकारस्य च तकारः । आङ् पूर्वात् ददातेः स एव प्रत्ययः । आकारलोपो दस्य तत्वं च । आङ् पूर्वादत्तेर्वा मनिन् तत्वं च ।

यद्वा तत्पूर्वात्तनोतेर्मन् । तथा च सर्वमाप्नोति नियमादिना आदत्ते स्वीयतयेति वा । शुभविषयानत्तीति वा । तनोति नित्यविस्तृतचिदात्मकरूपवान् सर्वत्र विद्यते इति वा आत्मा । निर्वचनसामर्थ्यात्सर्वमुन्नेयम् । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते' (गी.भा.अ.११. श्लो.३७) इति वचनात् । अथवा आङ् पूर्वात् तनोतिपूर्वात् माङ् माने इत्यतो 'डुमिङ् प्रक्षेपणे' इत्यतो वा । 'मीञ् हिंसायां' इत्यतो डनच् प्रत्ययः । तथा च सर्वदेशकालगुणैः 'आततत्वात् व्याप्तत्वात् मातृत्वात् सर्वज्ञत्वात् सर्वदोषनिरासकत्वाच्च सर्वसंहर्तृत्वाच्च आत्मेत्युक्तं भवति । 'आततत्वाच्च

---

१६. कर्मप्रवचनीयानां न समासः इति वार्तिकम् न दृश्यते । अतः अत्र 'कर्मप्रवचनीयानाम् प्रतिषेधः' इति वार्तिकं स्यात् इति मत्वा तं वार्तिकम् संयोजितम् ।

१७. 'जीविकोपनिषदावौपम्ये' (पा.सू.१-४-७९) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।

मातृत्वादात्मेति परमो हरिः’(विष्णु त.निर्णयः)इति वचनात् । तस्य विष्णोरेतद्धर्मप्रकारकं यज्ज्ञानम् । स्वरूपमात्रज्ञानस्य दैत्यादीनां सत्वात् । तेन धूतं निवृत्तम् । स्वावच्छिन्नान् अन्धान् अज्ञान् करोति अन्धयति । ‘तत्करोति तदाचष्टे’[१८] इति णिच् । अन्धयतीति अन्धम् । पचादित्वात् ‘अवसमन्धेभ्यस्तमसः’ (पा.सू-५.४.७९) इत्यच् प्रत्ययः । धूतं अन्धतमसं येषां ते तथोक्ताः । एवं विधा ये सुमनसः देवाः रुद्रादय इत्यर्थः । ‘मालत्यां पण्डिते पुष्पे देवे सुमनसोऽभिधा’ इत्यभिधानम् । तेषां मौलयः मुकुटानि । ‘कोटीरं मुकुटं मौलिर्द्वयोरुष्णीष इत्यपि’ इत्यमरः । तासाम् ॥ **भक्त्युद्रेकावगाढप्रघटन-सघटात्कारसङ्घृष्यमाणप्रान्तप्राग्र्याङ्घ्रिपीठोत्थितकनकरजःपिञ्जरारञ्जिताशाः ॥** भक्तेः उद्रेकेण अतिरेकेण अवगाढं अतिदृढम् । गाढबाढदृढानि च । अत्र अव इत्युपसर्गो दाढर्यातिशयस्याभिधायकः न त्वर्थान्तरस्य । तेन न कोशविरोधः । एवंविधं यत्प्रघटनं सङ्घट्टनम् तेन सघटात्कारसङ्घृष्यमाणः नित्यसापेक्षत्वात् समासः । घटात्कारोऽनुकरणशब्दः तेन सह यथा भवति यस्यां क्रियायां तथा सङ्घृष्यमाणः उल्लिख्यमानः प्रान्तः अग्र्यभावो यस्य तत्तथोक्तम् । एवं विधं यत्प्राग्र्याङ्घ्रिपीठम् । अग्रे भवः अग्र्यः । सृष्ट्यादिकाले सर्वजीवोत्पत्तेः पूर्वमुत्पन्न इत्यर्थः । ‘अग्राद्यत्’ (पा.सू-४.४.११६) । इति भावार्थे यत् प्रत्ययः । प्रकृष्टो अग्र्यः सर्वजीवोत्तम इत्यर्थः । एवम्भूतस्य मुख्यप्राणस्य अङ्घ्री चरणौ तयोः पीठमासनम् । ‘पीठमासनम्’ इत्यमरः । यद्वा प्राग्र्यमनर्घ्यं यन्मुख्यप्राणपादपीठमित्यर्थः । तस्मादुत्थितानि यानि कनकरजांसि तैः पिञ्जराः । पिञ्जरोऽरुणः एषां अस्तीति पिञ्जराः रक्तपीतवर्णरत्नसुवर्णरजः सम्बन्धात्पीतरक्तवर्णा इत्यर्थः । ‘ताम्रोऽपि पीतरक्तस्तु पिञ्जरः परिकीर्तितः’ ‘पीठमासनम्’ इत्यमरः । अत्र ‘गुणवचनेभ्यो मतुबो लुगिष्टः’वा[१९] इति वचनात् मतुप्प्रत्ययस्य लुगिति ज्ञेयम् । अत एव आसमन्तात् सम्यग्वा रञ्जिताः रागं शोभाविशेषं प्रापिता आशा दिशो यैस्ते

---

**१८. सिद्धान्तकौमुद्यां उत्तरार्धे तिङन्ते चुरादौ उल्लिखितम् इदं गणसूत्रम् ।**

**१९. तसौ मत्वर्थे (पा.सू-१-४-१९) इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।**

तथोक्ताः । रागं प्रेमविशेषं प्रापिता उपासकानां मनोवृत्तयो यैरिति वा । तेषां पिञ्जरेण पीतरक्तवर्णेन आरञ्जिताशाः इत्यर्थः । अथवा तैः **पिञ्जराः ॥** पीतरक्तवर्णाः रञ्जिताशा इत्येतद्भिन्नपदत्वेन व्याख्येयम् । तथा चैतेषामतिशयितभक्तिमद्रुद्रादिदेवैरपि शिरोधार्यत्वात् पवित्रीकरणसामर्थ्यं युक्तमेवेति भावः ॥२॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

ननु लक्ष्म्याः हरिभार्यात्वात्तत्प्रेमभारविषयत्वेऽपि न महामाहात्म्यमिति मन्दाशङ्कापरिहाराय देवसेवितत्वमप्यस्तीत्याह– **उत्कण्ठेति ॥** उत्कण्ठया अकुण्ठाभ्यां कोलाहलजवाभ्यां विदितया प्रख्यातया अजस्रसेवया अनुवृद्धेन प्राज्ञात्मनो बिम्बरूपस्यापरोक्षज्ञानेन धूताज्ञानाख्यान्धतमसाः ये सुमनसो देवास्तेषां मौलिषु किरीटेषु खचितरत्नावलीनां भक्त्युद्रेकावगाढप्रघटनेन सघटात्कारं यथा भवति तथा सङ्घृष्यमाणप्रान्तभागोपेताभ्यां प्राग्र्याङ्घ्रिपीठाभ्यामुत्थितैः कनकरजोभिः पिञ्जराः मिश्राः अत एव रञ्जिताशाः अरुणीकृतदिग्भागाः पांसव इति पूर्वेणान्वयः । एवं पांसूनामेवातिमाहात्म्यत्वाद्धरेः किमु वक्तव्यमिति तस्य सर्वोत्तमत्त्वं कैमुत्येनोक्तं भवति ॥ २ ॥

**जन्माधिव्याध्युपाधिप्रतिहतिविरहप्रापकाणां गुणाना-**
**मग्र्याणामर्पकाणां चिरमुदितचिदानन्दसन्दोहदानाम् ।**
**एतेषामेष दोषप्रमुषितमनसां द्वेषिणां दूषकाणां**
**दैत्यानामार्तिमन्धेतमसि विदधतां संस्तवे नास्मि शक्तः ॥ ३ ॥**

## कविकर्णामृतम्

कविरिदानीं स्वाहङ्कारं परिहरति– **जन्माधीति ॥ एषः** स्तुतिप्रवृत्तोऽहम् । **जन्माधिव्याध्युपाधिप्रतिहतिविरहप्रापकाणां ॥** जन्म जननम् । आधिः मानसीव्यथा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । व्याधिः भगन्दरादिः । तेषामपुधायः कारणानि अविद्याऽस्मितादयः । तेषां प्रतिहतिः प्रत्यावृत्तिः । 'हन

हिंसागत्योः' इत्यस्मात् गत्यर्थे क्तिन् प्रत्ययः । तस्याः विरहः विच्छेदः तस्य प्रापकाणां यापकानाम् । उपाधिः शरीरम् तस्य प्रतिहतिः नाशः, तस्या विरहः विच्छेदः, तस्य प्रापकाणाम् यापकानाम् । उपाधिः शीररम् । तस्य प्रतिहतिर्नाशः, तस्याः विरहः प्रध्वंसः तस्य प्रापकाणामिति वा । पुनः किं भूतानाम् **अग्र्याणां** श्रेष्ठानां **गुणानां** भक्तिज्ञानादीनां **अर्पकाणां** प्रदातॄणाम् । पुनः किं विशिष्टानाम् **उदितचिदानन्दसन्दोहदानाम्** उदितः उदयमारभमाणः । 'आदिकर्मणि क्तः कर्तरि च' (पा.सू-३.४.७१) इति कर्तरि क्तः । चित् ज्ञानम् । आनन्दो हर्षः । तयोः सन्दोहः समूहः । तं ददतीति तेषां तथोक्तानाम् । पुनः कीदृशानाम्? **दोषप्रमुषितमनसाम्** दोषेण अन्यथाज्ञानादिना प्रमुषितं कलुषितं मनो येषां तेषाम् **द्वेषिणां** द्वेषणशीलानाम् । 'सम्पृचानुरुध.....' (पा.सू-३.२.१४२) इत्यादिना शीलार्थे घिनुण्प्रत्ययः । **दूषकाणां** असत्प्रलापैर्दूषणं कुर्वतां **दैत्यानाम् अन्धे तमसि आर्तिं** व्यथां **चिरं** निरवधिककालं **विदधतां** कुर्वाणानाम् । **एतेषां** पूर्वप्रस्तुतानां श्रीमदानन्दतीर्थश्रीमच्चरणनलिनरेणूनां **संस्तवे** सम्यक् स्तोत्रविषये **शक्तो नास्मि ॥** अत्र शक्त इति भूतकालः । अस्मीति वर्तमानकालः । अतः कालभेदे सत्यपि 'धातुसम्बन्धे प्रत्ययाः' (पा.सू-३.४.१) इति भूतकालो वर्तमानकालेनाभिसम्बध्यमानः साधुर्भवति । विशेषणं गुणत्वाद्विशेष्यमेवानुरुध्यत इति । एवं बहुविधसामर्थ्याचार्यवर्यश्रीमत्पादपद्मपरागान् प्रस्तोतुमल्पज्ञस्य मे सामर्थ्यं नास्तीत्यर्थः ॥ ३ ॥

## बालबोधिनी

कविरिदानीं स्वाहङ्कारं परिहरति– **जन्मेति ॥** एषः स्तुतिप्रवृत्तोऽहम् । जन्म जननं तच्च । आधिः मानसीव्यथा । व्याधिः शरीररोगः । तेषामुपाधयः कारणानि अविद्याकर्मादीनि । तेषां प्रतिहतिः प्रत्यावृत्तिः । 'हन हिंसागत्योः' इत्यस्माद्भावे क्तिन्प्रत्ययः । तस्या विरहो विच्छेदस्तस्य प्रापकाणां सम्पादकानाम् । यद्वा उपाधिश्शरीरं 'संहननेऽप्युपाधिस्तु धर्मध्याने विशेषणे । कुटुम्बव्यापृतौ छद्मानि'

इति हेमचन्द्रः । तस्य । प्रतिहतिर्नाशो मरणमित्यर्थः । तस्य विरहो वियोगस्तस्य प्रापकाणाम् इति वा । पुनः कथम्भूतानां पांसूनामित्यत आह– **अग्र्याणामिति ॥** अग्र्याणां श्रेष्ठानां गुणानां भक्तिज्ञानवैराग्यादिदोषान्यशुभधर्माणां 'गुणो ज्यासूत्रतन्तुषु' । 'रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये । रूपादावप्रधाने च दोषान्यस्मिन्विशेषणे' इति हेमचन्द्रः । योग्यजनेष्विति शेषः । अर्पकाणां प्रदातॄणां पुनः कीदृग्भूतानां पांसूनामित्यत आह– **उदितेति ॥** उदिता उदयमारभमाणाः । 'आदिकर्मणि क्तः' (पा.सू-३.४.७१) चित् ज्ञानं सा च आनन्दो हर्षः स च तयोः सन्दोहः समूहः । 'चयसमवायवृन्दसन्दोहविसरव्रजपुञ्जसमूहया' इति हलः । तं ददतीति तथोक्तास्तेषाम् । द्वेष्टुं शीलमेषामस्तीति द्वेषिणस्तेषाम् । 'सम्पृचानुरुधा....'(पा.सू-३.२.१४२) इत्यादिना शीलार्थे घिनुण् । अन्तर्द्वेषयुक्तानामित्यर्थः । दूषयन्तीति दूषकास्तेषामसत्प्रलापेन दूषणं कुर्वतामित्यर्थः । **दैत्यानाम् ॥ अन्धे** अन्धाख्ये **तमसि** नित्यनरके **आर्तिं चिरं** निरवधिककाले **विदधतां** कुर्वाणानाम् ॥ **एतेषां** पूर्वप्रस्तुतानां श्रीमदानन्दतीर्थभगवत्पादपांसूनां सम्यक् स्तवः संस्तवस्तस्मिन्साकल्येन स्तुतिविषय इत्यर्थः ॥ **शक्तः** समर्थो **नास्मि ॥** अत्र शक्त इति भूतकालः । अस्मीति वर्तमानकालः । अतः कालभेदे सत्यपि 'धातुसम्बन्धे प्रत्ययाः' इत्यतः भूतकालो वर्तमानकालेनाभिसम्बध्यमानः साधुर्भवति विशेषणं गुणत्वाद्विशेष्यमेवानुरुन्धे इति । एवं च बहुविधसामर्थ्याचार्यवर्यश्रीमत्पादपद्मपरागां स्तोतुमल्पज्ञानस्य मे सामर्थ्यं नास्तीत्यर्थः ॥ ३ ॥

## मन्दबोधिनी

कविरिदानीं स्वाहङ्कारं परिहरति– **जन्मादीत्यादिश्लोकद्वयेन ॥** अस्मीत्युत्तमपुरुषप्रयोगबलात् अहमिति कर्ता लभ्यते । **एषः** वायुस्तुतिकरणे प्रवृत्तः अहम् । **एतेषां** पूर्वप्रसक्तानां श्रीपादपांसूनां **संस्तवे** सम्यक् स्तुतिकरणे **शक्तः** समर्थः **नास्मि** न भवामीत्यन्वयः ॥ 'अस भुवि' इत्यस्माद्धातोः कर्तरि लट् परस्मैपदम् ।

अस्मि स्वः स्मः इति रूपाणि । कीदृशानामेतेषाम् । **जन्माधिव्याध्युपाधि-प्रतिहतिविरहप्रापकाणाम्** ॥ जन्म जननम् । आधिः मानसी व्यथा । 'पुंस्याधि-र्मानसी व्यथा' इत्यमरः । व्याधिः कुष्ठभगन्दरादिः । उपलक्षणमेतत् । मरणादिक-मपि ज्ञेयम् । एतेषां जन्मादीनां उपाधयः कारणानि अविद्याकामकर्मादीनि । तेषां प्रतिहतिः पुनर्गतिः । 'हन हिंसागत्योः' इति धातुव्याख्यानात् । प्रत्यावृत्तिरिति यावत् । तस्याः विरहः विच्छेदः । तस्य प्रापकाणां संसारप्रापकाविद्यादि-नाशकानामित्यर्थः ।

पुनः कथं भूतानामेतेषाम् ॥ **अग्र्याणाम्** श्रेष्ठानाम् ॥ **गुणानाम्** भक्ति-ज्ञानादीनाम् ॥ **अर्पकाणाम्** ॥ प्रदातॄणाम् । भक्तानामिति शेषः । पुनः कीदृग्विधानामेतेषाम् ॥ **चिरम्** बहुकालम् ॥ **उदितचिदानन्दसन्दोहदानाम्** उदितः आविर्भावं प्राप्तः । चिदानन्दयोः ज्ञानसुखयोः । सन्दोहः समूहः । तं ददातीति तथोक्ताः तेषां मुक्तौ ज्ञानानन्दाद्याविर्भावं कुर्वतामित्यर्थः । पुनः कीदृग्विधाना-मेतेषाम् ॥ **दैत्यानाम्** असुराणाम् ॥ **अन्धे तमसि** ॥ **आर्तिम्** व्यथाम् । **चिरं विदधताम्** कुर्वाणानाम् । कथम्भूतानां दैत्यानाम् ॥ **दोषप्रमुषितमनसाम्** ॥ दोषैः अन्यथाज्ञानादिभिः । प्रमुषितं प्रमुष्णम् । कलुषितमिति यावत् । मनो येषां ते तथोक्ताः तेषाम् । पुनः कथं भूतानाम् ॥ **द्वेषिणाम्** विष्णुतद्भक्तद्वेषिणाम् । पुनः कथं भूतानाम् ॥ **दूषकाणाम्** ॥ न केवलं मनसा किन्तु वाचा दूषण-शीलानाम् । एवंविधानेकसामर्थ्यवतां पादपांसूनां सम्यक् स्तुतिकरणे न समर्थोऽस्मीति भावः ॥ ३ ॥

## भावप्रदीपिका

एवं श्लोकद्वयेन वन्द्यताप्रयोजकं वैशिष्ट्यादिकं निरूप्य तत्स्तवने अधिकारिणः प्रवर्तयितुकामः, तदुपासकानां निःश्रेयसादिरूपाभ्युदयप्राप्तिमितरेषां आत्यन्तिक-दुःखानुभवलक्षणानर्थप्राप्तिं च निरूपयन् तत्स्तवने स्वप्रौढिं परिहरति– **जन्मेति** ॥ **एष** अल्पशक्तिमत्त्वादिना प्रमितोऽहम् ॥ **तेषां** स्तुतिविषयत्वेन प्रस्तुतानां

भारत्याद्युपास्यानां वा मुख्यप्राणपदाम्भोजपांसूनाम् स्तवने विषये सम्यक् स्तुतिं कर्तुं इति यावत् । सम् पूर्वात् 'ष्टुञ् स्तुतौ' इत्यस्मात् 'ऋदोरप्' (पा.सू-३.३.५७) इति भावे अप् प्रत्ययः । शक्तः समर्थो **नास्मि** न भवामि । 'अस भुवि' लट् । इत्यन्वयः । अत्र 'शक्लृ शक्तौ' इत्यस्मात् गत्यर्थाकर्मकाश्लिषशीङ्स्थासावस-जनरुहजीर्यतिभ्यश्च' (पा.सू-३.४.७२) इति कालविशेषविवक्षायां कर्तरि क्तप्रत्ययः । अतो न निषेधानुपपत्तिरिति ज्ञेयम् ।

कुतः स्तवनासामर्थ्यं इत्यतः तान् विशिनष्टि– **जन्मेत्यादिना ॥ जन्माधिव्याध्युपाधिप्रतिहतिविरहप्रापकाणाम् ॥** जन्म उत्पत्तिः । आधिः मानसीपीडा । 'पुंस्याधिः मानसी व्यथा' इत्यमरः । व्याधिः रोगः । 'स्त्रीरुग्रजा चोपतापरोगव्याधिगदामयाः'। तेषां उपाधिः प्रयोजकशरीरादि । तदवच्छेदेन जीवस्य सुखाद्यनुभवात् । तस्य प्रतिहतिः प्रतिगतिः प्रत्याप्तिः इति यावत् । 'हन हिंसागत्योः' इत्यस्मात् 'स्त्रियां क्तिन्' (पा.सू-३.३.९४) इति भावे क्तिन् प्रत्ययः । तस्याः विरहो वियोगः । अथवा उपाधिः शरीरम् । सुखादिप्रयोज-कत्वात् । तस्य प्रतिहतिः नाशः मरणमिति यावत् । अनन्तरं इतरेतरद्वन्द्वः । अनर्थहेतुमात्रोपलक्षणमेतत् । तेषां विरहः तन्मूलकारणीभूताज्ञाननिवृत्तिः मोक्ष इति यावत् । तस्य प्रापकाः प्राप्तिसम्पादकाः तेषाम् । अत्र योग्यतयाधिकारिणा-मिति शेषः ।

यद्वाऽऽवृत्या यथायोग्यमग्र्याणामधिकारिणामिति बोध्यम् । कथं मोक्षप्राप्ति-सम्पादकत्वमित्यतस्तान्विशिनष्टि– **अग्र्याणामिति ॥** मोक्षसाधनत्वेनोत्तमानां ज्ञानवैराग्यादीनां गुणानाम् । कृद्योगे कर्मणि षष्ठी ॥ **अर्पकाणाम्** सम्पादकानां तथा चैतेषामेवंविधगुणसम्पादकत्वेन मुक्तिप्रापकत्वमिति भावः । न केवलमनिष्ट-निवर्तकत्वमात्रं किन्तु इष्टसम्पादकत्वमपीत्याशयेन तान्विशिनष्टि **उदितेत्यादिना ॥** उदयः प्राकट्यम् । तमाप्तौ । 'आदिकर्मणि क्तः'(पा.सू-३.४.७१) 'कर्तरि च' इति (पा.सू-२.२.१६) कर्तरि क्तप्रत्ययः । यौ **चिदानन्दौ** ज्ञानहर्षौ तयोः

**सन्दोहः** समूहः समृद्धिरिति यावत् । 'समूहोनिवहव्यूहसन्दोहविसरव्रजाः' इत्यमरः । तं ददति इति तथोक्ताः । तेषाम् । 'आतोऽनुपसर्गे कः'(पा.सू-३.२.३) इति कप्रत्ययः । उचितेति पाठे तु उचितौ तत्तद्योग्यौ यौ चिदानन्दौ इत्यर्थो बोध्यः । अथवा गुणानां जन्माधीत्यादिविशेषणद्वयमिति बोध्यम् । तादृशगुणसम्पादकत्वेनापि पांसूनां महत्वसिद्धेः ।

एवमधिकारिणां पुरुषार्थप्रापकत्वेन पांसून् विशेष्यानधिकारिणामनर्थ-प्रापकत्वेनापि तान्विशिनष्टि **अन्ध इत्यादिना** ॥ अन्धे अज्ञानाद्यनर्थहेतुविशिष्टे तमसि । ताम्यतेऽनेनेति तमः तस्मिन् ग्लानिप्रापके निरयविशेषस्थले । अथवा तत्र वर्तमानानां इति शेषः । अथवा कर्मणोऽधिकरणविवक्षया सप्तमी । अन्धन्तमःप्राप्तानामित्यर्थः । 'तमु ग्लानौ' इत्यस्मात् असुन् प्रत्ययः ॥ **चिरं** निरवधिककालम् । 'कालाध्वनोरत्यन्तसंयोगे' (पा.सू-२.३.५) इति द्वितीया ॥ **दैत्यानां** तमोयोग्यानाम् । आर्तिः पीडा । ताम् । 'आर्तिः पीडा धनुष्कोट्योः' इत्यमरः ॥ **विदधतां** कुर्वताम् । विपूर्वाद्दधातेः करोत्यर्थत्वात् । विदधाति इत्यादौ तस्य तथा दर्शनात् । न चैवं वैषम्यनैर्घृण्यापत्तिरिति भावेन दैत्यान् विशिनष्टि **द्वेषिणामिति** ॥ 'द्विष अप्रीतौ' इत्यस्मात् इन् प्रत्ययः । ननु प्राप्तः स एवेति अतो विशेषसामग्रीं निरूपयंस्तान् विशिनष्टि **दूषकाणामिति** ॥ दूषयन्ति इति दूषकाः तेषां भगवद्भक्तनिन्दकानामित्यर्थः । 'ण्वुल्तृचौ' (पा.सू-३.१.१३३) इति कर्तरि ण्वुल् प्रत्ययः । किमिति ते दूषयन्तीत्यतो निन्दासामग्रीः निरूपयं-स्तान्विशिनष्टि **दोषेति** ॥ **दोषप्रमुषितमनसां** दोषैरज्ञानादिभिः प्रमुषितानि प्रामाणिकभगवद्गुणाद्यपलापलक्षणप्रस्तेयाख्यप्रमोषं प्राप्तानि मनांसि येषां ते तथोक्ताः । तेषाम् अज्ञानादिदोषावच्छिन्नमनस्कत्वेन प्रामाणिकार्थाप्रतिभासात् तमोयोग्यानां भगवन्निन्दकत्वमित्यर्थः । तथा च मुक्तियोग्यानामितरेषां च तत्स्वभावतत्तद्योग्यसाधनसम्पत्तिं च अनुसृत्यैव तत्तदुचितफलदातृणां मुख्यप्राण-पादाम्भोजपांसूनां संस्तवं कर्तुमल्पशक्तिरहं न समर्थ एवेति भावः ॥ ३ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं स्वाहङ्कारं खण्डयति– **जन्माधीति** ॥ जन्मादिभिर्या प्रतिहतिरभिभवस्तस्याः विरहप्रापकाणाम् । तथा अग्र्याणां ज्ञानभक्त्यादिगुणानामर्पकाणाम् गुणदातॄणामिति यावत् । तथा मोक्षे चिरमुदितचिदानन्दसन्दोहदानाम् । तथा दोषप्रमुषितमनसां द्वेषिणां दूषकाणां दैत्यानामन्धेतमसि आर्तिं विदधतामेतेषां पांसूनां एषः स्तुतिकरणे प्रवृत्तोऽहं शक्तो नास्मीत्यन्वयः ।

**अस्याविष्कर्तुकामं कलिमलकलुषेऽस्मिञ्जने ज्ञानमार्गम्**
**वन्द्यं चन्द्रेन्द्ररुद्रद्युमणिफणिवयोनायकाद्यैरिहाद्य ।**
**मध्वाख्यं मन्त्रसिद्धं किमुत कृतवतो मारुतस्यावतारम्**
**पातारं पारमेष्ठ्यं पदमपविपदः प्राप्नुरापन्नपुंसाम् ॥ ४ ॥**

## कविकर्णामृतम्

श्रीमच्चरणनळिनरेणूनपि स्तोतुमशक्तस्य प्रधानवायोः स्तुतिकरणे शक्तिः सुतरां नास्तीत्याह– **अस्येति** ॥ **अद्य** इदानीम् ॥ **इह** भुवि । कलिकृतं मलं अन्यथाज्ञानम् । तेन **कलुषे** कलुषिते, मलिनीकृते ॥ **अस्मिन् जने** ज्ञानयोग्ये **जने** लोके[२०]॥ **ज्ञानमार्गं** तत्त्वज्ञानसरणिम् ॥ **आविष्कर्तुकामं** प्रकटीकर्तुं कामः इच्छा यस्य तं तथोक्तम् । 'समानकर्तृकेषु तुमुन्' (पा.सू-३.३.१५८) इति इच्छार्थोपपदे तुमुन्' । 'तुङ्काममनसोरपि'[२१] इति मकारलोपः । अनेनावतारप्रयोजनं सूचितं भवति । चन्द्रेन्द्ररुद्राः प्रसिद्धाः । द्युमणिः सूर्यः । नायकः इत्युभयत्र

---

२०. अत्र पाठान्तरम्- कलिकृतं मलं मिथ्याज्ञानम् । तदेव कलुषं दुरितं यस्य तस्मिन् । कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम् इत्यमरः । अस्मिन् युगवर्तिनि जने ज्ञानमार्गम् ।

२१. प्रमाणवचनमेवमस्ति– 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युङ्घञोः' इति ॥

सम्बध्यते । फणिनां नायकः शेषः, वयसां पक्षिणां नायको गरुडः । 'खग-बाल्यादिनोर्वयः' इत्यमरः । तेषां द्वन्द्वः । ते आद्याः येषां तैर्देवैः ॥ **वन्द्यम्** अभिवादनस्तुतियोग्यम् ॥ **मन्त्रसिद्धम्** ॥ मन्त्रो वेदो बळित्थादि । तत्र सिद्धं प्रसिद्धम् ॥ **मध्वाख्यम्** मध्वनामकम् ॥ **मारुतस्यावतारं** प्रादुर्भावं कृतवतः ॥ **आपन्नपुंसाम्** आर्तस्वभावानां **पातारं** रक्षितारम् । 'कर्तृकर्मणोः कृति'(पा.सू-२.३.६५) इति कर्मणि षष्ठी ॥ **पदं** व्यवसितम् । 'पदं व्यवसितित्राण-स्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ **पारमेष्ठ्यं** ब्रह्मत्वम् । ब्रह्मणादित्वात् ष्यञ् प्रत्ययः[२२] । 'कर्तृकर्मणोः कृति'(पा.सू-२.३.६५) इति षष्ठी न भवति । 'न लोका.....' (पा.सू-२.३.६९) इत्यादिना प्रतिषेधात् । **प्राप्तुः** गन्तुः । शीलार्थे तृन् । वायोर्ब्रह्मपदप्राप्तौ प्रमाणम्– 'वायुर्हि ब्रह्मतामेति तस्माद् ब्रह्मैव स स्मृतः' (म.भा.ता.नि.अ-२.श्लो-१४९) इति श्रुतिश्च 'पवमानः प्रजापतिः' (पवमानसूक्तम्-अ-१, मन्त्र-४९) इति । अपगता विपद् यस्मात् तस्य मारुतस्य संस्तवे शक्तो नास्मीति किमु वक्तव्यमित्यर्थः ॥ ४ ॥

## बालबोधिनी

एवं श्रीमदाचार्यचरणनलिनरेणूनां संस्तवकरणेऽप्यशक्तः तद्विषयसंस्तवकरणे शक्तः स्यामित्यभिप्रायवानाह– **अस्येति** ॥ **अद्य** इदानीम् **इह** भूमौ ॥ **कलिमल-कलुषे** कलिकृतं मलं तेन कलुषः क्षुब्धस्तस्मिन् । 'मलं किट्टाघयोः चास्ति' इति यादवः । जनैः क्रियमाणपापकर्मणां कलिर्मुख्यतो नियामक इत्यतः कलिनिमित्तक-पापेन मलिनीकृत इत्यर्थः ॥ **अस्मिन्** ज्ञानयोग्ये जने ॥ **ज्ञानमार्गं** ज्ञानस्य तत्त्व-ज्ञानस्य मार्गः सरणिस्तम् ॥ **आविष्कर्तुकामम्** आविष्कर्तुं प्रकटीकर्तुं काम इच्छा यस्य स तथोक्तः तम् । 'समानकर्तृकेषु तुमुन्' (पा.सू-३.३.१५८) इतीच्छार्थो-

---

**२२. तत्र सूत्रं–गुणवचनब्राह्मणादिभ्यः कर्मणि च (पा.सू-५.१.१२४) इति । चकाराद् भावे च । तेन परमेष्ठिनो भावः पारमेष्ठ्यं ब्रह्मत्वम् । ब्राह्मणादिषु परमेष्ठिपदं न पठ्यते । आकृतिगणत्वात् तदपि पठनीयमित्यर्थः ।**

पपदे तुमुन् 'तुङ्कामममनसोरपि'[२३] इति मकारलोपः । अनेनावतारप्रयोजनं सूचितं भवति ॥ **चन्द्रेन्द्ररुद्रद्युमणिफणिवयोनायकाद्यैः** चन्द्रश्चेन्द्रश्च रुद्रश्च चन्द्रेन्द्र-रुद्राः । द्युमणिः सूर्यः स च । नायक इत्युभयत्र सम्बध्यते । फणा येषामस्तीति फणिनः सर्पास्तेषां नायकः स्वामी शेषः स च । वयसां पक्षिणां नायको गरुडः स च । 'खगबाल्यादिनोर्वयः' इत्यमरः । ते आद्या येषां ते तथोक्तास्तैर्देवैर्वन्द्यं अभिवादनस्तुतियोग्यम् । मन्त्रो वेदो 'बळित्था तद्वपुषे' (बळित्थासूक्तम्-१) इत्यादिस्तत्र सिद्धं प्रसिद्धम् ॥ **मध्वाख्यम्** मध्व इत्याख्या नाम यस्य स तथोक्तः तम् ॥ **आपन्नपुंसाम्** आपन्नाः शरणागता ये पुमांसः पुरुषास्तेषां **पातारं** रक्षितारं 'कर्तृकर्मणोः कृति' (पा.सू-२.३.६५) इति कर्मणि षष्ठी । **अवतारं** प्रादुर्भावं **कृतवतः** ॥ **पदं** व्यवसितं 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ **पारमेष्ठ्यम्** परमेष्ठिनो भावः पारमेष्ठ्यं ब्रह्मत्वमित्यर्थः । ब्राह्मणादित्वात् ष्यञ् ।

यद्वा पारमेष्ठिना चतुर्मुखेन प्राप्यं **पारमेष्ठ्यं पदं** स्थानं सत्यलोकेश्वरत्वमिति यावदिति वा ॥ **प्राप्तुः** गन्तुः । ताच्छील्यार्थे तृन् । पदं प्राप्तुरित्यत्र 'कर्तृकर्मणोः षष्ठी न प्राप्नोति । प्राप्तृशब्दस्य तृन्नन्तत्वेन 'न लोकाव्यय...' इत्यादिना षष्ठीप्रतिषेधात् । वायोर्ब्रह्मपदप्राप्तौ प्रमाणं च 'वायुर्हि ब्रह्मतामेति तस्माद्ब्रह्मैव स स्मृतः' (म.भा.ता.नि.अ-२.श्लो-१४९) इत्यादिस्मृतयः 'पवमानः प्रजापतिः' (पवमानसूक्तम्-अ-१,मं-४९) इत्यादिश्रुतयश्च । अपगता विपद्यस्मात्स तथोक्तस्तस्य । माः प्रमाणरूपा वेदादयो रुतं भाषितं यस्य स मारुतस्तस्य मुख्यप्राणस्य किमुत संस्तवे शक्तो नास्मीति किमु वक्तव्यमित्यर्थः ॥ ४ ॥

---

२३. प्रमाणवचनं वचनमेवमस्ति–

'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युङ्घञोः' इति ॥

## मन्दबोधिनी

**अस्याविष्कर्तुकाममिति** ॥ एषोऽहं संस्तवे नास्मि शक्तः इत्यनुवर्तते ॥ **एषोऽहम्** ॥ **अस्य** प्रस्तुतस्य मारुतस्य मुख्यवायोः संस्तवे शक्तः नास्मीति **किमुत** किमु वक्तव्यमित्यर्थः । तच्चरणनलिनरेणूनां स्तवनकरणमात्रेऽशक्तस्य प्रधान-वायुस्वरूपविषयस्तोत्रकरणे शक्तिर्नास्तीति किमु वक्तव्यमिति भावः । कथंभूतस्य मारुतस्य ॥ **इह** भूमौ ॥ **अद्य** इदानीम् ॥ **मध्वाख्यम्** ॥ **अवतारं कृतवतः** ॥ पुनः कथम्भूतस्य मारुतस्य ॥ **पारमेष्ठ्यम् पदम्** ब्रह्मपदं सत्यलोकाधि-पत्यमित्यर्थः ॥ **प्राप्तुः** अधिगन्तुः प्राप्यमाणस्येत्यर्थः । भाविब्रह्मण इति यावत् । तदुक्तम् 'वायुर्हि ब्रह्मतामेति तस्माद्ब्रह्मैव स स्मृतः' (म.भा.ता.नि.अ-२.श्लो-१४९) इति । पुनः कथम्भूतस्य मारुतस्य । **अपविपदः** ॥ अपगता विपत् यस्मात्स तथोक्तः । तस्य । श्रीमुख्यप्राणस्मरणे कृते सर्वविपद्विनाशो भवतीत्यर्थः । कथम्भूतं मध्वाख्यं अवतारम् ॥ **अस्मिन्** कलियुगवर्तिनि ॥ **कलिमलकलुषे** ॥ कलिमलं कलिनिमित्तं मलं मिथ्याज्ञानादि तेन कलुषे कलुषिते ॥ **जने** ज्ञान-योग्यजने ॥ **ज्ञानमार्गम्** तत्त्वज्ञानमार्गम् ॥ **आविष्कर्तुकामम्** प्रकटीकर्तुकामम् । अनेन अवतारप्रयोजनं सूचितम् । पुनः कीदृशम् । **चन्द्रेन्द्ररुद्रद्युमणिफणिवयो-नायकाद्यैः** ॥ फणिवयोनायकेत्यत्र नायक इत्येतत् उभयत्र सम्बध्यते । फणीनां सर्पाणां नायकः शेषः । वयसां पक्षिणां नायकः गरुडः । इति पूर्वं व्याख्येयम् । चन्द्रश्च इन्द्रश्च रुद्रश्च द्युमणिः सूर्यश्च 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । फणिवयो-नायकौ च चन्द्रेन्द्ररुद्रद्युमणिफणिवयोनायकाः । एते आद्याः येषां ते तथोक्ताः तैः ॥ **वन्द्यम्** स्तुत्यम् ॥ 'वदि अभिवादनस्तुत्योः' इति धातोः । पुनः कीदृग्विधम् ॥ **मन्त्रसिद्धम्** ॥ मन्त्रः बळित्थेत्यादिवेदः तत्र प्रसिद्धम् । पुनः कथं भूतम् । **आपन्नपुंसाम्** । आपन्नाश्चते पुमांसश्च स्वभक्ताः तेषाम् । **पातारम्** रक्षितारमित्यर्थः ॥ ४ ॥

## भावप्रकाशिका

एवं मुख्यप्राणस्य स्तुत्यताप्रयोजकीभूतातिमहत्त्वसिद्धये तत्पदाम्भोजपांसून् स्तुत्वा भिक्षुकपादप्रसारणन्यायेन तत्स्वरूपं स्तोतुकामस्तत्स्वरूपस्तवे कैमुत्येन स्वाहङ्कारमपनुदति– **अस्येति** ॥ अत्रानन्तरातीतपद्यात्संस्तवे नास्मि शक्तः इत्येतदनुवर्तते । अहम् अस्य श्रुत्यादिना प्रसिद्धस्य स्तुतिविषयत्वेन प्रकृतस्य वा ॥ **मारुतस्य** माः प्रमाणानि रुतं भाषितं यस्य स तथोक्तः तस्य श्रुत्याद्युपदेशकस्य मुख्यप्राणस्य ॥ **संस्तवे** साकल्येन, गुणिनिष्ठगुणाभिधानं संस्तवः तस्मिन् विषये । शक्तो नास्मीति किमुतेत्यन्वयः । यदा तत्पादाम्भोजपांसूनां यावद्गुणाभिधाने अशक्तस्तदाऽशेषगुणाभिधाने शक्तो न भवामीति किमु वक्तव्यं न किमपीत्यर्थः ।

ननु मुख्यप्राणसंस्तवे कार्ये तच्चरणाम्भोजरेणव एव स्तुत्याः कथमाचार्यपादाम्भोजस्तवनं कृतमित्याशङ्कायामुक्तम् ॥ **इहेत्यादिना** ॥ **इह** भूमौ ॥ **अद्य** इदानीम् ॥ **मध्वाख्यम्** मधु सुखसाधनं वं तीर्थं यस्यासौ मध्वः । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थस्स्यात् तृतीया मारुती तनुः' (तै.उ.भाष्यम्) इति निर्वचनात् । मध्व इत्याख्या नाम यस्य स मध्वाख्यस्तम् । अर्थप्रकरणे प्रयुज्यमानस्य 'इति'शब्दस्य शब्दपदार्थकत्वस्य व्यवस्थापकत्वात् । 'उक्तार्थानां प्रयोग इति' इतिशब्दस्य प्रयोगः । 'आख्याह्वे अभिधानं च नामधेयं नाम च' इत्यमरः ॥ **अवतारम्** जन्मविशेषम् ॥ **कृतवतः** ॥ तथा च मुख्यप्राणस्यैवाचार्यरूपेण कृतावतारत्वान्न कोऽपि दोष इति भावः ।

कथमेतस्यैवं महत्वं, येन तत्स्वरूपसंस्तवासामर्थ्यमित्याशङ्कायामुक्तं **पारमेष्ठ्यमित्यादि** ॥ परमे स्वर्गलोकादिभ्य उत्तमे सत्यलोके रुद्राद्याधिपत्ये वा तिष्ठतीति परमेष्ठी चतुर्मुखः । तस्य कर्म पारमेष्ठ्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू-५.१.१२४) इति ष्यञ् प्रत्ययः ॥ **पदम्** स्थानम् । 'पदं व्यवस्थितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । अत्र न लोकेत्यादिना षष्ठी निषेधात् कृद्योगे कर्मणि षष्ठी न भवति ॥ **प्राप्तुः** तत्प्राप्तिशीलस्येत्यर्थः । ताच्छील्ये

तृन् । तथा चायं स्वरूपेण ब्रह्मपदप्राप्तियोग्य इत्यर्थः ॥ **अपविपदः** अपगता विपत् विपत्तिर्यस्मात्सोऽपविपत् तस्य । 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपद-लोपः'[२४](वा) इत्युत्तरपदलोपी समासः । 'विपत्यां विपदापदौ' इत्यमरः । अत्र वायुर्ह्येव प्रजापतिस्तदुक्तमृषिणा 'पवमानः प्रजापतिः' (प.सू.-अ.१ मं.४९) इत्यादि-श्रुतयः । 'ब्रह्मात्मको यतो वायुः पदं ब्राह्ममगात्पुरा । वायोरन्यस्य न ब्रह्मपदं तस्मात्स एव सः' (म.भा.ता.नि.अ-२.श्लो-३५) इत्यादिस्मृतयश्च प्रमाणमिति न कश्चित्क्षुद्रोपद्रव इति ज्ञेयम् । तथा चैवंविधजगत्समीरणाशेष-गुणाभिधानेऽल्पशक्तिरहं कथं समर्थः स्यामिति भावः ।

ननु किमर्थमिममवतारं कृतवानित्याशङ्कायां हेतुप्रयोजने निरूपयन् तदवतारं विशिनष्टि– **कलिमलेत्यादिना** ॥ कलिनिमित्तं यन्मलं पापम् । 'मलो स्त्री पापविकटौ' इत्यमरः । तेन **कलुषे** आविले । 'कलुषोऽनच्छ आविलः' इत्यमरः ॥ **अस्मिन् जने** ॥ सर्वनाम्नो विवक्षितबुद्धिस्थार्थोपस्थापकत्वादधिकारिणि मुक्तियोग्यजन इत्यर्थः ॥ **ज्ञानमार्गं** अत्र ज्ञानपदेन 'मुख्यामुख्ययोर्मुख्ये कार्य-सम्प्रत्ययः' इति न्यायेन मुक्तिसाधनभूतज्ञानं मार्गपदेन च गतिसाधनत्वसाधर्म्या-त्तदुपायः सत्संप्रदायादिर्गृह्यते ॥ **आविष्कर्तुकामम्** आविष्कर्तुं प्रकटीकर्तुम् । कामः इच्छा यस्य स तथोक्तस्तम् । 'समानकर्तृकेषु तुमुन्' (पा.सू-३.३.१५८) इति तुमुन् प्रत्ययः । 'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि' इति मकारलोपः । 'इच्छा मनोभवौ कामौ' इत्यमरः ॥ **चन्द्रेन्द्ररुद्रद्युमणिफणिवयोनायकाद्यैः** चन्द्रेन्द्ररुद्राः प्रसिद्धाः ॥ **द्युमणिः** सूर्यः ॥ **फणिनः** सर्पाः ॥ **वयांसि** पक्षिणः 'खग-बाल्यादिनोर्वयः' इत्यमरः । तेषां नायकौ स्वामिनौ । द्वन्द्वान्ते श्रूयमाणं नायकपदं प्रत्येकमभिसम्बध्यते । तथा च फणिनायकवयोनायकौ शेषगरुडावित्यर्थः । एते आद्याः प्रथमाः येषां देवानां ते तथोक्ताः ॥ **वन्द्यम्** तैः नम्यः स्तुत्यो वा । तम् ॥ **आपन्नपुंसाम्** ॥ आपन्नाः शरणागताः आपत्प्राप्ता वा । 'आपन्न आपत्प्राप्तः

---

**२४. अनेकमन्यपदार्थे (पा.सू-२.२.२४)इति सूत्रस्य सम्बन्धि वार्तिकमिदम् ।**

स्यात्' इत्यमरः । ते च ते पुमांसश्च तेषां प्राणिनाम् । अत्र 'नञा निर्दिष्टम-नित्यम्' इति ज्ञापकात् कर्मणि षष्ठी ॥ **पातारं** रक्षणशीलम् । ताच्छील्ये तृच् । अथवा 'पा रक्षणे' इत्यस्मात् कर्तरि तृच् । तद्योगे चाप्रतिषेधात्कर्मणि षष्ठी । अवतारप्रयोजनादिप्रपञ्चं तु उत्तरत्र करिष्यति । तथा च रुद्रादिसुरवरप्रार्थितोऽय-मितरानिवर्त्यकल्यादिप्रवर्तितदुःशास्त्रनिबिडान्धकारसङ्गूहिततत्त्वज्ञानमार्गप्रकट-नेनापन्नसज्जनान् पालयितुमाचार्यरूपेणावतीर्णमिति भावः । उक्तार्थे प्रमाणं निरूप्य तदवतारं विशिनष्टि **मन्त्रसिद्धमिति** ॥ मन्त्रेण बळित्थेत्यादिना, सिद्धं मुख्य-प्राणावतारत्वादिना प्रमितमित्यर्थः । एतेनेयं प्राणविद्या बळित्थेत्यादिमन्त्र-व्याख्यानरूपा नोत्प्रेक्षामूलेति दर्शितम् । तथा चोत्तरत्र दर्शयिष्यामः ॥ ४ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवं पादपांसुस्तवनेऽशक्तिं विज्ञाप्य हरिस्तवने त्वशक्तिं कैमुत्येनोपपादयति— **अस्याविष्कर्तुकाममिति** ॥ मारुतस्य मरुदधिपतेः । यद्वा मा मानं वेदस्तेन रुतस्य शब्दितस्य । मानोक्तत्वाच्च मारुत इति वचनात् । अपविपदो भक्तविपदपगमहेतोः । प्राप्तुः प्रकर्षेण जगद्व्याप्यस्थातुः । 'आप्लृ व्याप्तौ' इति धातुः ॥ **इह** भूमौ ॥ **अद्य** वैवस्वतमन्वन्तरे अष्टाविंशतिमहायुगे **मध्वाख्यम्** आनन्दज्ञानरूपम् । 'मध्वित्यानन्दउद्दिष्टः' (तै.उ.भृ.भाष्योपसंहारे उदाहृतप्रमाणवचनम्)इति वाचनात् मधुशब्दः आनन्दवाची । आख्या आख्यातिर्ज्ञानम् ॥ **मन्त्रसिद्धं** 'वीति तमं स वै वि सोऽधस्तात्' (ऋ.भा.१.१०.३७) इत्यादिवेदप्रसिद्धं कलिमलकलुषे अस्मिन् रुद्रादिजने **ज्ञानमार्गमाविष्कर्तुकामम्** ॥ **आपन्नपुंसां** प्रपन्नजनानां देवादीनां **पारमेष्ठ्यं** परमे वैकुण्ठाद्युत्तमस्थाने तिष्ठतीति परमेष्ठी हरिस्तद्विषयकं पदं ज्ञानं दत्वेति शेषः । पापात्तारं रक्षितारम् । चन्द्रादिर्भिवन्द्यं व्यासाख्यमवतारं कृतवतोऽस्य अकारवाच्यस्य परब्रह्मणस्तवस्तवने शक्तो नास्मीति किमुतेत्यन्वयः ।

यद्वा सर्वज्ञत्वाच्चेष्टकत्वाच्च ज्ञान । आद्य-सर्वोत्तम, अप-पालकरहित, अस्मिन् जने कलिमलकलुषे सति इह जने मृग्यत्वान्मार्गं ब्रह्मस्वरूपमाविष्कर्तुकामं चन्द्रादिभिर्विवन्द्यमुक्तरीत्या मध्वाख्यं मन्त्रसिद्धं पारमेष्ठ्यपदं ब्रह्मपदं प्रापुरस्य पातारम् । तथा आपन्नपुंसां विपदः सकाशाद्विपदं परिहृत्य पातारं वराहाद्यवान्तरं कृतवतोऽस्य हरेः संस्तवे न शक्तोऽस्मीति । अथवा यस्य संस्तवे क्रियमाणे पुंसां आपत् न, विनश्यतीति यावत् । तस्य अपविपदस्तव संस्तवे शक्तो नास्मीति ।

यद्वा यस्य संस्तवे क्रियमाणे पुंसां विपदो नापन् न प्राप्नुवन्ति तस्य तवेति । अथवा पुंसामापत् न प्राप्नोति किं तर्हि विपदोर्विष्णोः पदस्वरूपं यस्मिन् स वैकुण्ठादिलोक एव भवति तस्य तवेति ।

यद्वा विपत् अः इति पदच्छेदः । यस्य संस्तवे पुंसामापत् विपच्च न वृद्धिह्रासौ न भवतः तस्याकारवाच्यस्य तवेति । अकारवाच्यत्वं कुत इत्यत उक्तं अ इति । इति श्रुतेरिति शेषः । वायुपक्षे तु **मारुतस्य** मरुतामधिपस्य । यद्वा वेदादिप्रमाणभरितवचनस्य । भृतमो भीम इति वचनात् । इः मन्मथः । तद्धन्ता रुद्रः इहा । तस्याप्याद्य । यद्वा इहाद्योऽदनीय यस्येति । रुद्रसंहारकेत्यर्थः । इघ्नो रुद्रस्याद्य उपजीव्य इति वा ॥ ४ ॥

**उद्यद्विद्युत्प्रचण्डां निजरुचिनिकरव्याप्तलोकावकाशो**
**बिभ्रद्भीमो भुजे योऽभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डे ।**
**वीर्योद्धार्यां गदाग्र्यामयमिह सुमतिं वायुदेवो विदध्या-**
**दध्यात्मज्ञाननेता यतिवरमहितो भूमिभूषामणिर्मे ॥ ५ ॥**

## कविकर्णामृतम्

एवं संस्तवे शक्त्यभावमुक्त्वाऽथ संस्तवादिसामर्थ्यहेतुं सद्बुद्धिं प्रार्थयते– **उद्यदिति** ॥ **निजरुचिनिकरव्याप्तलोकावकाशः** ॥ निजाः आत्मीयाः ये रुचीनां निकरास्तैर्व्याप्तः[२५] रूषितः लोकावकाशो भुवनप्रदेशो यस्य स तथोक्तः ॥ **यो**

२५. व्याप्तः लोकावकाशः ।

वायुदेवो भीमः सन् । भृताः[२६] माः प्रमाणानि ऋगादयोऽस्मिन्निति व्युत्पत्त्याऽन्वर्थोऽस्य भीमसंज्ञेत्यर्थः । तथा हि भाववृत्ते[२७] 'भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः । ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् । प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः' (तै.उ.भाष्यान्ते उदाहृतभाववृत्तवचनम्) इति ॥ **उद्यद्विद्युत्प्रचण्डां** उद्यन्ती या विद्युत् तद्वत्प्रचण्डां भासमानाम् ॥ **वीर्योद्धार्यां** वीर्येण बलेन उद्धार्यां उद्धर्तुं शक्याम् । 'ऋहलोर्ण्यत्' (पा.सू-३.१.१२४) इति ण्यत् । **गदाग्र्यां** श्रेष्ठगदाम् ॥ **अभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डे** अभ्युदितः अभ्युदयमारभमाणो यो दिनकरस्तस्य आभेव आभा यस्य तत् । अङ्गदं केयूरम् । 'केयूरमङ्गदं तुल्ये' इत्यमरः । तेन आढ्यः उज्ज्वलः प्रकाण्डः कराग्रांसमध्यप्रदेशो यस्य । अथवा प्रकाण्डः श्रेष्ठः । 'प्रकाण्डमुद्धतल्लजौ' इत्यमरः । तस्मिन् ॥ **भुजे बिभ्रद्** दधानः ॥ **अध्यात्मज्ञाननेता** परमात्मविषयज्ञानम् तस्य नेता प्रापकः । अत्र कर्मणः शेषत्वविवक्षायां षष्ठी । तस्मात् तृजन्तेन समासो युज्यते । न कृल्लक्षणषष्ठ्या । 'तृजकाभ्यां कर्तरि' (पा.सू-२.२.१५) इति कृल्लक्षणषष्ठी-समासप्रतिषेधात् । यतिवरेषु यतिश्रेष्ठेषु महितः महान् । अत एव **भूमिभूषामणिः** भूमण्डलमण्डनमणिर्भवति । सोऽयमवतारोचितव्यापारो **वायुदेवः** श्रीमुख्यप्राण-नाथः ॥ **मे** मम **सुमतिं** स्तुत्यादिकरणचातुरीचणां बुद्धिं **विदध्यात्** प्रदध्यात् । दधातेर्लिङि यासुटि 'श्नाभ्यस्तयोरातः' (पा.सू-६.४.११२) इत्याकारलोपे रूपम् ॥ **गदाग्र्यां बिभ्रत्** इत्यनेन दुष्टनिग्रहार्थो भीमावतारो दर्शितः ॥ **अध्यात्मज्ञाननेता** इत्यनेन ज्ञानानन्दाद्यखिलगुणमूर्तिः सर्वदा सर्वजीवादिभ्योऽत्यन्तभिन्नः सर्वान्तर्यामी श्रीनारायणः इत्येवं रूपस्य ज्ञानस्य प्रकाशकत्वं मध्वावतारस्य प्रयोजनमिति प्रकटितम् ॥ ५ ॥

---

२६. भृतानि माः प्रमाणानि इत्यपि पाठः ।

२७. भाववृत्तवचनम् इत्यपि पाठः ।

## बालबोधिनी

एवं संस्तवे शक्त्यभावमुक्त्वा संस्तवादिसामर्थ्यहेतुं सद्बुद्धिं प्रार्थयते– **उद्यदिति** ॥ **निजरुचिनिकरव्याप्तलोकावकाशः** निजा आत्मीया रुचयः प्रकाशास्तासां निकरः समूहस्तेन व्याप्तो लोकावकाशो भुवनस्य प्रदेशो येन स तथोक्तः ॥ **भीमः** यो वायुदेवो भृताः माः ऋगादिविद्या यस्मिन् स तथोक्तो भीमः सन् **उद्यद्विद्युत्प्रचण्डां** उद्यन्ती या विद्युत् तद्वत्प्रचण्डां भासमानामुग्रामिति वा ॥ **वीर्योद्धार्यां** वीर्येण बलेन उद्धार्याम् उद्धर्तुं शक्याम् । 'ऋहलोर्ण्यत्' (पा.सू-३.१.१२४) इति ण्यत्प्रत्ययः ॥ **गदाग्र्यां** गदासु श्रेष्ठाम् ॥ **अभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डे** अभ्युदितोऽभ्युदयमारभमाणो यो दिनकरः सूर्यस्तस्याभेवाभा कान्तिरिव यस्य तत्तथोक्तं तादृशं यदङ्गदं केयूरं 'केयूरमङ्गदं तुल्ये' इत्यमरः । तेन आढ्य उज्ज्वलो युक्तो वा । प्रकाण्डः कराग्रांसमध्यप्रदेशो यस्य स तथोक्तस्तस्मिन् । अथवा आढ्य एवोज्ज्वल एव प्रकाण्डः श्रेष्ठः । 'प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनि' इत्यमरः । तस्मिन्निति वा । भुजे हस्ते ॥ **बिभ्रत्** दधानः ॥ 'नाभ्यस्ताच्छतुः' (पा.सू-७.१.७८) इति नुमभावः ॥ **अध्यात्मज्ञाननेता** अधिकश्चासावात्मा च अध्यात्मा परमात्मेत्यर्थः । तस्य यज्ज्ञानं तद्विषयक-ज्ञानमित्यर्थः । तस्य नेता सच्छास्त्ररचनया प्रवर्तकः ।

यद्वा आत्मानं परमात्मानमधिकृत्य वर्तमानम् अध्यात्मं परमात्मविषयक-मित्यर्थः । तादृशं यज्ज्ञानं तस्य नेतेति वा । अध्यात्मज्ञानस्येति कर्मणः शेषत्वविवक्षायां षष्ठी । तस्य नेतेति तृजन्तेन समासो युज्यते । न कृल्लक्षणा षष्ठी । 'तृजकाभ्यां कर्तरि' (पा.सू-२.२.१५) इति कृल्लक्षणषष्ठ्याः समासप्रतिषेधात् ॥ **यतिवरमहितः** यतिषु परमहंसेषु वराः श्रेष्ठाः शुकसनकादयस्तैः **महितः** पूजितः ॥ यतिवरेषु यतिश्रेष्ठेषु महितो महानिति वा । अत एव **भूमिभूषामणिः** भूमे-र्भूमण्डलस्य या भूषा अलंक्रिया तस्या मणिरिव मणिः । सोऽयमवतारोचित-व्यापारो वायुदेवः ॥ **मे** मम **सुमतिं विदध्यात्** प्रदद्यात् ॥ 'डुधाञ् धारण-

पोषणयोः' लिङ् ॥ **गदाग्र्यां बिभ्रत्** इत्यनेन दुष्टनिग्रहार्थो भीमावतारो दर्शितः । अध्यात्मज्ञाननेता इत्यनेन श्रीमद्भगवज्ज्ञानप्रकटनार्थं मध्वावतार इति दर्शितम् ॥ ५ ॥

## मन्दबोधिनी

एवं संस्तवे शक्त्यभावमुक्त्वा स्वस्य संस्तवादिहेतुं बुद्धिं प्रार्थयते– **उद्यदिति** ॥ यत्तदोर्नित्यसम्बन्धात्तच्छब्दो यच्छब्दमपेक्षते । सोऽयं मध्वाचार्यः ॥ **मे** स्तुतिकरणचातुर्यप्रदां **सुमतिं** सुबुद्धिम् ॥ **विदध्यात्** ॥ कुर्यात् । 'डुधाञ् धारणपोषणयोः' इति धातोः कर्तरि लिङः परस्मैपदी । दध्यात् दध्यातां दध्युरिति रूपाणि । स कः । पूर्वं **भीमः** भीमनामा अभवत् । यः भीमसेनः स एव तद्देह-पतनानन्तरं श्रीमध्वाचार्योऽभूदिति भावः । तदुक्तं श्रीमन्महाभारततात्पर्यनिर्णये- 'भैमी तनुर्मरुत आह कथाः परस्य'(म.भा.ता.नि-३-९) इति । तत्रैव स्थलान्तरे 'जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्वमाह'(म.भा.ता.नि-अ.३२.श्लो-१२१) इति । भीमशब्दार्थस्तु 'भृतमो भीम इत्युक्तो वाचो मा मातरस्मृताः' । 'ऋगाद्याः इतिहासश्च पुराणं पञ्चरात्रकम् । 'प्रोक्ता सप्तशिवास्तत्र शयो भीमस्ततस्मृतः'(तै.उ.भाष्यान्ते उदाहृतभाववृत्तवचनम्) इति प्रमाणानुसारेण ज्ञातव्यः । अनेन भृताः माः प्रमाणानि ऋगादीनि यस्मिन् स इति व्युत्पत्या अन्वर्था अस्य भीमसंज्ञेत्युक्तं भवति । कीदृशः भीमः ॥ **गदाग्र्याम्** गदाश्रेष्ठाम् ॥ **भुजे** हस्ते ॥ **बिभ्रत्** दधानः । अनेन दुष्टनिग्रहः भीमावतारप्रयोजनमित्युक्तं भवति । कथंभूते भुजे **अभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डे** ॥ अभ्युदितश्चासौ दिनकरश्च उद्यत्सूर्यः तस्य, अभेवाभा प्रभा यस्य तथोक्तम् । तच्च तत् **अङ्गदं** केयूरम् । 'केयूरमङ्गदं तुल्ये' इत्यमरः । तेन **आढ्यः** सम्पन्नश्चासौ **प्रकाण्डः** प्रशस्तश्च तस्मिन् । 'प्रशस्तवाचकान्यमूनि' इत्यमरः । पीनत्वेन सुव्रतत्वेन स्निग्धत्वेन सुवर्णवत्वेन प्रशस्त इत्यर्थः ।

यद्वा उक्तलक्षणाङ्गदाढ्यः प्रकाण्डः कूर्परोपरितनभागः यस्मिन् स तथोक्तः

तस्मिन् । 'स्यात्कपोणिस्तु कूर्परः । अस्योपरि प्रकाण्डः स्यात्' इत्यमरः । कथम्भूतां गदाग्र्याम् ॥ **उद्यद्विद्युत्प्रचण्डाम्** ॥ उद्यन्ती च सा विद्युच्च तद्व-त्प्रचण्डाम् । प्रचण्डप्रकाशाम् । पुनः कथम्भूताम् ॥ **वीर्योद्धार्याम्** ॥ **वीर्येण** बलेन **उद्धार्यां** उद्धर्तुं शक्याम् । कथम्भूतोऽयं मध्वाचार्यः **निजरुचिनिकरव्याप्त-लोकावकाशः** निजाश्च ता रुचयश्च स्वाभाविका प्रभाः । तासां निकरः समूहः तेन व्याप्तः लोकावकाशः जगत्प्रवेशः यस्य स तथोक्तः । सूर्यादिवज्जगद्भासक इत्यर्थः । पुनः कथम्भूतः **वायुदेवः** मरुतश्रेष्ठः । पुनः कथम्भूतः **अध्यात्म-ज्ञाननेता** ॥ अधिकश्चासावात्मा च अध्यात्मा परमात्मा । तस्य ज्ञानं, तस्य नेता नायकः । 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः । मुक्तियोग्यानां तत्त्वोपदेशकर्तेत्यर्थः । अनेन तत्त्वोपदेशः मध्वावतारप्रयोजनमित्युक्तं भवति । पुनः कथम्भूतः **भूमिभूषामणिः** ॥ भूमेः मण्डलस्य, भूषामणिः अलङ्कारत्नभूतः । इदं विशेषणजातं भीमसेनेऽपि सममिति द्रष्टव्यम् ॥ ५ ॥

## भावप्रदीपिका

एवं जन्माधीत्यादिश्लोकद्वयेन तत्संस्तवे स्वप्रौढिमपनुद्य इदानीं यद्यप्यहं स्वतो जगत्समीरणाशेषगुणाभिधाने न शक्तस्तथापि तत्करुणावलम्बनेन कतिपयगुणाभि-धाने शक्तोऽस्मीति भावेन जगज्जीवनमाभिमुख्येन स्तोतुकामोऽभिधेयगुणादि-ज्ञानमन्तरेण गुणिनिष्ठगुणाभिधानरूपस्तवस्य कर्तुमशक्यत्वात् तत्स्तवनाधीनभूतं ज्ञानमर्थयते– **उद्यदिति** ॥ अत्र पूर्वश्लोके मारुतावतारत्वेन वर्णितमाचार्यमयमिति निर्दिशति । यत्तदोर्नित्यसम्बन्धात् य इति श्रवणात्स इति ग्राह्यम् । सोऽयं भगव-नाचार्यो **वायुदेवः** ॥ वाति गच्छति सूत्ररूपत्वेन सर्वत्र सञ्चरति । गत्यर्थानां ज्ञानार्थत्वात् जानातीति वायुः । 'असाधारण्येन व्यपदेशा भवन्ति' इति रुद्रा-द्युत्कृष्टगत्यादिमत्वात् वायुरित्यर्थः । 'वा गतिगन्धनयोः' इत्यस्मात् 'कृवापाजिमि-स्वादिसाध्य भूम्य उण्'(उणादि-१)इत्युण् प्रत्यये कृते 'आतो युक् चिण् कृतोः'(पा.सू.७.३.३९)इति युगागमः । दीव्यतीति देवः । 'नन्दिग्रहिपचादिभ्यो

ल्युणिन्यचः'(पा.सू-३.१.१३४) इति पचादित्वादच् प्रत्ययः । वायुश्चासौ देवश्च अथवा वायूनां प्राणादीनां देवो मुख्यप्राण इत्यर्थः ।

यद्वा गत्यादिमत्वेन ज्ञानरूपत्वेन वा वायूनां जीवानां देवः सर्वजीवोत्तम इत्यर्थः । 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' (षट्प्रश्न.उ-प्रश्न-५,मन्त्र-२) इति श्रुतेः ॥ **इह** अस्मिन् संस्तवविषये । 'इदमो हः' (पा.सू-५.३.११) इति सप्तम्यन्ताद्ध प्रत्ययः ॥ **मे** मम ॥ **सुमतिं** सुष्टु मतिः सुमतिः ताम् । सम्यक् ज्ञानं मोक्षसाधनत्वात् । उक्तं हि विष्णुपुराणे 'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्या वै शिल्पनैपुणम्' (वि.पु. प्रथमांशे अ-१९,श्लो-४१) इति । अथवा सुमतिं मननापरपर्यायं सम्यग्युक्त्यनुचिन्तनं, उपपत्यनुचिन्तनं मतिरिति तल्लक्षणात् ॥ **विदध्यात्** विशेषेण दद्यादित्यर्थः । इहेत्यावर्तनीयम् । सः कः **यो वायुदेवः इह** जगति ॥ **भीमः** भृताः धृताः माः प्रमाणानि वेदादीनि येन स तथोक्तः । अत्र स इति शेषः । 'भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः । ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् । प्रोक्तास्सप्त शिवास्तत्र शयो भीमस्तत स्मृतः' (तै.उ.भाष्यान्तोदाहृतभाववृत्तवचनम्) इति निर्वचनात् ॥ **अभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डे** ॥ अभ्युदिताः अभितः समन्तत उदयमारभमाणा दिनं कर्तुं शीलमेषामस्तीति दिनकराः सूर्याः । 'कृञो हेतु ताच्छील्यानुलोमेषु' (पा.सू.३.२.२०) इति ट प्रत्ययः । तद्वत् आभा द्युतिः यस्य तत् तथोक्तम् । 'स्युः प्रभारुग्रिचिस्त्विड्भा भाछविद्युतिदीप्तयः' इत्यमरः । एवं विधं यत् अङ्गदं केयूरम् । 'केयूरमङ्गदं तुल्ये' इत्यमरः । तेन आढ्यः सम्पन्नः । प्रकाण्डः कूर्परोपरितनभागो यस्य स तथोक्तः । तस्मिन् । 'स्यात्कफोणिस्तु कूर्परः' । 'अस्योपरि प्रकाण्डः स्यात्' इत्यमरः ॥ **भुजे** बाहौ । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः ॥ **उद्यद्विद्युत्प्रचण्डाम्** उद्यती या विद्युत् तडित् तद्वत् प्रचण्डां दुर्दशाम् ।

वीर्येण बलेनोद्धार्यां उद्धर्तुमर्हाम् । उत्पूर्वात् 'हृञ् हरणे' इत्यस्मात्

'ऋहलोर्ण्यत्' (पा.सू.३.१.१२४) इति अर्हार्थे ण्यत्प्रत्ययः ॥ **गदाग्र्यां** गदास्वग्र्या गदाग्र्या । ताम् । निर्धारणस्य सजातीयविशिष्टार्थप्रापकत्वात् । गदोत्तमां गदामित्यर्थः । अत्र षष्ठ्यन्तेन विग्रहे न निर्धारण इति निषेधात् समासो न स्यादतः सप्तमीति योगविभागात्समासः । **बिभ्रत्** दधत् । 'नाभ्यस्ताच्छतुः' (पा.सू. ७.१.७८) इति नुमभावः । कुतोऽयं प्रार्थ्यत इत्यतो निग्रहौपयिकं सामर्थ्यं निरूपयन् तदवतारं भीमं विशिनष्टि **निजरुचिनिकरव्याप्तलोकावकाशः** ॥ निजाः स्वीयाः । 'स्वके नित्ये निजं त्रिषु' इत्यमरः । याः रुचयः प्रभाः तासां निकरेण स्तोमेन । 'स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः' इत्यमरः । व्याप्तः लोकस्य भुवनस्य, जनस्य वा अवकाशः प्रदेशो येन स तथोक्तः । 'लोकस्तु भुवने जने' इत्यमरः । स्वतेजःसमूहान्तर्भूतसकलभुवनजन इत्यर्थः । आचार्यस्य वा विशेषणमेतत् । एवं निग्रहौपयिकमहत्त्वं निरूप्यानुग्रहौपयिकं निरूपयन् त्रिभिर्विशेषणैराचार्यं विशिनष्टि **अध्यात्मेत्यादिना** ॥ अत्र भावकरणव्युत्पत्त्या ज्ञानपदेन वेदादिशास्त्रं तज्जन्यज्ञानं च गृह्यते । आत्मनि आदानादिकर्तरि हरौ अधिकृत्य वर्तमानमध्यात्मम् । मुख्यतया परमात्मविषयकमित्यर्थः । 'अव्ययं विभक्ति' (पा.सू-२.१.६) इत्यादिना सप्तम्यर्थेऽव्ययीभावः । 'अतश्च' (पा.सू-४.१.१७७) इति समासान्तः टच् प्रत्ययः । अध्यात्मं च तत् ज्ञानं चेति अध्यात्मज्ञानं वेदादिशास्त्रं तज्जन्यज्ञानं च । नेता उपदेशकत्वादिना तन्नियमनशील इत्यर्थः । अत्र द्वितीयान्तस्य 'ताच्छील्यकतृन्नन्तेन द्वितीया' इति योगविभागात्समासः । नेतृशब्दस्य तृच्प्रत्ययान्तत्वसम्पादने तु तद्योगे षष्ठीसम्भवेऽपि 'कर्तरि च'(पा.सू-२.२.१६)इति प्रतिषेधात् समासो न स्यात् ।

यद्वा जनिकर्तुः इति पाणिनिनिर्देशात् 'कर्तरि च' (पा.सू-२.२.१६) इति प्रतिषेधानित्यत्वस्य ज्ञापितत्वात् अध्यात्मज्ञानस्य नेता नियामकः इति विग्रहोपपत्तिः ॥ **यतिवरमहितः** यतिवरैः सन्न्यासिश्रेष्ठैः सनकादिभिः महितः पूजितः । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः ॥ **भूमिभूषामणिः** भूमेर्भूषायाः अलङ्कारस्य किरीटादिरूपस्य मणिर्माणिक्यादिरूप इव तदलङ्कारिभूतसज्जनानुग्राह-

कत्वादिना तद्भूषामणिरित्यर्थः । भीमस्य वा विशेषणजातमेतत् । तथा चास्य सर्वप्रसिद्धनिग्रहानुग्रहौपयिकातिशयितसामर्थ्यवत्त्वाद्युक्तं प्रार्थनमिति भावः ॥ ५ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं व्यासरूपं तदेव ज्ञानं प्रार्थयते– **उद्यदिति** ॥ अयं श्रीवेदव्यासो मे सुमतिं विदध्यादित्यन्वयः । ज्ञानप्रदानोपयुक्तगुणवत्त्वेन तं विशिनष्टि **भीम इत्यादिना** ॥ भृतमो भीमः ॥ **गदाढ्यप्रकाण्डे** ॥ आढ्ये सकललक्षणसम्पन्ने अत एव प्रकाण्डे प्रशस्ते गदे गदनसाधने वागिन्द्रिये उद्यद्विद्युत्प्रचण्डाम् ।

उद्यती उदयं प्राप्ता विद्युत् विशेषेण द्योतमाना प्रचण्डा दुर्वादिदुर्युक्त्य-प्रतिहतानाम् । अभ्युदितदिनकराभाम् । अज्ञानान्धकारविनाशिनीमिति यावत् ॥ **वीर्योद्धार्याम्** ॥ वीर्येण मनोविधानलक्षणेन उद्धार्यामवधार्याम् । श्रोतृणां चित्तैकाग्र्यताभावेऽवधर्तुमशक्यामिति यावत् । यद्वा विः परमात्मा ईर्यो गुणपूर्णत्वेन प्रतिपादनीयः, उद्धार्यो दुर्वाद्यारोपितदोषैरुद्धरणीयश्च यया सा तथोक्ता तां भगवतो गुणपूर्णत्वनिर्दोषत्वप्रतिपादिकामिति यावत् । **गदाग्र्यां** अग्रवाचं ब्रह्मसूत्रादिरूपां बिभ्रत् । गदव्यक्तायां वाचीति धातोः । साङ्ख्यचार्वाकादिवादिनः सर्वेऽपि भवन्ति । जेया अस्येति भुजेयः । न भवति जेयः स्वयं तेषामिति अभुजेय इति वा । **अध्यात्मज्ञाननेता** । परमात्मज्ञानप्रापयिता । वायोरपि देवो **वायुदेवः** ॥ बलज्ञान-स्वरूपत्वादिना वायुर्देवश्चेति वा ॥ **यतिवरमहितः** श्रीमदानन्दतीर्थपूजितः ॥ **भूमिभूषामणिः** भूमेर्भूषामणिरलङ्काररत्नस्थानीयः । यद्वा भूमो गुणोऽस्यास्तीति भूमी । जगद्भूषारूपत्वाद्भूषायाः लक्ष्म्याः मणिः श्रेष्ठश्चेति भूमिभूषामणिः । मणिर्मुखं प्रधानश्चेत्यभिधानम् । निजरुचिनिकरव्याप्तलोकावकाशः । स्वाभाविक-तेजःसमूहेन व्याप्तलोकप्रदेशः । अथवा निजरुचि, स्वकीये तेजस्येव वर्तमानः सन् जगज्जननादिकं नितरां करोतीति, निकरशब्दवाच्याङ्गमोक्षं ददातीति, गदा तत्त्वज्ञैर्यम्यते यस्माद्गशब्दो मोक्षवाचक इति वचनात् ॥ **आढ्य** ॥ **प्र** प्रकृष्ट । इह **काण्डे** ब्रह्माण्डे व्याप्त । हे बादरायण यो **गदाग्र्यां** वेदवाचं जिह्वाग्रे

अबिभ्रत् । सा लोकानामवकाशो यस्मिन्नसौ लोकावकाशो भवान् भुजे विषयभोक्त्रे **मे** मह्यम् ॥ **सुमतिं विदध्यात्** इति सम्बन्धः ।

यद्वा काण्डे प्रलयोदके समुद्रोदके वा स्थित । निजरुचिस्थित्वा जगज्जन्मादिकं नितरां करोतीति निक । निजा रुचिर्यस्येति नितरां कं सुखं यस्येति च निजरुचि-निकर विमाप्तः प्रविष्टः सन् लोकानवकाशयति प्रकाशयतीति व्याप्तलोकावकाशो भवानिति । अथवा रवज्ञेयत्वाद्रविः । आप्तलोकान् प्रेमास्पदजनान् अवकाशयतीति वा आप्तलोकानामवकाशो यस्मिन्निति वा आप्तलोकावकाशश्चेति ।

अथवा कृष्णावतारस्यापि गीताद्युपदेष्टृत्वाज्ज्ञानप्रदत्वेन श्रीकृष्णं ज्ञानं प्रार्थयते– **उद्यदिति** ॥ यो भीमो दैत्यभयंकरोऽध्यात्मज्ञस्य अनस्य मुख्यप्राणस्य नेता अध्यात्मज्ञानानां नेता वा यतिभिर्वर इति महितो भूमिभूषामणिर्निजरुचिनिकर-व्याप्तलोकावकाशोऽभ्युदितदिनकराभाङ्गदेन आढ्ये प्रकाण्डे कूर्परोपरितनभागे वीर्योद्धार्यां गदाग्र्याम् । उपलक्षणया चक्रादिकं बिभ्रत् । स वायुदेवो यादवकृष्णो मे सुमतिं दद्यादिति ॥ ५ ॥

## श्रीनिवासतीर्थीया

**विग्रहवाक्यानि– उद्यद्विद्युत्प्रचण्डाम्** ॥ उद्यन्ती च सा विद्युच्च उद्यद्विद्युत् । उद्यद्विद्युत् इव प्रचण्डा उद्यद्विद्युत्प्रचण्डा । ताम् । **निजरुचिनिकरव्याप्त-लोकावकाशः** ॥ रुचीनां निकराः रुचिनिकराः । निजाश्चते रुचिनिकराश्च । निजरुचिनिकराः । लोकानामवकाशः लोकावकाशः । निजरुचिनिकरैः व्याप्तः लोकावकाशः येन स निजरुचिनिकरव्याप्तलोकावकाशः ॥ **अभ्युदितदिनकराभाङ्ग-दाढ्यप्रकाण्डे** ॥ सम्यक् उदितः अभ्युदितः । अभ्युदितश्चासौ दिनकरश्च अभ्युदितदिनकरः । अभ्युदितदिनकरस्य आभा इव आभा यस्य तत् अभ्युदित-दिनकराभम् । अभ्युदितदिनकाराभं च तत् अङ्गदं च अभ्युदितदिनकराभाङ्गदम् । अभ्युदितदिनकराभाङ्गदेन आढ्यः अभ्युदितदिनकराभाङ्गदाढ्यः । अभ्युदितदिन-

कराभाङ्गदाढ्यः प्रकाण्डो यस्य सः अभ्युदितदिनकराभाङ्गदाढ्यप्रकाण्डः । तस्मिन् ॥ **वीर्योद्धार्याम्** उद्धर्तुं योग्या उद्धार्या । वीर्येण उद्धार्या वीर्योद्धार्या । ताम् । **गदाग्र्याम्** अग्र्या च सा गदा च गदाग्र्या । ताम् । विशेषणस्य परनिपातः ॥ **सुमतिम्** शोभना च सा मतिश्च सुमतिः । ताम् ॥ **वायुदेवः** वायुश्चासौ देवश्च वायुदेवः । **विदध्यात्** वीत्युपपदात् डुधाञ् धारणपोषणयोः आशीर्लिङ् परस्मैपदम् प्रथमपुरुषैकवचनम् ॥ **अध्यात्मज्ञाननेता** आत्मानमधिकृत्य वर्तते इति अध्यात्मम् । अध्यात्मस्यः ज्ञानम् अध्यात्मज्ञानम् । अध्यात्मज्ञानस्य नेता ॥ **यतिवरमहितः** यतिवरैः महितः यतिवरमहितः ॥ **भूमिभूषामणिः** भूमेः भूषामणिः भूमिभूषामणिः ॥ ५ ॥

**संसारोत्तापनित्योपशमदसदयस्नेहहासाम्बुपूर-**
**प्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशः ।**
**श्रीवत्साङ्काधिवासोचिततरसरलश्रीमदानन्दतीर्थ**
**क्षीराम्भोधिर्विभिन्द्याद्भवदनभिमतं भूरि मे भूतिहेतुः ॥ ६ ॥**

## कविकर्णामृतम्

संसारसञ्जातसन्तापशान्तिकरत्वात् तमेव दुग्धाम्भोधित्वेन [२८]रूपयन्नाध्यात्मिकाद्यनेकानिष्टशान्तिं प्रार्थयते– **संसारेति ॥ संसारोत्तापनित्योपशमदसदयस्नेहहासाम्बुपूरप्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशः ॥** संसारोत्तापः संसारे य उत्तापः आध्यात्मिकाद्युत्कृष्टव्यथा तस्य नित्यं अनवरतं उपशमदः उपशान्तिप्रदः । स चासौ सदयः कृपासहितः स्नेहहासः भक्तानुरागजनितो हासश्च । स एव अम्बुपूरो जलसमृद्धिर्यस्य । स चासौ प्रोद्यन्त्यः प्रादुर्भवन्त्यो विद्याः तत्त्वज्ञानादय एव अनवद्यद्युतिमणयः अनर्घ[२९]प्रभारत्नानि तेषां

---

२८. निरूपयन् इत्यपि पाठः ।

२९. अनर्घ्य इत्यपि पाठः ।

किरणाः स्फुरणानि तेषां श्रेणयः पङ्क्तयः ताभिः सम्पूरिताः सम्यग्व्याप्ताः दिशो यस्य स तथोक्तश्च । 'आशाश्च हरितश्च ताः' इत्यमरः ॥ **भूतिहेतुः** भक्तिज्ञानादि-सम्पद्धेतुः । अन्यत्र भूतेर्लक्ष्म्याः हेतुराविर्भावाधिष्ठानम् ॥ **श्रीवत्साङ्काधि-वासोचिततरसरलः** ॥ श्रीवत्सः शरीरस्थितावर्तविशेषः । स एव अङ्कः चिह्नं यस्य तस्य श्रीविष्णोः अधिवासः सन्निधानम् । अन्यत्राऽश्रयः । तस्य उचिततराः अत्यन्तयोग्याः, गरुडमृडादयः । तेषु सरलः उदारः । 'दक्षिणे सरळोदारौ'[३०] इत्यमरः । 'पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम्' (ब्रह्म.सू.भा-२.३.१४) इति । अन्यत्र उचिततराः श्वेतद्वीपादयः । तेषु सरलः हृद्यः[३१] । 'हृद्यं वैवाहिकं गृहम्' इति लोकप्रसिद्धेः ॥ **श्रीमदानन्दतीर्थक्षीराम्बोधिः** ॥ श्रीः अस्यास्तीति श्रीमान् स चासौ श्रीमदानन्दतीर्थश्च । स एव क्षीराम्भोधिः क्षीरसमुद्रः । भवत् जायमानं **भूरि** बहु **मे** मम **अनभिमतं** अनिष्टम् । अथवा **मे** मम च श्रीविष्णुभक्तानामिति वा योजना[३२] ॥ **विभिन्द्यात्** छिन्द्यात् । रुधादेर्भिदेर्लिङ् ॥ ६ ॥

## बालबोधिनी

संसारसञ्जातसन्तापशान्तिकरत्वात्तमेव दुग्धाब्धित्वेन निरूपयन्नाध्यात्मिका-द्यनेकानिष्टशान्तिं प्रार्थयते– **संसारेति** ॥ **संसारोत्तापनित्योपशमदसदयस्नेह-हासाम्बुपूरप्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशः** ॥ संसारोत्तापाः संसारे य उत्तापा आध्यात्मिकाद्युत्कृष्टव्यथास्तेषां नित्यम् अनवरतम् उपशमद उपशान्तिप्रदः तादृशो यः सदयो दयासहितो यः स्नेहहासः स्नेहेन भक्तानुरागेण

३०. दक्षिणे सरळोदारौ इत्यमरवचनं अत्र समीचीनतया न सम्बध्यते । यतः प्रकृते सरलशब्दः उदारार्थे प्रयुक्तः न दाक्षिण्यार्थे अतः ।

३१. यदृजु तदेव हृद्यम् । तथा च सरलशब्दार्थः आर्जवमित्येव ।

३२. अत्र 'वा योजना' इत्यस्ति खलु । तेन ज्ञायते मे भूतिहेतुरिति यथाश्रुतं वा योजनीयमिति ।

सञ्जातो हासः स्नेहहासः स एव अम्बुपूरो जलसमृद्धिर्यस्य स चासौ । प्रोद्यन्त्यः प्रादुर्भवन्त्यः या विद्याः तत्त्वज्ञानानि तान्येव अनवद्यद्युतिमणयः । न विद्यतेऽवद्यं दोषो यस्याः सा अनवद्या तादृशी द्युतिः येषां ते तथोक्तास्तादृशाः ये मणयः रत्नानि तेषां किरणा रश्मयः तेषां श्रेणयः पङ्क्तयस्ताभिः सम्पूरिताः सम्यग् व्याप्ता आशा दिशो येन स तथोक्तः ॥ **भूतिहेतुः** भक्तिज्ञानादिसम्पद्धेतुः । अर्थान्तरे भूतेर्लक्ष्म्याः आविर्भावाधिष्ठानत्वेन हेतुर्निमित्तम् ॥ **श्रीवत्साङ्काधिवासोचित-तरसरलश्रीमदानन्दतीर्थक्षीराम्बोधिः॥** श्रीवत्सः श्रीहरिवक्षस्थितावर्तविशेषः । स एव अङ्कः चिह्नं यस्य स तथोक्तः । तस्य अधिवासोऽधिवसनं, सन्निधानमित्यर्थः । समुद्रपक्षे आश्रय इत्यर्थः । तस्य उचिततरा अत्यन्तयोग्या गरुडमृडादयस्तेषु सरल उदारः श्रेष्ठ इति यावत् । 'दक्षिणे सरलोदारौ' इत्यमरः । अस्मिंश्चार्थे पूर्वे ततो विष्णोः सन्निधानं क्रमाधिकमित्यादिप्रमाणम् । इतरत्र श्रीवत्साङ्काधिवासोचिततराः श्वेतद्वीपादयस्तेषु सरलः हृद्यः । 'हृद्यं वैवाहिकं गृहम्' इति लोकप्रसिद्धेः । स चासौ श्रीमदानन्दतीर्थश्च स एव क्षीराम्भोधिः क्षीरसमुद्रः भवज्जायमानं **भूरि** बहु **मे** मम **अनभिमतम्** अनिष्टम् ॥ **विभिन्द्यात्** छिन्द्यात् ॥ भिदिर् विदारणे' लिङ्

॥ ६ ॥

## मन्दबोधिनी

सांसारिकसन्तापशान्तिकरत्वात्तमेव क्षीराम्भोधित्वेन निरूपयन् आध्यात्मिकाद्य-निष्टशान्तिं प्रार्थयते– **संसारेति** ॥ श्रीमदानन्दतीर्थक्षीराम्भोधिः । श्रीमदानन्दतीर्थ एव **क्षीराम्भोधिः** क्षीरसमुद्रः । **मे** । मम । **भवत्** । जायमानम् । **भूरि** । बहुलम् । अथवा भवदनभिमतमित्यन्तमेकपदम् । **मे** । मम **अनभिमतम्** भवतां विष्णु-भक्तानां च अनभिमतम् । **विभिन्द्यात्** । भिन्द्यादिति योजना । 'भिदिर् विदारणे' इत्यस्माद्धातोः लिङः परस्मैपदम् । भिन्द्यात् भिन्द्यातां भिन्द्युः इति रूपाणि । कथम्भूतः श्रीमदानन्दतीर्थक्षीराम्भोधिरित्यपेक्षायां तं विशिनष्टि ॥ **संसारोत्तापनित्योपशमदसदयस्नेहहासाम्बुपूरप्रोद्यद्विद्यानवद्यद्युतिमणिकिरण-**

**श्रेणिसम्पूरिताशः ॥** संसारेत्यारभ्य सम्पूरिताशा इत्यन्तमेकपदम् । संसारे जायमानश्चासौ उत्तापश्च उत्कृष्टतापश्च तस्य नित्यमुपशमदः । सदयः दयया सहितः । स्नेहहासः भक्त्यनुरागजनितो मन्दहासः । संसारोत्तापनित्योपशमद-सदयश्चासौ स्नेहहासश्च स एव अम्बुपूरः जलसमृद्धिः यस्मिन् स तथोक्तः । प्रोद्यन्त्यः प्रादुर्भवन्त्यश्च ताः विद्याश्च प्रोद्यद्विद्याः । अनवद्या द्युतिर्येषां ते अनवद्यद्युतयः । ते च ते मणयश्च अनवद्यद्युतिमणयः निर्दोषप्रभारत्नानि तेषाम् । किरणाः रश्मयः । स्फुरणानीति यावत् । तेषां श्रेणयः पङ्क्तयः ताभिः सम्पूरिता सम्यग्व्याप्ता आशा दिशः यस्य स तथोक्तः । संसारोत्तापनित्योपशमदसदयस्नेह-हासाम्बुपूरश्चासौ प्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशश्चेति विशेषण-समासः । पुनः कथम्भूतः क्षीराम्भोधिः ॥ **श्रीवत्साङ्काधिवासोचिततरसरलः ॥** श्रीवत्सः अङ्कः चिह्नं यस्य स श्रीवत्साङ्को नारायणः । 'उत्सङ्गचिह्नयोरङ्कः' इत्यभिधानम् । अस्य अधिवासः निवासः सन्निधानमिति यावत् । तस्य उचिततरा अत्यन्तयोग्या रुद्रादयस्तेषु सरलः उदारः महान् । 'दक्षिणे सरलोदारौ' इत्यमरः । क्षीराम्भोधिरपि इतरलोकापेक्षया अतिशयेन भगवन्निवासभूतः इति ज्ञातव्यम् । पुनः कथम्भूतः क्षीराम्भोधिः भूतिहेतुः । ज्ञानसम्पद्धेतुः । क्षीरसमुद्रस्य लक्ष्म्यादि-सम्पद्धेतुत्वं प्रसिद्धमेव । 'भूतिर्भसितभस्मनि सम्पत्' इत्यभिधानम् । श्रीवत्साङ्काधिवासोचिततरसरलश्चासौ श्रीमदानन्दतीर्थक्षीराम्भोधिश्चेत्येकमेव पदमिति व्याचक्षते ॥ ६ ॥

## भावप्रदीपिका

अधुना श्रेयांसि बहुविघ्नानि इति मत्वोत्पन्नार्थप्रतीकारादनर्थोत्पत्तिप्रतिबन्ध एव वरमित्याशयेनाशास्यमानफलप्रतिबन्धकानर्थसाधनानाद्यविद्याकामकर्मादिदुरित-निवृत्तिमाशास्ते– **संसारेति ॥ श्रीमदानन्दतीर्थक्षीराम्भोधिः ॥** क्षीराण्यम्भांसीव तानि धीयन्तेऽस्मिन्निति क्षीराम्भोधिः । 'कर्मण्यधिकरणे च' (पा.सू-३.३.९३) इति किः प्रत्ययः । श्रीमदानन्दतीर्थक्षीराम्भोधिरिव ॥ **मे** मम ॥ **भूरि** बहु ॥

**भवत्** विद्यमानम् ॥ **अनभिमतम्** अनिष्टसाधनम् ॥ **विभिन्द्यात्** विनाशयत्वित्यन्वयः । 'भिदिर् विदारणे' इत्यस्मात्प्रार्थने लिङ् । न त्वाशिषि लिङ् । आशिषि लिङादेशतिङार्धधातुकसंज्ञात्वेन श्नमोऽप्राप्तेः । ननु कथमस्य क्षीरसमुद्रौपम्यमित्यतश्चतुर्भिर्विशेषणैस्तं विशिनष्टि **संसारेत्यादिना** ॥ **संसारोत्तापनित्योपशमदसदयस्नेहहासाम्बुपूरप्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशः** ॥ संसारे ये **उत्तापाः** उत्कृष्टास्तापाः सन्तापाः अध्यात्मिका आधिभौतिका आधिदैविकाश्च तेषां नित्योपशमः आत्यन्तिकविच्छेदः तं ददातीति तथोक्तः । स चासौ सदयस्नेहहासश्च । दया कृपा निरुपाधिपरदुःखप्रहाणेच्छा तया सहितः सदयः । यः स्नेहः स्वीयः स्वीयत्वाभिमानविशेषः । अतो दयास्नेहपदयोर्न पुनरुक्तिः । तद्युक्तो यो हासः स एव अम्बुपूरो जलसमृद्धिर्यस्मिन् स तथोक्तः । अथ च प्रोद्यन्त्यः प्रकर्षेणापौरुषेयत्वादिनोदयं प्राप्नुवन्त्यो या विद्या वेदेतिहासाद्याः । 'विद ज्ञाने' इत्यस्मात् 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (पा.सू-३.३.९९) इति करणे क्यप् प्रत्यये कृते विद्याशब्दो वेदादिब्रह्मविद्यावचनः । ताः अनवद्यद्युतिमणय इव । न विद्यन्ते अवद्या दोषा यस्याः सा अनवद्या दोषरहिता द्युतिः कान्तिः येषां ते तथोक्ताः । मणयो रत्नानि माणिक्यादीनि तेषां किरणाः रश्मयः तेषां श्रेणयः पङ्क्तयः । ताभिः सम्पूरिताः व्यापिताः सम्पूर्णकृताः । आशाः दिशो जनातितृष्णाश्च येन सः तथोक्तः । 'आशादिगतितृष्णयोः' इति यादवः । अत्र 'विशेषणं विशेष्येण बहुलम्' (पा.सू-२.१.५७) इत्यत्र बहुलोक्तेः क्वचिद्विशेषणस्य विशेषणेनापि कर्मधारय इति ज्ञापितत्वात् विशेषणसमासः ।

यद्वा विशिष्टहासलक्षणाम्बुपूरात् प्रोद्यन्त्य इत्यादि व्याख्येयम् । **श्रीवत्साङ्काधिवासोचिततरसरलः** ॥ श्रीवत्सोऽङ्कः चिह्नं यस्यासौ श्रीवत्साङ्को विष्णुः । 'अङ्कः समीप उत्सङ्गे चिह्ने स्थानावरोधयोः' इति विश्वः । तस्य अधिवासे आवासे उचिततराः उचितेभ्य इन्द्रादिभ्यः प्रकृष्टाः उचिततराः रुद्रादयः । 'द्विवचने विभज्योपपदे तरबीयसुनौ' (पा.सू-५.३.५७) इति तरप् प्रत्ययः । तेषु सरलः

कुशलः रुद्रादिभ्य उचिततरः । स चासौ सरलश्चेति वा । यद्वोचित एवोचिततरः । 'अल्पाच्तरम् पूर्वम्'(पा.सू-२.२.३४)इति निर्देशात् स्वार्थे तरप् प्रत्ययः । अतिशयेनोचितः उचिततर इति तमबर्थे वा । भूतेरैश्वर्यस्य हेतुः कारणमित्यर्थः । 'विभूतिर्भूतिरैश्वर्यम्' इत्यमरः । क्षीरसमुद्रो हि तापोपशामकपयः पूरवान् । माणिक्याद्युत्कृष्टरत्नसम्पूरितदिग्जनातितृष्णः अयं तु लवणसमुद्रादिभ्योऽप्यतिशयेन भगवदावासयोग्यो विद्यारत्नाकरत्वेनैश्वर्यकारणमपि भवति । तथा चास्योक्तविधया तत्सदृशगुणविशिष्टत्वात् युक्तं क्षीरसमुद्रौपम्यमिति भावः ॥ ६ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं श्रीमद्बादरायणमनिष्टनिवृत्तिं प्रार्थयते– **संसारेति ॥** श्रीमदानन्दतीर्थः आनन्दसन्दायिशास्त्रकृत् वेदव्यासः स एव क्षीराम्बोधिर्मे भवद्वर्तमानं प्रारब्धमिति यावत् भूरि अनभिमतमनिष्टं विभिन्द्यात् । क्षीराम्भोधिसादृश्यमुपपादयति– **संसारेत्यादिना ॥** संसारे जायमानस्योत्कृष्टतापस्य नित्यमुपशामदः सदयो यः स्नेहजनितो मन्दहासः स एवाम्बुपूरो यस्मिन् स तथोक्तः । प्रोद्यद्विद्या एवानव-द्युतिमणयः तेषां किरणश्रेणिभिः सम्पूरिताः आशाः दिशो येनासौ तथोक्तः । स चासावेष चेति । श्रीवत्साङ्काधिवासोचिततरसरलः उत्सङ्गनिवासस्यात्यधिकयोग्यो यस्य स तथा । अन्यत्र श्रीवत्साङ्को हरिस्तदधिवासस्योचिततरेषु सरलः श्रेष्ठ इति । यद्वा संसारोत्तापनित्योपशमद । सदयस्नेहहास । अम्बुना प्रलयोदकेन पूरयति विश्वमिति वा अबादितत्वात्मकं जगत्पूरयति पालयतीति वा 'अमु रोग' इति धातोः संसाररोगकारणत्वादम्बुना तत्तजीवकर्मणा जगत् पूरयति सृष्ट्या बृंहयतीति वा अम्बुपूर । प्रोद्यद्विद्य । श्रीवत्साङ्क । श्रीमदानन्दतीर्थ । हे वेदव्यास । यस्य तव **क्षीराम्बोधिवासोचिततरसरलः ॥** क्षीरसमुद्रशायिना हरिणात्यन्ताभिन्न-स्त्वमिति यावत् । सोऽनवद्यद्युतीनां सूर्यादीनां मणिः प्रधानः स्वयं च किरण-श्रेणिसम्पूरिताशश्च भवान् **मे** मद्विषये यद्भवतोऽनभिमतं तत् स्वर्गादिसौख्यं भूर्यपि **विभिन्द्यात् ॥** भूतिहेतुर्मोक्षहेतुरेव भूयादिति ॥ ६ ॥

## श्रीनिवासतीर्थीया

**विग्रहवाक्यानि– संसारोत्तापनित्योपशमदसदयःस्नेहहासाम्बुपूरप्रोद्यद्विद्या-नवद्यद्युतिमणिकिरणश्रेणिसम्पूरिताशः ॥** उत्कृष्टश्चासौ तापश्च उत्तापः । संसारे उत्तापः संसारोत्तापः । संसारोत्तापस्य नित्यं उपशमं ददातीति संसारोत्तापोप-शमदः । दयया सहितः सदयः । स्नेहेन जातो हासः स्नेहहासः । स्नेहहासः एव अम्बुपूरः यस्मिन् स स्नेहहासाम्बुपूरः । प्रोद्यन्तश्च ताः विद्याश्च प्रोद्यद्विद्याः । न विद्यते अनवद्यं यस्याः सा । अनवद्या । अनवद्या द्युतिः येषां ते अनवद्यद्युतयः । अनवद्यद्युतयश्च ते मणयश्च अनवद्यद्युतिमणयः । प्रोद्यद्विद्या एव अनवद्यद्युतिमणयः । प्रोद्यद्विद्यानवद्यद्युतिमणीनां किरणाः अनवद्यद्युतिमणिकिरणाः । किरणानां श्रेणयः किरणश्रेणयः किरणश्रेणिभिः सम्यक् पूरिताः आशाः येन स किरणश्रेणि-सम्पूरिताशः । संसारोत्तापनित्योपशमदसदयस्नेहहासाम्बुपूरप्रोद्यद्विद्यानवद्य-द्युतिमणिकिरणश्रेणिसम्पूरिताशः ॥ **श्रीवत्सांकाधिवासोचिततरसरलः ॥** श्रीवत्स एव अङ्कं यस्य सः श्रीवत्साङ्कः । श्रीवत्साङ्कस्य अधिवासः श्रीवत्साङ्काधिवासः । अत्यन्तं उचिताः उचिततराः । श्रीवत्साङ्काधिवासस्य उचिततराः श्रीवत्साङ्काधि-वासोचिततराः । श्रीवत्साङ्काधिवासोचिततरेषु सरलः श्रीवत्साङ्काधिवासोचित-तरसरलः ॥ **श्रीमदानन्दतीर्थक्षीराम्बोधिः ॥** आनन्दकरं तीर्थं यस्मात् सः आनन्दतीर्थः । श्रीः अस्यास्तीति श्रीमान् । श्रीमान् चासौ आनन्दतीर्थश्च श्रीमदानन्दतीर्थः । श्रीमदानन्दतीर्थ एव क्षीराम्बोधिः श्रीमदानन्दतीर्थक्षीराम्बोधिः ॥ **विभिन्द्यात् ॥** वीत्युपसर्गः भिन्द्यात् । 'भिदिर् विदारणे' आशीर्लिङ् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ **भवदनभिमतम्** न अभिमतं अनभिमतम् । भवच्च तत् अनभिमतं च भवदनभिमतम् । तत् ॥ **भूतिहेतुः** भूतेः हेतुः ॥ ६ ॥

**मूर्धन्येषोऽञ्जलिर्मे दृढतरमिह ते बध्यते बन्धपाश-**
**च्छेत्रे दात्रे सुखानां भजति भुवि भविष्यद्विधात्रे द्युभर्त्रे ।**
**अत्यन्तं सन्ततं त्वं प्रदिश पदयुगे हन्त सन्तापभाजा-**
**मस्माकं भक्तिमेकां भगवत उत ते माधवस्याथ वायोः ॥ ७ ॥**

# कविकर्णामृतम्

कारुण्यकटाक्षवीक्षणमात्रेण[३३] संसारबन्धच्छेदकं[३४] मोक्षसुखदायकं भविष्यद्ब्रह्माणं श्रीमद्भगवद्भारतीनाथं प्रणमन् श्रीविष्णौ श्रीवायौ च मुक्तिहेतुं भक्तिं याचते– **मूर्धनीति** ॥ हे श्रीवायो ॥ **भुवि** भूलोके ॥ **भजति** सेवके जने । अधिकरणविवक्षायां सप्तमी ॥ **बन्धपाशच्छेत्रे** बध्यते येन स बन्धः संसारः । स एव पाशः । तस्य च्छेत्रे छेदकाय ॥ **सुखानाम्** आनन्दानां **दात्रे** प्रदायकाय ॥ **भविष्यद्विधात्रे** भविष्यद्ब्रह्मणे । दिवः ज्ञानादिगुणसम्पन्नायाः भारत्याः । दीव्यतेः क्विप् ॥ **भर्त्रे** पत्ये ॥ **ते** तुभ्यम् ॥ **एषः** वर्तमानविशिष्टः[३५] ॥ **मे** मम सम्बन्धी ॥ **अञ्जलिः** करकमलमुकुलीभावः ॥ **मूर्धनि** शिरसि ॥ **दृढतरं** अतिदृढं **सन्ततं** निरन्तरम् ॥ **बद्ध्यते** ध्रियते । हन्तेति हर्षे । अनेन प्रणामेनाहो अद्य खलु मे जन्म सफलमिति हर्षः । त्वं, भगवतः **माधवस्य** श्रीपतेः ॥ **वायोः** मुख्यप्राणस्य **ते** तव **उत** उतेति चार्थे । अव्ययानामनेकार्थत्वात् ॥ **पदयुगे** चरणयुगले । **एकां** मुख्याम् । निर्व्याजां निश्चलां नित्यानन्दस्वरूपिणीमित्यर्थः ॥ **भक्तिं** माहात्म्यज्ञानपूर्वकं सुदृढं सर्वाधिकमुत्तमविषयं[३६] स्नेहमित्यर्थः । तथोक्तं-

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति ।

(म.भा.ता.नि.अ-१,श्लो-८५) **इह** अस्मिन् संसारे । **अत्यन्तं** निरवधिकं **सन्तापभाजां** बुभुक्षापिपासादिषडूर्मिप्रतिहतिप्राप्तदुःखानामस्माकं **प्रदिश** प्रतिपादय ॥ ७ ॥

---

३३. वीक्षामात्रेण इत्यपि पाठः ।

३४. संसारबन्धनच्छेदकं इत्यपि पाठः ।

३५. वर्तमानकालविशिष्टः । वर्तमानकालिक इति यावत् ।

३६. विषयस्नेहमित्यर्थः ।

## बालबोधिनी

कारुण्यकटाक्षमात्रेण संसारबन्धच्छेदकं मोक्षसुखदायकं भविष्यद्ब्रह्माणं श्रीमद्भगवद्भारतीनाथं प्रणमन् श्रीविष्णौ श्रीवायौ च मुक्तिहेतुं भक्तिं याचते– **मूर्धनीति** ॥ हे वायो **भुवि** लोके **भजति** सेवके जने अधिकरणविवक्षया सप्तमी । **बन्धपाशच्छेत्रे** बध्यतेऽनेनेति बन्धः । अविद्याकाम्यकर्मादिरूपसंसारः स एव पाशस्तस्य **छेत्रे** ब्रह्मापरोक्षज्ञानोत्पादनेन छेदनकर्त्रे ॥ **सुखानाम्** आनन्दानां **दात्रे** प्रदायकाय ॥ **भविष्यद्विधात्रे** भविष्यद्ब्रह्मणे, **द्युभर्त्रे** दिवो ज्ञानानन्दादिगुण-सम्पन्नाया भारत्याः दीव्यतेः क्विप् । भर्त्रे पत्ये **ते** तुभ्यम् ॥ **एषः** वर्तमानकाल-विशिष्टः । मम सम्बन्धी **अञ्जलिः** करमुकुलीभावो **मूर्धनि** शिरसि ॥ **दृढतम्** अतिदृढं यथा भवति तथा ॥ **सन्ततं** निरन्तरं **बध्यते** ध्रियते ॥ 'बध बन्धने' लट् । हन्तेति हर्षे । प्रणामेनाहो अद्य खलु मे जन्म सफलमिति हर्षः । त्वं **भगवतो माधवस्य** श्रीपतेः । अथ **वायोः** मुख्यप्राणस्य **ते** तव । उतेति चार्थे अव्ययानामनेकार्थत्वात् ॥ **पदयुगे** चरणयुगले । युग्मं तु युगलं युगम्' इत्यमरः ॥ **एकां** मुख्यां **भक्तिं** 'महात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' (म.भा.ता.नि.अ-१,श्लो-८५) इति प्रमाण-प्रतिपादितां भक्तिमिहास्मिन् संसारे **अत्यन्तं** निरवधिकं **सन्तापभाजां** सन्तापं बुभुक्षापिपासादिषडूर्मिप्रतिहतिप्राप्तदुःखं भजन्तीति तथोक्तास्तेषामस्माकं **प्रदिश** देहि । 'दिश अतिसर्जने' लोट् ॥ **इह** अस्मिन् जन्मनि **मे** मूर्ध्नीति वान्वयः । अत्र चान्वये इहेतिपदेन इदानीन्तनस्य पुण्यवशादुपलब्धस्य शरीरस्य बहुभागधेयसञ्चितत्वं सूचयति ॥ ७ ॥

## मन्दबोधिनी

इदानीं मुख्यप्राणं प्रणमन् इष्टदेवतायाः लक्ष्मीपतेः गुरोर्वायोश्च भक्तिं प्रार्थयते– **मूर्धन्येति** ॥ हे मुख्यप्राण । मयेति शेषः ॥ **एष अञ्जलिः मे** मम **मूर्ध्नि** शिरसि ॥ **दृढतरम्** इति क्रियाविशेषणम् । अतिदृढं यथा भवति तथा ॥ **सततम्**

निरन्तरम् ॥ **ते** ॥ तुभ्यम् ॥ **बध्यते** ॥ निधीयत इति यावत् । 'बधिर् बन्धने' इत्यस्माद्धातोः कर्मणि लडात्मनेपदम् । बध्यते बध्येते बध्यन्ते । हन्तेति हर्षः । अनेन प्रणामेन मे जन्म सफलमिति हर्षः । कथम्भूताय ते ॥ **भुवि** ॥ लोके ॥ **भजति** ॥ सेवां कुर्वति । जने । **बन्धपाशच्छेत्रे** ॥ बध्यतेऽनेनेति **बन्धः** संसारः स एव **पाशः** तस्य **छेत्रे** छेदकाय लिङ्गशरीरमोचकायेत्यर्थः । पुनः कीदृशाय ते ॥ **सुखानां दात्रे** ॥ दायकाय । स्वरूपानन्दाविर्भावप्रदायेत्यर्थः । पुनः कीदृशाय ॥ **भविष्यद्विधात्रे** । भविष्यश्चासौ विधाता च भविष्यद्विधाता तस्मै । भाविब्रह्मस्वरूपायेत्यर्थः । पुनः कीदृशाय ॥ **द्युभर्त्रे** ॥ दिवः ज्ञानादिगुणैः द्योतमानाया भारत्याः भर्त्रे नाथायेत्यर्थः । हे वायो त्वं अस्माकम् । भगवतः । ऐश्वर्यादिगुणसम्पन्नस्य ॥ **माधवस्य** ॥ मायाः धवः पतिः । 'इन्दिरा लोकमाता मा' 'धवः प्रियः पतिर्भर्ता' इत्यमरः । तस्य लक्ष्मीपतेः । पदयुगे ॥ **एकाम्** ॥ प्रधानाम् । **भक्तिम्** ॥ **प्रदिश** ॥ देहि ॥ **अथ** ॥ अनन्तरम् ॥ **भगवतः वायोः** मुख्यप्राणस्य ॥ **ते** ॥ तव । उतेति चार्थः । पदयुगे च एकां भक्तिं प्रदिश । 'दिश अतिसर्जने' इत्यतो लोट् परस्मैपदम् । दिश-दिशतात् दिशतं दिशत इति रूपाणि । कथंभूतानामस्माकम् ॥ **इह** ॥ अस्मिन् संसारे । **अत्यन्तम्** । निरवधिकम् ॥ **सन्ततम्** ॥ निरन्तरम् ॥ **सन्तापभाजाम्** । सन्तापान् नानाविधक्लेशान् भजन्तीति सन्तापभाजः तेषाम् ॥ ७ ॥

## भावप्रदीपिका

एवमभिमुखीकृतं जगत्समीरणं स्तुत्यञ्जलिनिबन्धनपूर्वकं प्रणमन् श्रीविष्णौ तस्मिन् मुख्यप्राणे च सर्वसाधनोत्तमां भक्तिं सहर्षमाशास्ते– **मूर्धन्येति** ॥ **मे** मम कर्तुः । शेषत्वविवक्षया षष्ठी । त्वत्सेवनादौ अहमस्वतन्त्र एवेति भावः ॥ **एषः** प्रत्यक्षः **अञ्जलिः** संयुक्तकरतलद्वयम् । 'संहतावञ्जलिः पुमान्' इत्यभिधानम् ॥ **मूर्धनि** मस्तके । मूर्धा 'ना मस्तकोऽस्त्रियाम्' इत्यमरः । **ते** तुभ्यम् ॥ **दृढतरम्** अतिशयेन दृढं यथा भवति तथा बध्यते । करतळद्वयं शिरसि सम्बध्य

प्रणम्यते इत्यर्थः । 'बध बन्धने' इत्यस्माद्धातोः सार्वधातुके यक् (पा.सू-३.१.६७) इति यक्प्रत्ययः । अत्राञ्जलेः प्रत्यक्षत्वादिव सङ्कीर्तनेन नैतद्वाचनिकविन्यासमात्रमिति सूचितम् । नन्वन्येषु रुद्रादिदेवेषु सत्सु किमिति अयमेव प्रणम्य इत्यतः चतुर्भिर्विशेषणैर्विशिनष्टि– **भजतीत्यादिना** ॥ इहेत्यादेरावृत्या यथायोग्यं सम्बन्धो द्रष्टव्यः ॥ **भजति** भक्तिं कुर्वति ॥ **इह** अस्मिन्नधिकारिणि जने । अधिकारिविवक्षया सप्तमी । **बन्धपाशच्छेत्रे** बन्धः संसारः । तस्य **पाशो** बन्धकम् । 'प्रकृत्यादिपाशो बन्धनशस्त्रयोः' इत्यमरः । तस्य च्छेत्ता छेदकः इति तृजन्तेन विग्रहः । तस्मै । इह **भुवि** भूलोके ॥ **भजति** भक्तजने ॥ **सुखानां दात्रे** । सज्जनानां दुर्लभत्वादेकवचननिर्देशः । न केवलमयं मुक्तिप्रदः किन्त्वपेक्षिताशेषपुमर्थप्रद इति सूचयितुं भजतीति सुखानामिति चोक्तम् । एतेन तुल्यफलकत्वमपि निरस्तम् ॥ **भविष्यद्विधात्रे** ॥ भाविचतुर्मुखाय ॥ **द्युभर्त्रे** द्यौर्भारती । क्रीडादिगुणविशिष्टत्वात् । दीव्यतेः कर्तरि क्विप् । तस्याः भर्ता पतिः तस्मै । 'धवः प्रियः पतिर्भर्ता' इत्यमरः । अत्र पत्यर्थभर्तृशब्दस्य याजकादिगणान्तर्भूतत्वेन 'याजकादिभ्यश्च' (पा.सू-२.२.९) इत्यनेन प्रतिप्रसवेन बाधितत्वात् 'कर्तरि च' (पा.सू-२.२.१६)इति षष्ठीसमासप्रतिषेधो न भवति । अत्राद्यविशेषणद्वयेनानिष्टनिवृत्तीष्टप्राप्तिसम्पादकत्वस्योपपादनम् । चरमविशेषणद्वयेन च तदुपपादकोपपादनं भविष्यद्विधात्र इत्यनेन । 'तस्माद्ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा' (म.भा.ता.नि.अ-१,श्लो-१२२) इत्यादेः प्रणामस्य सूचनेन मुख्यगुरुत्वस्य, द्युभर्त्रे इत्यनेन च द्यौर्वा विद्युत् तत्पतिं वा वायुमुपगम्य इति श्रुतेः 'चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयतीति' (छां.उ.अ-४, मन्त्र-१५.५) श्रुतेश्च । स्मृतेश्च सूचनेन मुक्तिप्रापकत्वस्य चोपपादितत्वात् अतो युक्तमुक्तमिति भावः । किमनेन प्रणामादिनेत्यतः तत्प्रार्थ्यमाहोत्तरार्धेन ॥ **अत्यन्तं सन्ततं त्वमिति** ॥ दिशि क्रियायाः सन्तापानुभवनक्रियाया विशेषण इति बोध्यम् । हे मुख्यप्राण त्वं **सन्ततं** निरन्तरम् ॥ **अत्यन्तं** अन्ते विच्छेदमतिक्रान्तं यथा भवति तथा ॥ **सन्तापभाजाम्** सन्तापान् वेदनान् भजन्ते अनुभवन्तीति

सन्तापभाजः तेषाम् । 'भजो ण्विः' (पा.सू-३.२.६२) इति ण्विप्रत्ययः । अस्माकं त्वदनुवर्तिनाम् । भगवत ऐश्वर्यादयो गुणा अस्य सन्तीति भगवान् तस्य । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा' इति वचनात् ।

अथवा मुक्तिरूपपरमफलदत्वेनान्तर्यामित्वेन वा सम्भर्तृत्वात् अवान्तरस्वर्गादि-फलदत्वेन बहिर्नियामकत्वेन वा भर्तृत्वाच्चाधिपतित्वेन ब्रह्मोपदेष्टृत्वेन च गन्तृत्वात् नेतृत्वात् स्वपदप्रापकत्वेन गमयितृत्वाद्वा सृष्ट्यादिरूपगतिकर्तृत्वाद्वा सर्वभूता-धारत्वात्सर्वभूतावासवत्वाद्वा भगवान् । 'डु भृञ् धारणपोषणयोः' 'गमॢ गतौ' इति धातुद्वयपूर्वात् 'वस निवासे' इत्यतो डप्रत्ययः । प्रशस्तनित्यानवधिक-पूर्णैश्वर्यादिषड्गुणपूर्णत्वाद्वा ज्ञानशक्त्याद्यनन्तगुणपरिपूर्णत्वाद्वा अशेष-जगदुत्पत्यादिमत्वाद्वा भगवान् । तदस्यास्तीत्यादिना वैपुल्यानेकत्वप्रशंसानित्ययोग-रूपार्थे मतुप् प्रत्ययः । तथा निरुक्तं विष्णुपुराणे–

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते ।
मैत्रेये भगवच्छब्दः सर्वकारणकारणे ॥
सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।
नेता गमयिता स्रष्टा गकारोऽर्थस्तथा मुने ॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।
स च भूतेष्वशेषेषु वकारार्थस्तथाऽव्ययः ।
एवमेष महाशब्दो भगवानिति सत्तम ।
परब्रह्मस्वरूपस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेणान्यत्र ह्युपचारतः ॥

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ।। इति ।

**माधवस्य** मापतेः । 'इन्दिरा लोकमाता मा रमा मङ्गलदेवता(क्षीरोदतनया रमा)' इत्यमरः ।। **पदयुगे** चरणयुग्मे । 'युग्मं तु युगलं युगम्' इत्यमरः ।। **एकां** मुख्याम् । 'एके मुख्यान्यकेवला' इत्यमरः ।। **सन्ततं** अत्यन्तम् । प्रकर्षेण देहि । हन्त हर्षे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविशादयोः' इत्यमरः । 'श्रियं वसाना अमृतत्वमायन्' (ऋ.सं.मं-९,सू-९४,मन्त्र-४) इत्यादिश्रुतेः भगवद्भक्तिवत्सकल-सौभाग्यदेवतायाः श्रियोऽपि भक्तेरावश्यकत्वात्भजनस्य पार्थक्येन निषिद्धत्वात् तद्विशिष्टत्वेन भगवद्भजनं कर्तव्यमिति सूचयितुं रमापतित्वसङ्कीर्तनम् । भजनीय-पदयुगलस्य भगवतो विशिष्टेष्टाधिकृतत्वसूचनार्थं च भवति ।। **अथ** अनन्तरम् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । उतशब्दोऽप्यर्थः । उक्तानु-कर्षणार्थः । 'उताप्यर्थविकल्पयोः' इत्यमरः । वायोस्ते पदयुगेऽपि एकां **सन्ततं** अत्यन्तं प्रदिश हन्त । एवंविधां भक्तिं दास्यतीति हर्षः । तथा च–

महात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा इति ।
(महा.भा.ता.नि.अ-१,श्लो-८५)

सैव पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यव्यवहिता ययात्मा सुप्रसीदति । (भाग.स्कं-१,अ-२,श्लो-६)

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मनः ।। (श्वेता.उ.६-२३)

इत्यादेः । इष्टदेवताभक्तिः सकलपुरुषार्थसाधनमिति मुमुक्षुणावश्यमभ्यर्थनीयेति भावः ।। ७ ।।

## भगवन्तरायकृता लघुनिगूढार्थप्रकाशिका

अथ भक्तिं प्रार्थयते– **मूर्धनीति** ॥ भविष्यद्विधात्रे इत्यत्र भो इष्यत् विधात्रे इति । वायो इत्यत्र वा यः अ इति पदच्छेदः । वायोरिति पाठे अ इति । तथा च उत्कृत्वा रतत्वाच्च उत । दुःखलक्षणान्नरहितत्वादथ । अन्नं थम् (छां.उ.१-३-५) इति हि श्रुतिः । 'अनश्नन्नन्यः' (आथर्व.खं-५,मं-१) इति च । भवत्यस्ति सदा सर्वत्रेति वा 'भूबहौ बहुः पूर्णतायाम्' इति पूर्णत्वाद्वा भो नित्यव्याप्त गुणपूर्ण हे आनन्दरूप । 'आनन्दत्वादनामासौ' इति वचनात् । हे हरे । भुवि पूर्णे भगवतस्ते वा तवैव पदयुगे **अत्यन्तं** सन्ततमिह संसारे सन्तापभाजामस्माकं एकां प्रधानां भक्तिमत्यन्तं सन्ततं अकारवाच्यस्त्वं प्रदिश देहीत्यन्वयः । तव भक्तिदाने किं त्वया मे प्रयोजनं स्यादिति नमस्कारमात्रं करोमीत्याह– **मूर्धनीति** ॥ यः सज्जनोऽत्यन्तमन्तमतिक्रान्तं सन्ततं सम्यग्व्याप्तं त्वा भजति तस्य बन्धपाशच्छेत्रे सुखानां दात्रे वायो इत्यस्य एकपदत्वे हे वायो हरे भजति भजके जने सुखानां दात्रे इति । तथा इष्यद्विधात्रे । इष्यन्निच्छंश्चेद्विदधात्येवेतीष्यद्विधात्रे । दिवो द्योतमानाया लक्ष्म्या भर्त्रे । यद्वा द्युशब्दवाच्यवैकुण्ठादिलोकभर्त्रे तुभ्यं एषामञ्जलिर्मया मूर्धनि दृढतरं बध्यते । प्रणामः क्रियत इति यावत् ॥ ७ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– मूर्धन्येति** ॥ हे वायो । बन्धपाशच्छेत्रे । इह भुवि भजति आनन्ददात्रे भविष्यद्विधात्रे द्युभर्त्रेति एषः अञ्जलिः मे मूर्ध्नि दृढतरं यथा भवति तथा बध्यते हन्त । सन्ततम् । सन्तापभाजां अस्माकं भगवतो माधवस्य पदयुगे वायो । ते पदयुगे एकान्तभक्तिं अत्यन्तं प्रदिश । अत्यन्तं यथा भवति तथा दृढतरं क्रियाविशेषणाव्ययम् । बध्यते । 'बध बन्धने' लङात्मनेपदि प्रथम-पुरुषैकवचनम् ।

**विग्रहवाक्यानि– बन्धपाशच्छेत्रे ॥** बन्ध एव पाशः बन्धपाशः बन्धपाशस्य छेत्ता बन्धपाशच्छेत्ता तस्मै बन्धपाशच्छेत्रे । **भविष्यद्विधात्रे** भविष्यन् चासौ विधाता च भविष्यद्विधाता । तस्मै ॥ **द्युभर्त्रे** दिवो भर्ता द्युभर्ता । तस्मै ॥ **प्रदिश** प्रेत्युपसर्गः । 'दिश अतिसर्जने' लोट् परस्मैपदमध्यमपुरुषैकवचनम् । पदयोर्युगं पदयुगम् । तस्मिन् **पदयुगे ॥ सन्तापभाजाम्** सन्तापस्य भाजः । तेषां सन्तापभाजाम् ॥ **माधवस्य** मायाः धवः माधवः तस्य ॥ ७ ॥

**साभ्रोष्णाभीशुशुभ्रप्रभमभयनभो भूरिभूभृद्विभूति**
**भ्राजिष्णुर्भूर्ऋभूणां भवनमपि विभोऽभेदि बभ्रे बभूवे ।**
**येन भ्रूविभ्रमस्ते भ्रमयतु सुभृशं बभ्रुवद्दुर्भुताशान्**
**भ्रान्तिर्भेदावभासस्त्विति भयमभिभूर्भोक्ष्यतो मायिभिक्षून् ॥ ८ ॥**

## कविकर्णामृतम्

अतीतश्लोके भक्तिं याचितस्य भगवतः श्रीवायोर्भ्रूविभ्रमस्यानेकसामर्थ्यं वर्णयति– **साभ्रेति ॥ हे अभय** न विद्यते भयं यस्य तस्य सम्बुद्धिरभय ॥ **विभो** व्यापक । **ते** तव **येन** भ्रूविभ्रमेण ॥ **साभ्रोष्णाभीशुशुभ्रप्रभमभयनभोभूरि-भूभृद्विभूतिभ्राजिष्णुः ॥** अभ्राणि मेघाः । 'अभ्रं मेघो वारिवाहः' इत्यमरः । उष्णाभीशुरुष्णरश्मिः सूर्यः । शुभ्रप्रभः शुभ्रांशुश्चन्द्रः । तैः सह वर्तते यत् । 'तेन सहेति तुल्ययोगे' (पा.सू-२.२.२८) इति तुल्ययोगे बहुव्रीहिः । नभोऽन्तरिक्षम् । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । भूरिप्रभूता या भूभृतां राज्ञां विभूतिरैश्वर्यं तया भ्राजिष्णुर्भासनशीला । 'भुवश्च' (पा.सू-३.२.१३८) इत्यनुक्तसमुच्चयार्था-च्चकारादिष्णुच् प्रत्ययः । प्रयोगश्च भ्राजिष्णुना लोहितचन्दनेन[३७] इति ॥ **भूः** भूमिः ॥ **ऋभूणां** देवानाम् । 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः । **भवनं** वेश्म सुरलोकोऽपि ॥ **अभेदि** व्यदारि । भिदेः कर्मणि लुङि 'चिण् भावकर्मणोः' इति चिण् । 'चिणो लुक्'(पा.सू-६.४.१०४) **बभ्रे** दध्रे । 'डुभृञ् धारणपोषणयोः'

३७. कुङ्कुमं घुसृणं वर्णं प्रोक्तं लोहितचन्दनम् इत्यभिधानात् ।

इत्यस्मात् लिट् ॥ **बभूवे** लेभे । 'भू प्राप्तौ' इत्यस्मात्कर्मणि लिट् । नभोभू-ऋभुभवनानामस्योदञ्चितभ्रूविलासमात्रेण सृष्टिस्थितिलया भवन्तीत्यभिप्रायः । अभिभावयति विपक्षान् निराकरोतीत्यभिभूः स भ्रूविभ्रमः ॥ **बभ्रुः** नकुलः । तद्वत् **दुर्भृताशान्** दुष्टं भृता चञ्चलतया धृता आशा इच्छा यैस्तान् ॥ **भेदावभासः** ॥ जीवेशजडानां य परस्परं पञ्चधा भेदः सत्यत्वेन 'यच्चिकेत सत्यम्' इत्यादि-प्रमाणसिद्धः तस्य **अवभासः** प्रतीतिः शुक्तिरजतवद्भ्रान्तिः मिथ्येति वदतः । अत एवान्यथाज्ञानेन भयमन्धतमसे **भोक्ष्यतः** अनुभविष्यतः **मायिभिक्षून्** मायिमस्करिणः **सुभृशं** अत्यर्थं **भ्रमयतु** मोहितान् करोतु । 'भ्रमु अनवस्थाने' इत्यस्माल्लोट् ॥ ८ ॥

## बालबोधिनी

अतीतश्लोके भक्तिं याचितस्य भगवतः श्रीवायोर्भ्रूविभ्रमस्यानेकसामर्थ्यं वर्णयति– **साभ्रोष्णेति** ॥ न विद्यते भयं यस्य स तथोक्तस्तत्सम्बुद्धिः हे अभय **विभो** व्यापक ॥ **ते** तव **येन** भ्रूविभ्रमेण ॥ **अभ्राणि** मेघास्तानि च । 'अभ्रं मेघो वारिवाहः' इत्यमरः ॥ **उष्णाभीशुः** उष्णरश्मिः सूर्यः स च **शुभ्रप्रभः** शुभ्रकान्तिश्चन्द्रः स च तैः सह वर्तमानं साभ्रोष्णाभीशुशुभ्रप्रभम् । 'तेन सहेति तुल्ययोगे' (पा.सू-२.२.२८) इति बहुव्रीहिः । नभः ॥ **भूरिभूभृद्विभूतिः** भूरिः प्रभूता । भूभृतां राज्ञाम् ॥ **विभूतिः** ऐश्वर्यं तया । यद्वा **भूरिभूभृतो** बहुलपर्वतास्तेषां विभूतिभिरिति वा । भ्राजिष्णुर्भासनशीला । भुवश्चेत्यनुक्तसमुच्चायकचकारा-दिष्णुच् ॥ **भूर्भूमिः** **ऋभूणां** देवानाम् 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः ॥ **भवनं** वेश्म सुरलोकोऽपीत्यर्थः । अभेदि व्यदारि 'भिदिर् विदारणे' कर्मणि लुङ् ॥ **बभ्रे** दध्रे । डु भृञ् धारणपोषणयोः' कर्मणि लिट् ॥ **बभूवे** लेभे 'भू प्राप्तौ' कर्मणि पूर्ववल्लिट् । नभोभूस्वर्गोपलक्षितसमस्तलोकानां सृष्टिस्थितिलया येन भ्रूविलासमात्रेण भवन्तीत्यभिप्रायः । अभिभावयति विपक्षान्निराकरोतीत्यभिभूः स **भ्रूविभ्रमो** भ्रूविलासः । बभ्रुर्नकुलो मार्जारो वा तद्वत् ।'बभ्रुः स्यान्नकुलेऽपि

च' इति हलः । दुष्टा च सा भृता च दुर्भृता चञ्चलतया धृतेत्यर्थः । तादृशी आशा इच्छा यैस्ते तथा तान् । यथा मार्जारो देवतोपभोग्यं चरुपुरोडाशादिकं स्वस्य कदाचिदप्ययोग्यमप्युपभोक्तुं दुराशां बिभर्ति । एवं मायिसन्यासिनोऽपि परकीयं सर्वेश्वरत्वादिकं स्वसम्बन्धीति दुराशां बिभर्तीत्यर्थः । भेदो जीवेश्वरजडानां यः परस्परं पञ्चधा भेदः 'यच्चिकेतसत्यं' (ऋ.सं.मं-१०,सू-५५,मन्त्र-६) इत्यादिप्रमाणसिद्धः तस्यावभासः प्रतीतिः भ्रान्तिः शुक्तिरजतप्रतीतिवत्मिथ्येति वदन्तः अत एवान्यथाज्ञानेन भयमन्धे तमसि भोक्ष्यतोऽनुभविष्यतो **मायिभिक्षून्** मायावादिसन्यासिनो **भृशम्** अत्यन्तं **भ्रमयतु** मोहितान् करोतु 'भ्रमु अनवस्थाने' लोट् । प्रत्यक्षादिप्रमाणसिद्धो भेदावभासो भेदप्रतातिर्गगनश्यामताप्रतीतिवद्भ्रान्तिरिति भ्रमयत्विति वा योजना ॥ ८ ॥

## मन्दबोधिनी

इदानीं वायोः भ्रूविभ्रमेण सृष्ट्यादिकर्तृत्वरूपमहासामर्थ्यं वर्णयति– **साभ्रोष्णेति** ॥ न विद्यते भयं यस्य तस्य सम्बुद्धिः ॥ **हे अभय** ॥ हे मुख्यप्राण ॥ **ते** ॥ तव । सः ॥ **भ्रूविभ्रमः** ॥ **मायिभिक्षून्** ॥ मायिसन्यासिनः सङ्करादीन् । 'भिक्षुः परिव्राट् कर्मान्दी' इति सन्यासिपर्यायामरः ॥ **सुभृशम्** । अत्यन्तम् ॥ **भ्रमयतु** ॥ मोहितान् करोतु । 'भ्रमु सञ्चलने' इत्यतो लोट् परस्मैपदम् । भ्रमयतु-भ्रमयतात् भ्रमयतां भ्रमयन्तु इति रूपाणि । स कः । हे विभो । विशिष्टपुरुषार्थ-जातं विविधं कार्यं वास्माद्भवतीति विभुः तस्य सम्बुद्धिः । हे मुख्यप्राण । त्वयेति शेषः । **येन** भ्रूविभ्रमेण । भ्रूविलासेन ॥ **भूः** ॥ भूलोकः । **नभः** । अन्तरिक्षम् । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । भुवर्लोक इति यावत् ॥ **ऋभूणाम्** ॥ देवानाम् । भवनम् । गेहम् । स्वर्गलोकः । 'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृताऽन्धसः' इत्यमरः । अप्येवं भुवनत्रयमपि बभूवे । अभावि सृष्टमित्यर्थः । भूप्राप्तौ इत्यस्माद्धातोः कर्मणि लिडात्मनेपदम् । बभूवे बभूवाते बभूविरे इति रूपाणि । येन भुवनत्रयं **बभ्रे** ॥ दध्रे । पालितमित्यर्थः । 'डु भृञ् धारणपोषणयोः' इति

कर्मणि लिडात्मनेपदम् । बभ्रे बभ्राते बभ्रिरे । इति रूपाणि । येन भुवनत्रयं **अभेदि** ॥ व्यदारितमित्यर्थः । 'भिदिर् विदारणे' इत्यस्माद्धातोः कर्मणि लुङ् । अभेदि अभेदिषातां अभेदिषत इति रूपाणि । कथंभूतं नभः ॥ **साभ्रोष्णाभीशुशुभ्रप्रभम्** ॥ **अभ्राणि** मेघाः । 'अभ्रं मेघो वारिवाहः' इत्यमरः । उष्णा अभीशवो रश्मयः यस्य स **उष्णाभीशुः** सूर्यः । 'अभीशुः प्रग्रहे रश्मौ' इत्यमरः । शुभ्राः प्रभा यस्य स **शुभप्रभः** शुभ्रकान्तिश्चन्द्रः । अभ्राणि च उष्णाभीशुश्च शुभ्रप्रभश्च ते तथोक्ताः । अभ्रोष्णाभीशुशुभ्रप्रभैः सहितं साभ्रोष्णाभीशुशुभ्रप्रभम् । कथम्भूता भूः । **भूरिभूभृद्विभूतिर्भ्राजिष्णुः** ॥ भुवं बिभ्रति पोषयन्तीति **भूभृतः** राजानः । तेषां **विभूतयः** गजतुरगाद्यैश्वर्याणि ॥ **भूरयः** बह्व्यश्च ताः भूभृद्विभूतयश्च ताभिः ॥ **भ्राजिष्णुः** ॥ भासनशीला । कथम्भूतः भ्रूविभ्रमः ॥ **अभिभूः** ॥ अभिभावयति शत्रून् पराभावयतीत्यभिभूः । कथम्भूतान्मायिभिक्षून् ॥ **बभ्रुवत्** ॥ बिडालवत् ॥ **दुर्भृताशान्** ॥ दुष्टाः भृताः धृता आशा इच्छा यैस्ते तथोक्ताः तान् । 'बभ्रुर्बिडालो नकुलः' इत्यमरः । यथा बिडालः देवयजनाद्युचितसुगुप्तचरुपुरोडाशभक्षणे दुराशां बिभर्ति । तद्वत् मायिनोऽपि श्रुत्यादिप्रमारक्षितविविधविश्वसत्यत्वादिनिराकरणे दुराशां बिभ्रतीत्यर्थः । पुनः कथं भूतान् मायिभिक्षून् ॥ **भेदावभासः** जीवेशादीनां पञ्चभेदप्रतीतिः **भ्रान्तिरिति** वदत इति शेषः । पुनः कथं भूतान् मायिभिक्षून् । अत एव अन्यथाज्ञानेन **भयं** अन्धे तमसि अत्यन्तक्लेशभयम् ॥ **भोक्ष्यतः** ॥ भोगं करिष्यतः अनुभविष्यतः इति यावत् ॥ ८ ॥

## भावप्रदीपिका

श्रुत्याद्यवधारितमहापुरुषार्थसाधनताकामा भगवन्निरवधिकानन्तानवद्यकल्याणगुणात्मकत्वज्ञानपूर्वकस्वात्मात्मीयसमस्तेष्टवस्तुभ्योऽनेकगुणाधिकान्तरायसहस्राप्रतिबद्धनिरन्तरप्रेमप्रवाहलक्षणायाः भक्तेः माहात्म्यज्ञानपूर्वकत्वात् तस्य च तद्विरोध्यद्वैतवादनिरासं विनाऽनुपपत्तेस्तदप्रतिभीकरणं प्रार्थयते– **साभ्रोष्णेति** ॥ **हे अभय** ॥ न विद्यते भयं यस्य स अभयः तस्य सम्बुद्धिः । न विद्यते भयं

यस्य प्रसादादिति वा ॥ **हे विभो** समर्थ । अथवा विशिष्टात् विष्णोर्भवत्युत्पद्यत इति विशिष्टपुरुषार्थजातं विविधं कार्यं वास्माद्भवतीति वा विभुः तस्य सम्बुद्धिः । 'विप्रसंम्भ्योड्वसंज्ञायाम्' (पा.सू-३.२.१८०) इति डुप्रत्ययः । तथाविध एवम्भूतस्य ते भ्रुवोः **विभ्रमः** विलासः । माया मिथ्याभूतसकलप्रपञ्चोपादानमज्ञानं येषां मतेऽस्तीति मायिनः । मायाशब्दस्य व्रीह्यादित्वात् 'व्रीह्यादिभ्यश्च' (पा.सू-५.२.१२६) इति इनिप्रत्ययः । ते च ते भिक्षवश्च तान् ।

यद्वा अत्र मायाशब्देनात्रैन्द्रजालिका विद्या गृह्यते । सा एषामस्तीति मायिनः । भिक्षवः सन्यासिन इव तान् । तेन भिक्षुत्वमायित्वयोर्न विरोधः । 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः ॥ **भृशं** अत्यर्थं यथा भवति तथा **भ्रमयतु** भ्रान्तान् करोतु । प्रत्युत्तरस्फूर्त्यादिरहितान् करोत्वित्यर्थः । 'भ्रमु चलने' । लोट् च इति प्रार्थने लोट् । सः कः । येन **अभ्राणि** मेघाः । 'अभ्रं मेघो वारिवाहस्तनियत्नुर्बलाहकः' इत्यमरः । उष्णाः अभीशवः रश्मयः किरणा यस्य स तथोक्तः सूर्यः । 'अभीशुः प्रग्रहे रश्मौ' इत्यमरः । शुभ्रा प्रभा कान्तिर्यस्य स तथा चन्द्रः । एतैः सह वर्तमानं तत् तथा । 'तेन सहेति तुल्ययोगे' (पा.सू.२.२.२८) इति तुल्ययोगे बहुव्रीहिः ॥ **नभः** गगनम् । 'नभोऽन्तरिक्षं गगनं' इत्यमरः । भूरिभिः भूभृतां नृपाणाम् । विभूतिभिः ऐश्वर्यैः ॥ **भ्राजते** शोभते । तच्छीला तथोक्ता । 'भूभृद्भूमिधरे नृपे' इत्यमरः । 'भ्राजृदीप्तौ' इत्यस्मात् 'भुवश्च' (पा.सू-३.२.१३८) इत्यनुक्तसमुच्चयार्थाच्चकारात्ताच्छील्ये इष्णुच् प्रत्ययः । भूर्भूमिः । 'भूर्भूमिरचलानन्ता' इत्यमरः ॥ **ऋभूणाम्** अमर्त्यानाम् । 'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः' इत्यमरः । **भवनं** मन्दिरमपि स्वर्गोऽपीति यावत् । 'निशान्तपस्त्यसदनभवनागारमन्दिरं' इत्यमरः ॥ **अभेदि** अनाशि । भिदेः कर्मणि लुङ् ॥ **बभ्रे** दध्रे । कर्मणि लिट् । अपीत्यावृत्यात्राप्यनुषञ्जनीयम् । बभूवे उदपादि अपि । भू प्राप्तौ इत्यस्मात् कर्मणि लिट् ।

ननु कथमस्य पराप्रतिभीकरणे शक्तिरित्यतस्तं विशिनष्टि । अभिभवति सर्वान् पराजयति इत्यभिभूः कर्तरि क्विप् । भवतेरकर्मकत्वेऽपि उपसृष्टकर्मकत्वात् सर्वाभि-

भवनसमर्थस्य कतिपयाभिभवनशक्तिः किमुच्यत इति भावः । ननु सत्स्वपि अन्येषु दुर्वादिषु किमित्यसाधारण्येण मायिसन्यासिनामेव अप्रतिभीकरणमाशास्यत इत्यतः तान्विशिनष्टि ॥ **भेदावभासो भ्रान्तिरिति** ॥ **बभ्रुवद्दुर्भृताशान्** ॥ तुशब्द एवार्थे । तुः स्याद्भेदेऽवधारणे' इत्यमरः । भेदस्यावभासो ज्ञानम् । भ्रान्तिरप्रमैवेति यावत् । बभ्रुवत् बभ्रुणा मार्जारेण नकुलेन वा तुल्यमिति बभ्रुवत् । 'तेन तुल्यं क्रिया चेद्वतिः' (पा.सू-५.१.११५) इति वतिप्रत्ययः । 'बभ्रुर्बिडाले नकुले' इत्यमरः । 'विफुले नकुले विष्णौ बभ्रुः स्यात् पिङ्गले त्रिषु' इति च ।

यद्वा बभ्रोरिति बभ्रुवत् । 'तत्र तस्येव' (पा.सू-५.१.११६) इति वतिप्रत्ययः । दुष्टा भृता धृता आशा स्वयोग्यफलाकाङ्क्षा तृष्णा यैस्ते तथोक्तास्तान् । 'आशा दिगतितृष्णयोः' इति यादवः । यथा मार्जारो नकुलो वास्यायोग्यं फलादिकमाकाङ्क्षते तद्वदेते श्रुत्यादिबाधितमपि जीवपरमात्मैक्यं स्वात्मन आशासते इत्यर्थः । एक्योपासनाफलं निरूपयंस्तान् विशिनष्टि ॥ **भयं भोक्ष्यत इति** ॥ भगवद्द्वेषादिरूपं स्वस्वयोग्यतमःप्राप्तिसाधनसम्पूर्तौ सत्यामेव तमसीति शेषः । भयं दुःखाद्यनर्थमात्रोपलक्षणमेतत् । भोक्ष्यतः अनुभविष्यतः । 'लृटः सद्वा' (पा.सू-३.३.१४) इति शत्रादेशः । ननु भोक्ष्यत इति कथम् । 'भुजोऽनवने'(पा.सू-१.३.६६) भुजेरात्मनेपदं स्यान्न तु पालनेऽर्थे'। भोक्ष्यमाणानिति भाव्यमिति चेत् नैष दोषः । अत्रानुभवितृत्वेन दुःखाद्यनुभवस्वामित्वस्य विवक्षितत्वात् । तथा च–

ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः ।
शास्त्रतत्वमविज्ञाय तथावादबला जनाः ॥

कामक्रोधाभिभूतत्वादहङ्कारवशंगताः ।
यथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥

ब्रह्मस्तेनानिरानन्दा अपक्वमनसोऽशिवाः ।
नैर्गुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥

तेषां तमश्शरीराणां तम एव परायणम् ।
यतः सरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ॥

कथमस्मिन् स इत्येव सम्बन्धः स्यादसंहितः इति मोक्षधर्मे ।

प्रेरकः सर्वदेहानां प्राणधीचोदिता च सः ॥
विष्णुस्संसारिणोऽन्यो यस्तमविज्ञाय मूढधीः ।
देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यतेऽऽत्मनः ।

अतः संसारपदवीं याति जीवेशयोः सदा ।
वैलक्षण्यं परं ज्ञात्वा मुच्यते बध्यतेऽन्यथेति ॥

परमोपनिषदि । अन्यत्रापि सर्वत्र जीवेश्वरभेदज्ञानस्य मोक्षसाधनत्वोक्तेरुक्त-विधाया भक्तेश्च तद्वैलक्षण्यज्ञानमन्तरेणासम्भवात् । तस्य च तत्प्रतिपक्षीभूतजीव-परैक्योपासकमायिनामप्रतिभीकरण एव दाढर्यं भवतीति असाधारणतया तदप्रतिभीकरणशंसनं युक्तमेवेति भावः ॥ ८ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

दुर्वादिपराजयस्य 'अविद्यया मृत्युं तीर्त्वा' (ईशावास्य-११) इति मृत्युतरणो-पायत्वात्तं मया कारयेति प्रार्थयते– **साभ्रोष्णेति ॥ हे अभय विभो ॥** साभ्रो-रुष्णाभीषुणा सूर्येण शुभ्रप्रभेण चन्द्रेण सहितं नभोऽन्तरिक्षं भूरि भूभृतां विभूत्या भ्राजिष्णुर्भूः ऋभूणां देवानां भवनं स्वर्गोऽपि येन भ्रूविभ्रमेण बभूवे बभ्रे अभेदि च उत्पत्तिस्थितिलयान् प्राप स ते भ्रूविभ्रमो बभ्रुवन्मार्जारवद्दुष्टाः भृता आशा इच्छा यैस्ते दुर्भृताशाः । तान् यथा बिडालो देवयजनोद्युचितसुगुप्तचरुपुरोडाशादिभक्षणे दुराशां बिभर्ति एवं मायिनोऽपि वेदादिप्रमाणसुरक्षितजगत्सत्यत्वादिनिराकरणे दुराशां बिभ्रतीति भावः ॥ **भेदावभासो** भ्रान्तिरेवेति वदत इति शेषः । तेन चान्ते तमसि नानाक्लेशभयं **भोक्षतो मायिभिक्षून् सुभृशं भ्रमयतु ॥** वादे मया पराजितान् कारयेति यावत् । तवैतदनायासमिति सूचनाय भ्रूविभ्रमप्रार्थनम् । कथम्भूतो भ्रूविभ्रमः । अभिभूः शत्रुपराजयप्रापकः ॥ ८ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– साभ्रेति ॥** हे अभय येन साभ्रोष्णाभीशुशुभ्रप्रभम् । नभः । भूरिभूभृद्विभूतिभ्राजिष्णुः । भूः ऋभूणाम् । भवनम् । बभ्रे । बभूवे । सोऽयं अभिभूते भ्रूविभ्रमः बभ्रुवत् । दुर्भृताशान् । भेदावभासः । भ्रान्तिरिति वदतः न भयं तमसि भोक्ष्यतो मायिभिक्षून् । सुभृशं भ्रमयतु ।

**विग्रहवाक्यानि– साभ्रोष्णाभीशुशुभ्रप्रभम् ॥** उष्णाः अभीशवो यस्य सः उष्णाभीशुः । शुभ्रा प्रभा यस्य स शुभ्रप्रभः । अभ्राणि च उष्णाभीशुश्च शुभ्रप्रभश्च अभ्रोष्णाभीशुशुभ्रप्रभाः । अभ्रोष्णाभीशुशुभ्रप्रभैः सहितः साभ्रोष्णाभीशुशुभ्रप्रभः । तम् । **हे अभय** न विद्यते भयं यस्य सः अभयः तत्सम्बुद्धिः ॥ **भूरिभूभृद्विभूति-भ्राजिष्णुः ॥** भूः भृता विभूतिः भूभृद्विभूतिः । भूरिणी च सा भूभृद्विभूतिश्च भूरिभूभृद्विभूतिः । भूरिभूभृद्विभूत्या भ्राजिष्णुः भूरिभूभृद्विभूतिर्भ्राजिष्णुः ॥ **अभेदि** 'भिदलृ विदारणे' लुङ् आत्मनेपदं प्रथमपुरुषैकवचनम् ॥ **भ्रूविभ्रमः** भ्रुवोः विभ्रमः भ्रूविभ्रमः ॥ **भ्रमयतु** 'भ्रम सञ्चलने' लोट् परस्मैपदम्, प्रथमपुरुषैकवचनम् ॥ **दुर्भृताशान्** दुष्टा भृता आशा यैस्ते दुर्भृताशाः । तान् ॥ **भेदावभासः** भेदस्य अवभासो भेदावभासः । अभिभवति ॥ **मायिभिक्षवः** मायिनश्च ते भिक्षवश्च मायिभिक्षवः । तान् मायिभिक्षून् ॥ ८ ॥

**येऽमुं भावं भजन्ते सुरमुखसुजनाराधितं ते तृतीयं**
**भासन्ते भासुरैस्ते सहचरचलितैश्चामरैश्चारुवेषाः ।**
**वैकुण्ठे कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीला**
**लावण्यापूर्णकान्ताकुचभरसुलभाश्लेषसम्मोदसान्द्राः ॥ ९ ॥**

## कविकर्णामृतम्

अत्र श्रीवायोस्तृतीयावतारः सुरनरोत्तमादिसेवितः । एतत्सेवया वैकुण्ठपदप्राप्तिः । वैकुण्ठपदं सर्वोत्कृष्टम् । वैकुण्ठपदे नित्यनिर्दोषस्वेच्छानुरूपसुखानि सन्ति ।

चतुर्मुखमुखमुक्तानां मुक्तावपि पूर्ववन्नियत्योच्चविनीचत्वेनावस्थानमित्याह– **येऽमुं भावमिति ॥** हे पवन ये जनाः **सुरमुखसुजनाराधितम्** सुराः मुखानि मुख्याः । 'मुखं मुख्ये च वक्त्रे स्यात्' इति विश्वः येषां तैः सुजनैः सज्जनैः आराधितं सेवितम् । तृतीयम् त्रयाणां पूरणम् । 'त्रेः सम्प्रसारणं च' (पा.सू-५.२.५५) इति तीयप्प्रत्ययः ॥ **अमुं** स्तुत्यत्वेन प्रकृतं **ते** तव **भावम्** अवतारं **भजन्ते** सेवन्ते । ते जनाः **भासुरैः** भासनशीलैः । 'भञ्जभासमिदो घुरच्' (पा.सू-३.२.१६१) । **सहचरचलितैः** सहचरन्तीति सहचरा भृत्याः । तैश्चलितैर्वीजितैश्चामरैः प्रकीर्णकैः । 'चामरं तु प्रकीर्णकम्' इत्यमरः । चारुर्मनोहरो वेषोऽलङ्कारो येषां ते । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । **कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताकुचभरसुलभाश्लेषसम्मोदसान्द्राः ॥** कण्ठलग्नानां ग्रीवासक्तानाम् । स्थिरैः निश्चलैः । शुचिभिः मनोहरैः । विलसत्कान्तिभिः भासमानद्युतिभिश्च । तारुण्येन यौवनेन च । 'तारुण्यं यौवनं समा' इत्यमरः । लीलाभिः शृङ्गारचेष्टाभिश्च । लावण्येन प्रसिद्धावयवातिरिक्तच्छायातरलत्वेन च । तदुक्तम्–

> मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
> प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति ॥

एतैरापूर्णानां आढ्यानां कान्तानां अङ्गनानां सम्बन्धिनः कुचभरस्य स्तनभारस्य यः सुलभाश्लेषः सुलभालिङ्गनं तेन जातः सम्मोदो हर्षस्तेन सान्द्राः समृद्धाः सन्तो **वैकुण्ठे** विष्णुलोके **भासन्ते** राजन्ते ॥ ९ ॥

## बालबोधिनी

श्रीवायोस्तृतीयावतारः सुरनरोत्तमादिसेवितः । एतत्सेवनया वैकुण्ठपदप्राप्तिः । वैकुण्ठपदं सर्वोत्कृष्टम् । वैकुण्ठपदे नित्यनिर्दोषस्वेच्छानुरूपसुखानि सन्ति । चतुर्मुखादिमुक्तानां मुक्तावपि पूर्ववन्नीचोच्चत्वेनावस्थानमित्याह– **येऽमुमिति ॥** हे पवन ये जनाः ॥ **सुरमुखसुजनाराधितम्** ॥ सुरा मुखानि मुख्यानि येषां

ते तथोक्ताः 'मुखं मुख्ये च वक्त्रे स्यात्' इति विश्वः । तादृशा ये सुजनाः सज्जनास्तैः आराधितं सेवितम् ॥ **तृतीयम्** त्रयाणां पूरणस्तृतीयस्तम् । त्रेः सम्प्रसारणं च' (पा.सू- ५.२.५५) इति तीयप्रत्ययः ॥ **अमुं** स्तुत्यत्वेन प्रकृतं **भावम्** अवतारं **भजन्ते** सेवन्ते । 'भज सेवायां' लट् । ते जना **भासुरैः** भासनशीलैः 'भञ्जभासमिदो घुरच्' (पा.सू-३.२.१६१) इति शीलार्थे घुरच् ॥ **सहचरचलितैः** सहचरन्तीति सहचरा भृत्यास्तैश्चलितैर्वीजितैश्चामरैः 'चामरं तु प्रकीर्णकं' इत्यमरः । चारुः मनोहरो वेषोऽलङ्कारो येषां ते तथा सन्तः । **कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताकुचभर-सुलभाश्लेषसम्मोदसान्द्राः** ॥ कण्ठे लग्ना आसक्ताः कण्ठलग्नाः । 'लगे सङ्ग' इति धातोः । ताश्च ताः । स्थिराणि निश्चलानि च तानि शुचीनि निर्मलानि च तानि विलसन्ति भास्वन्ति च तानि कान्तितारुण्यलीलालावण्यानि च । कान्तिः रुचिः सा च तारुण्यं यौवनं तच्च लीला क्रीडा सा च लावण्यं सौन्दर्यं तच्च तैरापूर्णाः सम्यक् पूर्णास्ताश्च ता अङ्गनाश्च तासां यः कुचभरः स्तनलक्षणो विषयः 'भरो विषयभरयोः' इति हेमचन्द्रः । कुचभरः स्तनयोरभ्यन्तरमिति वा । तस्य यः सुलभाश्लेषः सुखेनाप्रयत्नेन लभ्यः आश्लेष आलिङ्गनं तेन जातः सम्मोदः सम्यक् मोद आनन्दस्तेन सान्द्राः समृद्धाः सन्तः । वैकुण्ठो विष्णुलोकस्तस्मिन् ॥ **भासन्ते** राजन्ते । भासृदीप्तौ लट् ॥ ९ ॥

## मन्दबोधिनी

इदानीं वायोस्तृतीयावतारसेवया वैकुण्ठपदं प्राप्य तत्र नानाविधलौकिक-भोगायतनानि भवन्तीत्याह– **येऽमुं भावमिति** ॥ हे मुख्यप्राण । ये जनाः ॥ **अमुम्** ॥ स्तुत्यत्वेन प्रकृतम् ॥ **ते** ॥ तव । **तृतीयम् भावम्** ॥ जन्म मध्वावतार-मित्यर्थः । 'भावः स्वभावाभिप्रायचेष्टासत्तात्मजन्मसु' इत्यमरः ॥ **भजन्ते** ॥ सेवन्ते । 'भज सेवायाम्' इत्यतो लडात्मनेपदम् । भजते भजेते भजन्त इति रूपाणि । ते जनाः **वैकुण्ठे** ॥ वैकुण्ठलोके ॥ **भासन्ते** शोभन्ते । 'भासृ दीप्तौ'

इत्यतो लडात्मनेपदम् । भासते भासेते भासन्त इति रूपाणि । कथं भूतं तृतीयं भावम् ॥ **सुरमुखसुजनाराधितम्** ॥ सुराः मुखाः मुख्या येषां ते । ते च ते सुजनाश्च तैः आराधितः आसेवितः तम् । 'मुखं मुख्ये च वक्त्रे स्यात्' इत्यभिधानम् । कथम्भूताः ते जनाः ॥ **भासुरैः** ॥ शोभमानैः ॥ **सहचरचलितैः** ॥ सहचरन्तीति सहचराः भृत्याः तैः कर्तृभिः चलितैः वीजितैः चामरैः । करणैः । सेव्यमाना इति शेषः । पुनः कथम्भूताः ते जनाः ॥ **चारुवेषाः** ॥ चारुः मनोहरो वेषो अलङ्कारो येषां ते तथोक्ताः । पुनः कथम्भूतास्ते जनाः तानेव विशिनष्टि **कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताकुचभर-सुलभाश्लेषसम्मोदसान्द्राः** ॥ कण्ठलग्नेति कान्तानां विशेषणम् । स्थिराणि अनश्वराणि । शुचीनि निर्मलानि । विलसन्ति शोभमानानि । कान्तिः शोभा च । 'शोभा कान्तिर्द्युतिच्छविः' इत्यमरः । तारुण्यं यौवनं च । लीला विलासश्च । 'लीलाविलासक्रीडा च' इत्यमरः । लावण्यं सौन्दर्यं च कान्तितारुण्यलीला-लावण्यानि । स्थिराणि च तानि शुचीनि च तानि विलसन्ति च तानि कान्ति-तारुण्यलीलालावण्यानि च । एतैः आपूर्णाः सम्यक्पूर्णाः, कण्ठलग्ना ग्रीवासक्ताश्च ताः स्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णाश्च ताः कान्ताः प्रमदाश्च । 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । तासां कुचभरः स्तनभरः । तेन सुलभश्चासावाश्लेष आलिङ्गनं च अतिप्रयत्नानपेक्षया आलिङ्गनमिति यावत् । तेन जातश्चासौ सम्मोदः हर्षविशेषश्च तेन सान्द्रा समृद्धा इत्यर्थः ॥९॥

## भावप्रदीपिका

ननु कथमेतद्भक्तेर्महापुरुषार्थसाधनत्वमित्यतस्तत्सिषाधयिषुः तदुपयुक्ता-मन्वयव्याप्तिं निरूपयन्नाह– **येऽमुमिति** ॥ हे विभो ये जनाः ॥ **सुरमुख-सुजनाराधितम्** ॥ सुराः देवाः मुखानि मुख्या येषां ते सुरमुखाः । 'मुखं मुख्ये च वक्त्रे स्यात्' इत्यभिधानम् । एवं विधा ये सुजनाः शोभनजनाः । तैः आराधितः आसेवितः तम् ॥ **अमुं** मोक्षादिदातृत्वेन श्रुतिप्रसिद्धम् । स्तुत्यत्वेन

प्रकृतं वा ॥ **मध्वाख्यम्** ॥ **तृतीयम्** त्रयाणां पूरणस्तृतीयः तम् । 'त्रेः सम्प्रसारणं च' (पा.सू-५.२.५५) इति तीयप्रत्ययः ॥ **ते** तव ॥ **भावं** आत्मजन्म अवतारमिति यावत् । 'भावः सत्तास्वभावाभिप्रायचेष्टासत्तात्मजन्मसु' इत्यमरः ॥ **भजन्ते** ॥ भज सेवायां लट् । अत्र गुरुभक्त्या तत्साध्यगुरुप्रसादो गृह्यते । तेन च भगवद्भक्तिः । तया च तत्साध्यभगवत्प्रसाद इति द्रष्टव्यम् । तस्यैव मुक्तिरूप-फलोपहितत्वात् । ते जनाः ॥ **भासन्ते** ॥ शोभन्ते । तच्छीलानि तैः । 'भासृ दीप्तौ' इत्यस्मात् 'भञ्ज भासमिदो घुरच्'(पा.सू-३.२.१६१) घुरच् प्रत्ययः । सहचरन्तीति सहचराः भृत्याः । 'चरेष्टः' (पा.सू-३.२.१६) इति टप्रत्ययः । तैः चलितैः वीजितैः । चामरैः प्रकीर्णकैः । 'चामरं तु प्रकीर्णकम्' इत्यमरः । चारुर्मनोहरो वेषो येषां ते तथोक्ताः । सन्तः ॥ **वैकुण्ठे** विगतः कुण्ठो भङ्गो यस्मात्स विकुण्ठः । स एव वैकुण्ठः स्वार्थेऽण् । अस्मिन् मुक्तलोके । एवं श्वेतद्वीपादीनां सङ्ग्रहः ॥ **भासन्ते** शोभन्ते । वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यन्मुक्तिरूपफलस्य निश्चितत्वेन वर्तमानत्वविवक्षया लट् प्रत्ययः ।

ननु शोभामात्रस्यानिष्टनिवृत्तीष्टप्राप्तिसाधनत्वाभावान्न पुमर्थत्वमित्यत-स्तान्विशिनष्टि **कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्या-पूर्णकान्ताकुचभरसुलभाश्लेषसम्मोदसान्द्राः** ॥ स्थिराणि अनश्वराणि । शुचीनि निर्मलानि । विलसन्ति विराजमानानि । यानि कान्तितारुण्यलीलालावण्यानि । कान्तिः शोभा । 'शोभाकान्तिद्युतिच्छविः' इत्यमरः । तारुण्यं यौवनम् । लीला विलासः । 'लीला विलासक्रिडयोः' इत्यमरः । लावण्यं सौन्दर्यविशेषः । तदुक्तं 'मुक्ताफलेषु यच्छायां अन्तरत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमित्युच्यते' इति । तैः आसमन्तात् । सम्यग्वा । पूर्णाः व्याप्ताः याः कान्ताः कमनीयाः प्रमदाः । 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । कण्ठे लग्नाः सक्ताः याः कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताः तासां कुचानां स्तनानां भरणेन गौरवेण सुलभः सुप्राप्यः यः आश्लेषः सम्यगालिङ्गनं अतिप्रयत्नानपेक्षालिङ्गनमित्यर्थः । तेन यः सम्मोदः हर्षविशेषः तेन सान्द्राः

समृद्धाः । तथा चानश्वरनिर्मलविलसत्कान्तियौवनविलाससौन्दर्यविशेषादि-मनोहरगुणपूर्णकण्ठाश्लिष्टकमनीयप्रमदापीनकुचालिङ्गनादिसुखाभिव्यञ्जक-सामग्र्यभिव्यक्तस्वाभाविकस्वस्वयोग्यसुखपूर्णत्वान्नापुमर्थत्वं मोक्षस्याशङ्कनीयमिति भावः ॥ ९ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं भजकानां मोक्षो द्वेषिणां तमप्राप्तिरुदासीनानां नित्यं संसार एवेत्यर्थ-क्रमेणोपपादयंस्तत्राद्ये भजकानां मोक्षो द्वेषिणां तमःप्राप्तिरुदासीनानां नित्यं संसार एवेत्यर्थक्रमेणोपपादयंस्तत्राद्ये भजकानां मोक्षानुभवप्रकारमाह– **येऽमुमिति** ॥ ये जना अमुं (भाव्यते उपास्यते) उपासते मोक्षार्थमिति भावं बिम्बरूपं भजन्ते ते वैकुण्ठे चारुवेषादयः । सन्तो भासन्त इत्यन्वयः । कीदृशं भावम् । सुरमुख-सुजनैराराधितम् । क्षराक्षरविलक्षणत्वात् तृतीयम् ॥ ९ ॥

## श्रीनिवासतीर्थीया

**अन्वयः-येऽमुमिति** ॥ हे मारुत । सुरमुखसुजनाराधितम् । अमुं ते तृतीयं भावं भजन्ते ते भासुरैः सहचरचलितैः चामरैः वीजमानाः सन्तः चारुवेषाः कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताकुचभर-सुलभाश्लेषसम्मोदसान्द्राः सन्तो वैकुण्ठे भासन्ते ।

**विग्रहवाक्यानि– सेवन्ते** 'भज सेवायां' लडात्मने पदि प्रथमपुरुषबहु-वचनम् ॥ **सुरमुखसुजनाराधितम्** ॥ सुराः मुखाः येषां ते सुरमुखाः । सुरमुखाश्च ते सुजनाश्च सुरमुखसुजनाः । सुरमुखसुजनैः आराधितः तम् । सुरमुखसुजना-राधितम् ॥ **सहचरचलितैः** सहचरैः चलितानि सहचरचलितानि । तैः सहचरच-लितैः ॥ **चारुवेषाः** चारु वेषो येषां ते चारुवेषाः ॥ **कण्ठलग्नस्थिरशुचि-विलसत्कान्तितारुण्यलीलालावण्यापूर्णकान्ताकुचभरसुलभाश्लेशसम्मोदसान्द्राः** ॥ विलसन्ती च सा कान्तिश्च विलसत्कान्तिः । विलसत्कान्तिश्च तारुण्यं च लीला

च लावण्यं च विलसत्कान्तितारुण्यलीलालावण्यानि । स्थिराणि च तानि विलसत्कान्तितारुण्यलीलालावण्यानि च स्थिरशुचिविलसत्कान्तितारुण्यलीला-लावण्यानि । स्थिरलावण्यैः आ पूर्णाः । स्थिरशुचिविलसत्कान्तितारुण्य-लीलालावण्यापूर्णाश्च ताः कान्ताश्च । स्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्या-पूर्णकान्ताः । कण्ठलग्नाश्च ताः स्थिरशुचिविलसत्कान्तितारुण्यलीलालावण्या-पूर्णकान्ताश्च । कण्ठलग्नस्थिरशुचिविलसत्कान्तितारुण्यलीला लावण्यपूर्णकान्ताः । कुचानां भारः कुचभारः । कान्तानां कुचभारः । सुलभश्चासौ आश्लेषश्च सुलभा-श्लेषः । कुचभरस्य सुलभाश्लेषः कुचभरसुलभाश्लेषः । आश्लेषेण जातः सम्मोदः आश्लेषसम्मोदः । सम्मोदेन सान्द्राः सम्मोदसान्द्राः ॥ ९ ॥

**आनन्दान्मन्दमन्दा ददति हि मरुतः कुन्दमन्दारनन्द्या-**
**वर्तामोदान् दधाना मृदुपदमुदितोद्गीतकैः सुन्दरीणाम् ।**
**वृन्दैरावन्द्यमुक्तेन्द्वहिमगुमदनाहीन्द्रदेवेन्द्रसेव्ये**
**मौकुन्दे मन्दिरेऽस्मिन्नविरतमुदयन्मोदिनां देवदेव ॥ १० ॥**

## कविकर्णामृतम्

वैकुण्ठे भासन्त इत्युक्तम् । तमेव वैकुण्ठं वर्णयति-- **आनन्दानिति** ॥ हे **देवदेव** देवश्रेष्ठ ॥ **मृदुपदमुदितोद्गीतकैः** मृदूनि प्रतीयमानार्थानि पदानि सुप्तिङन्तरूपाणि यस्मिन् कर्मणि तत् ॥ **उदितानि** उदीरितानि उद्गीतानि उत्कृष्टगानानि यैः । 'गीतं गानमिमे समे' इत्यमरः । 'शेषाद्विभाषा' (पा.सू-५.४.१५४) इति कप् प्रत्ययः । तैस्तथोक्तैः ॥ **सुन्दरीणां** सुराङ्गनानां **वृन्दैः** समूहैः ॥ **आवन्द्यमुक्तेन्द्वहिमगुमदनाहीन्द्रदेवेन्द्रसेव्ये** आवन्द्याः आ समन्तात् सेव्याः । मुक्ताः प्राप्तमुक्तयः । 'मुक्ता तु मौक्तिके मुक्तः प्राप्तमुक्तौ च मोचिते' इति यादवः । इन्दुः चन्द्रः । अहिमगुः सूर्यः । मदनो मन्मथः । अहीन्द्रः शेषः । देवेन्द्रः सुरपतिश्च । तैः सेव्ये भजनीये ॥ **अस्मिन्** मुक्तास्पदत्वेन प्रस्तुते ॥ **मौकुन्दे** मुकुर्मोक्षः तं ददातीति तस्य विष्णोः सम्बन्धिनि । 'तस्येदम्' (पा.सू-

४.३.१२०) इत्यण् प्रत्ययः ॥ **मन्दिरे** वैकुण्ठे ॥ **मन्दमन्दाः** अतिशयेन मन्दाः । 'नित्यवीप्सयोः' (पा.सू-८.१.४) इति द्विर्वचनम्[३८] ॥ **कुन्दमन्दारनन्द्यावर्तामोदान्** ॥ कुन्दानि माध्यानि । अल्पमल्लिकापुष्पाणीत्यर्थः । मन्दाराणि मन्दाराख्यविशेषकुसुमानि । 'फले लुक्' (पा.सू-४.३.१६३) इति लुक् । नन्द्यावर्तानि नन्दिवर्धनकुसुमानि । तेषाम् गन्धाः । 'आमोदो गन्धहर्षयोः' इति विश्वः । तान् **दधानाः** वहन्तः **मरुतः** वायवः ॥ **अविरतम्** अनारतं यथा भवति तथा **उदयन्** उद्गच्छन् **मोदः** आनन्दः एषामस्तीति तेषाम् । 'अत इनि ठणौ' (पा.सू-५.२.११५) इति मत्वर्थीय इनि प्रत्ययः ।

ननु 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति प्रतिषेधादिना न भवितव्यम्[३९] । नैष दोषः । प्रतिषेधस्य प्रायिकत्वात् । प्रयोगबाहुल्याच्च । तथा मुरारिणा प्रायोजि– 'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने (अनर्घराघव. अङ्क-१.१) इति[४०] । सम्प्रदानस्य शेषत्वविवक्षायां षष्ठी । यथा कादम्बर्याम्- 'अनुकरोति स्म भगवतो नारायणस्य' इति कर्मणः शेषत्वविवक्षायां षष्ठी । आनन्दान् सुखानि ददति वितरन्ति हि हिशब्दः प्रसिद्धौ । ददातेर्जुहोत्यादिकात् 'अदभ्यस्तात्' (पा.सू-७.१.४) इत्यादादेशे लटि रूपम्' ॥ १० ॥

---

**३८. सूत्रे नित्यपदोदितमाभीक्ष्ण्यमर्थाधिक्ये पर्यवस्यतीति भावः । तथाहि भारविः– 'मन्दमन्दमुदितः प्रययौ स्वं भीतभीत इव शीतमुखः' (किरातार्जुनीय-९.२६) इति । आधिक्ये द्वे वाच्ये इति वार्तिकेन द्विवचनमित्येके । अप्रसिद्धेस्तादृश-वार्तिकस्यैवाभाव इत्यपरे । मन्देभ्योऽपि मन्दा मन्दमन्दा इति समाधेय-मित्यन्ये। तेन मान्द्ये स्फुटमतिशयोऽवगम्यते । यथाऽह ज्ञानेन्द्रसरस्वती-भीतेभ्योऽपि भीत इति कथञ्चित् व्याख्येयम् । तेनातिभीत इति फलितम् इति ।**

**३९. इनिप्रत्ययेन न भवितव्यमित्यर्थः ।**

**४०. ननु कोकप्रीतिचकोरपारणयोः पटुनी ज्योतिष्मती चेति विशेषणसमासे नैष दोषः । यद्यागृह्यते तर्हि 'बिसकिसलयच्छेदपाथेयवन्तः' इत्यादिकमुदा-हर्तव्यम् । अन्यच्च 'विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः' (मा.भा.वन.प.२४.२१) इति ।**

## बालबोधिनी

वैकुण्ठे भासन्त इत्युक्तम् । तमेव वैकुण्ठं वर्णयति– **आनन्दानिति ॥ हे देवदेव** देवश्रेष्ठ वायो ॥ **मृदुपदमुदितोद्गीतकैः** मृदूनि प्रतीयमानार्थानि मधुराणीति वा पदानि सुप्तिङन्तरूपाणि यस्मिन् गानकर्मणि तन्मृदुपदमिति क्रियाविशेषणम् । उदितानि उदीरितानि उद्गीतानि उत्कृष्टगानानि यैस्तानि 'गीतं गानमिमे समे' इत्यमरः । 'शेषाद्विभाषा' इति बहुव्रीहौ कप्प्रत्ययः । **सुन्दरीणां** सुराङ्गनानां **वृन्दैः** समूहैः । 'स्त्रियां तु संहतिर्वृन्दम्' इत्यमरः ॥ **आवन्द्यमुक्तेन्द्वहिमगुमदनाहीन्द्र-देवेन्द्रसेव्ये** आ समन्तात् वन्द्या सेव्या आवन्द्यास्ते च ते मुक्ताः प्राप्तमुक्तयः । 'मुक्ता तु मौक्तिके मुक्तौ च मोचिते' इति यादवः । ते च ते इन्द्वहिम-गुमदनाहीन्द्रदेवेन्द्राश्च । इन्दुश्चन्द्रः स च । अहिमा अशीता गावः किरणा यस्य सोऽहिमगुः सूर्यः स च । मदनः कामः स च । अहीन्द्रः सर्पेश्वरः शेषः स च । तैः सेव्ये भजनीयेऽस्मिन्मुक्ताश्रयत्वेन प्रस्तुते । मुचं मोक्षं ददातीति मुकुन्दस्तस्य सम्बन्धि मौकुन्दं तस्मिन् । 'तस्येदम्' (पा.सू-४.३.१२०) इत्यण् ॥ **मन्दिरे** आवासभूते **वैकुण्ठे ॥ मन्दमन्दाः** अतिशयेन मन्दाः । 'नित्यवीप्सयोः' (पा.सू.८.१.४) इति द्विर्वचनम् । मन्दमन्दा इति वा अतिशयितमान्द्यगुणोपेता इत्यर्थः ॥ **कुन्दमन्दारनन्द्यावर्तामोदान्** कुन्दानि कुन्दकुसुमानि तानि च **मन्दाराणि** मन्दारपुष्पाणि तानि च । 'फले लुक्' (पा.सू-४.३.१६३) इति लुक् । नानाविधकुसुमसौरभ्यादिगुणोपेता इति भावः । मरुतो वायवः । अविरतम् अनवरतं यथा भवति तथा ॥ **उदयन्मोदिनां** उद्यन् अविर्भूत इत्यर्थः । यो मोदः स्वरूपभूतानन्द उदयन्मोद स एषामस्तीति तथोक्तास्तेषाम् ।

ननु 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति निषेधादिना न भवितव्यम् । नैष दोषः । अस्य प्रतिषेधस्य 'नञा निर्दिष्टमनित्यम्' इति प्रायिकत्वात् प्रयोगबाहुल्याच्च । तथा मुरारिणा प्रायोजि– 'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने' (अनर्घराघव.अङ्क-१.१) इति । उदयन्मोदिनामिति सम्प्रदानस्य

शेषत्वविवक्षायां षष्ठी । यथा कादम्बर्यां 'अनुकरोति स्म भगवतो नारायणस्य' इति कर्मणः शेषत्वविवक्षया षष्ठी ॥ **आनन्दान्** सुखानि **ददति** हि प्रयच्छन्ति हि । हिशब्दः प्रमाणप्रसिद्धौ । 'डुदाञ् दाने' लट् ॥ १० ॥

## मन्दबोधिनी

वैकुण्ठे भासन्त इत्युक्तम् । तमेव वैकुण्ठं वर्णयति– **आनन्दानिति** ॥ **हे देवदेव** ॥ देवैः रुद्रादिभिः देवः स्तुत्यः तस्य सम्बुद्धिः । हे देवदेव मुख्यप्राण ॥ **अस्मिन्** ॥ मुक्ताश्रयत्वेन श्रुत्यादिप्रसिद्धे ॥ **मौकुन्दे** मुक्तिं ददातीति मुकुन्दः तस्य सम्बन्धि मौकुन्दं तस्मिन् ॥ **मन्दिरे** ॥ गृहे । **वैकुण्ठे** ॥ **मरुतः** वायवः ॥ **अविरतम्** ॥ सन्ततम् ॥ **उदयन्मोदिनाम्** । उदयन् नित्यं उद्यन् मोदः आनन्दो एषामस्तीति उदयन्मोदिनः तेषाम् । मुक्तानाम् ॥ **आनन्दान् ददति** ॥ प्रयच्छन्ति । 'डु दाञ् दाने' इत्यतो लट् परस्मैपदम् । ददाति दत्तः ददति इति रूपाणि । कीदृशाः मरुतः । **मन्दमन्दाः** । अतिशयेन मन्दाः । मन्दगतय इत्यर्थः । पुनः कीदृग्विधा मरुतः ॥ **कुन्दमन्दारनन्द्यावर्तामोदान्** ॥ कुन्दानि कुन्दपुष्पाणि । मन्दाराणि मन्दारपुष्पाणि च तेषां आमोदान् गन्धान् ॥ **दधानाः** ॥ वहन्तः । 'आमोदो गन्धहर्षयोः' इति विश्वः । कथम्भूते मन्दिरे ॥ **मृदुपदम्** मृदुपदमिति क्रियाविशेषणम् । मृदूनि कोमलानि प्रतीयमानार्थानीति यावत्, पदानि यस्मिन् कर्मणि तद्यथा भवति तथा । 'कोमलं मृदुलं मृदु' इत्यमरः ॥ **उदितोद्गीतकैः** । उदितानि उच्चरितानि उद्गीतानि उत्कृष्टगानानि यैस्तानि तैः । **सुन्दरीणाम्** । स्त्रीणाम् । 'सुन्दरी रमणी रामा' इत्यमरः ॥ **वृन्दैः** ॥ समूहैः सेव्य इति शेषः । पुनः कथम्भूते मन्दिरे ॥ **आवन्द्यमुक्तेन्द्वहिमगुमदनाहीन्द्रदेवेन्द्रसेव्ये** ॥ इन्दुः चन्द्रश्च अहिमगुः अहिमाः उष्णाः गावः रश्मयः यस्य स तथोक्तः सूर्यश्च मदनः कामश्च, अहीन्द्रः शेषश्च, देवेन्द्रः पुरन्दरश्च ते तथा आवन्द्याः तथा सर्वैः सम्यक् स्तुत्याश्च ते मुक्ताश्च ते इन्द्वाहिमगुमदनाहीन्द्रदेवेन्द्राः तैः सेव्ये आसेवनीये । उक्तार्थे प्रमाणसूचको हिशब्दः ॥ १० ॥

## भावप्रदीपिका

ननु निर्विशेषाद्वितीयचैतन्यमात्रावस्थानरूपत्वान्मोक्षस्य ब्रह्मव्यतिरिक्तस्य सर्वस्य मुक्त्यवस्थायां निवृत्तत्वाद्भोगसम्भव इत्याशङ्कापरिजिहीर्षया तत्र प्रमाणं सूचयन् सपरिकरं भोगसाधनानि निरूपयन् वैकुण्ठं वर्णयति– **आनन्दानिति** ॥ **हे देवदेव** ॥ **देवैः** रुद्रादिभिः दीव्यते स्तूयत इति, देवान् देवयति तेभ्यः क्रीडादीन् ददातीति वा देवदेवः । तस्य सम्बुद्धिः । अत एवैतद्भक्तिर्मुक्तिसाधनमिति भावः ॥ **अस्मिन्** मुक्ताश्रयत्वादिना श्रुत्यादिप्रसिद्धे ॥ **मौकुन्दे** मुकुन्दस्य मोक्षप्रदस्य विष्णोरिदं मौकुन्दं तस्मिन् मौकुन्दे । 'तस्येदम्' (पा.सू-४.३.१२०) इति अण् प्रत्ययः ॥ **मन्दिरे** वैकुण्ठादिलोके ॥ **मरुतः** वायवः ॥ **अविरतं** सततं यथा भवति तथा । **उदयन् मोदिनां** उदयन् अभिव्यक्तिं प्राप्नुवन् । मोदः आनन्दः । उदयन्मोदो येषामस्तीत्युदयन्मोदिनः तेषां मुक्तानामित्यर्थः । अन्यथा 'न बहुव्रीहिनिर्वाह्यार्थे भवन्ति मतुबादयः' इति प्रतिषेधादिनिप्रत्ययो न स्यात् । सम्प्रदानस्य शेषत्वविवक्षया षष्ठी ॥ **आनन्दान् ददति** हि । 'डु दाञ् दाने' लट् । सुखदत्वोपपादनाय वायून्मन्दत्वादिना विशिनष्टि । अतिशयेन मन्दाः **मन्दमन्दाः** मन्दगतय इत्यर्थः । 'प्रकारे गुणवचनस्य' (पा.सू-८.१.१२) इति द्विरुक्तिः । कर्मधारयवद्भावात् सुपो लुक् ॥ **कुन्दमन्दारनन्द्यावर्तामोदान्** कुन्दानामिमानि कुन्दानि । मन्दाराणामिमानि मन्दाराणि । नन्द्यावर्तानां इमानि नन्द्यावर्तानि । 'फलपुष्पमूलेषु बहुलम्' इत्यणो लुप् । अनन्तरमितरेतरद्वन्द्वः । तेषां कुन्दमन्दारनन्द्यावर्तानां पुष्पाणाम् । आमोदान् परिमळान् **दधानः** ॥ 'विमर्दोत्थे परिमळे गन्धे जनमनोहरे आमोदः' इत्यमरः । सुशीतला इत्यपि द्रष्टव्यम् । नन्विन्द्रादिलोकवदयमप्येको लोकस्तत्कथमयं मुक्ताश्रयत्वेन वर्ण्यत इत्यतस्तं विशिनष्टि **मृदुपदमित्यादिना** ॥ मृदुपदम् मृदूनि कोमलानि पदानि सुप्तिङन्तरूपाणि यस्यां क्रियायां तद्यथा भवति तथा । 'कोमलं मृदुलं मृदु' इत्यमरः ॥ **उदितोद्गीतकैः** उदितानि उच्चरितानि उत्कृष्टानि गीतानि गानानि यैस्तानि तैः । 'गीतं गानमिमे समे' इत्यमरः । 'शेषाद्विभाषा' (पा.सू-

५.४.१५४) इति कप्प्रत्ययः ॥ **सुन्दरीणां** रमणीनाम् । 'सुन्दरी रमणी रामा' इत्यमरः । **वृन्दैः** समूहैः ॥ **आवन्द्यमुक्तेन्द्वहिमगुमदनाहीन्द्रदेवेन्द्रसेव्ये** ॥ आ समन्तात्सम्यग्वा वन्द्या स्तुत्या ये मुक्ता । इन्दुः चन्द्रः । अहिमा उष्णाः गावः किरणा यस्यासौ अहिमगुः सूर्यः । 'गोस्त्रियोरुपसर्जनस्य'(पा.सू-१.२.४८) इति ह्रस्वत्वेनौकारस्योकारः । मदनो मन्मथः । 'मदनो मन्मथो मारः' इत्यमरः । अहीनां सर्पाणामिन्द्रः स्वामी शेषः । 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः । देवेन्द्रः पुरन्दरः । तैः सेव्ये आश्रयणीये । तथा च मुक्तानामेवेन्द्रादीनां वैकुण्ठप्राप्तेस्तल्लोकानां नैतत्साधर्म्यं शङ्कनीयमिति भावः । अत्रार्थे प्रमाण-सिद्धिसूचको हिशब्दः । 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुदः आसते । कामस्य यत्राप्ता कामास्तत्र मामृतं कृधीन्द्रायेन्दो परिस्रव' (ऋ.मं-९,सू-११३,मन्त्र-११) । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स यत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाज्ञातिभिर्वा'। (छां.उ.८.१२.३) 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नीकामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते' । (तै.उ.भृ.मन्त्र-११) 'न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' । (भाग.स्कं-२,अ-९श्लो-१०) 'श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः । सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेशनिष्काभरणाः सुवर्चसः'(भाग.स्कं-२, अ-९ श्लो-११)। 'प्रवालवैदूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् । भ्राजिष्णुभिर्यः परितो विराजते लसद्विमाना-वलिभिर्महात्मनाम्' । (भाग.स्कं-२,अ-९ श्लो-१२) 'विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्रावलिभिर्यथा नभः । श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः' (भाग.स्कं-२,अ-९ श्लो-१३) । 'प्रेङ्खस्विताया कुसुमाकरानुगैः विगीयमाना प्रियकर्मगायती । ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम्' (भाग.स्कं-२,अ-९ श्लो-१४) इत्यादिश्रुतिस्मृतयोऽत्र प्रमाणानि द्रष्टव्यानि । ननु एतत्प्रमाणजातं जीवन्मुक्तिपरं न परममुक्तिपरमिति वाच्यम् ।

एतदतिरिक्तायां मुक्तौ प्रमाणाभावात् । श्रूयमाणयोः प्रार्थ्यामृतत्वपर-ब्रह्मप्राप्तिसाध्यस्वरूपनिष्पत्योः स्मर्यमाणस्य मायाद्यभावस्य च जीवन्मुक्ति-दशायामसम्भवाच्चेति प्रामाणिकपरित्यागाप्रामाण्यस्वीकारापत्तेर्न निर्विशेषाद्वितीय-ब्रह्मैकीभावो मुक्तिः । किन्तु अविद्यानिवृत्तिविशिष्टस्वस्वयोग्यस्वरूपानन्दाभि-व्यक्तिरित्यतो युक्तमुक्तमिति भावः ॥ १० ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

**आनन्दानिति ॥** मन्दमन्दाः मरुतः कुन्दादीनामामोदान् गन्धान् । मृदुपदं यथा भवति तथा उदितमुत्कृष्टं गीतं यैस्तैः । सुन्दरीणां वृन्दैर्ये आवन्द्याः मुक्ता इन्द्रादयस्तैः सेव्ये अहिमगुरुष्णकिरणः सूर्यः ॥ **मौकुन्दे** मुकुन्दस्य तव सम्बन्धिनि मन्दिरे वैकुण्ठात्मके ॥ **अविरतम्** ॥ निरन्तरम् ॥ **उदयन्मोदिनां** मुक्तानाम् ॥ १० ॥

## श्रीनिवासतीर्थीया

**अन्वयः– आनन्दानिति ॥** हे देवदेव । मृदुपदमुदितोद्गीतकैः, मृदुपदे यथा भवति तथा । सुन्दरीणां वृन्दैः आवन्द्यमुक्तेन्द्रहिमगुमदनाहीन्द्रदेवेन्द्रसेव्ये । मौकुन्दे । अस्मिन् मन्दिरे । मन्दमन्दाः । कुन्दमन्दारनन्द्यावर्तामोदान् दधानाः मरुतः अविरतं यथा भवति तथा । उदयन्मोदिनां मुक्तानाम् । आनन्दान् ददति हि ।

**विग्रहवाक्यानि–** अतिशयेन मन्दाः मन्दमन्दाः ॥ **ददति** दा दाने लट् परस्मैपदं प्रथमपुरुषबहुवचनम् ॥ **कुन्दमन्दारनन्द्यावर्तामोदान्** कुन्दाश्च मन्दाराणि च नन्द्यावर्तानि च कुन्दमन्दारनन्द्यावर्तानि तेषां आमोदाः । नन्द्यावर्तामोदाः तान् । कुन्दमन्दारनंद्यावर्तामोदान् ॥ **मृदुपदमुदितोद्गीतकैः** मृदूनि पदानि यस्मिन् तत् । मृदुपदम् । विशेषणाव्ययम् । उदितानि उद्गीतानि उद्गीतकानि येषां ते उदितोद्गीतकाः तैः उदितोद्गीतकैः ॥ **आवन्द्यमुक्तेन्द्रहिमगुमदना-हीन्द्रदेवेन्द्रसेव्ये** आसमन्तात् वन्द्याः आवन्द्याः । न हिमाः अहिमाः अहिमाः

गावः यस्यासौ अहिमगुः । अहीनां इन्द्रः अहीन्द्रः । देवानां इन्द्रः देवेन्द्रः । इन्दुश्च अहिमगुश्चः मदनश्च अहीन्द्रश्च देवेन्द्रश्च । अहिमगुमदनाहीन्द्रदेवेन्द्राः ॥ १० ॥

**उत्तप्तात्युत्कटत्विट्प्रकटकटकटध्वानसङ्घट्टनोद्यद्-**
**विद्युव्द्यूढस्फुलिङ्गप्रकरविकिरणोत्काथिते बाधिताङ्गान् ।**
**उद्गाढं पात्यमाना तमसि तत इतः किङ्करैः पङ्किले ते**
**पङ्क्तिर्ग्राव्णां गरिम्णा ग्लपयति हि भवद्द्वेषिणो विद्वदाद्य ॥ ११ ॥**

## कविकर्णामृतम्

एवं तद्भक्तिमतां गतिमुक्त्वा तद्द्वेषिणामन्धतमसदुःखप्राप्तिमाह– **उत्तप्तेति** ॥ **हे विद्वदाद्य** विदुषां प्राथमिक[४१] ॥ **उत्तप्ता** सन्तप्ता ॥ **अत्युत्कटत्विट्** । अत्यर्थमुत्कटः त्विषः यस्याः सा । अत्युल्बणकान्तिः । **ते** तव । किङ्करैर्भृत्यजनैः ॥ **तत इतः** समन्तात् ॥ **उद्गाढं** उच्चैर्दृढं यथा भवति तथा ॥ **पात्यमाना** प्रक्षिप्य-माणा ॥ **ग्राव्णां** पाषाणानाम् । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । **पङ्क्तिः** परम्परा ॥ **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युव्द्यूढस्फुलिङ्ग-प्रकरविकिरणोत्काथिते** ॥ प्रकटः प्रस्फुटः । कटकट इत्यनुकारशब्दः[४२] । स एव ध्वानो ध्वनिर्यस्मिन् कर्मणि तत् । सङ्घट्टनं सङ्घर्षणम् । तेन उद्यन्त्यः विद्युतः येषां ते उद्यद्विद्युतः । उद्गच्छत्प्रभा । व्यूढस्फुलिङ्गा पुञ्जीभूताग्निकणाः । तेषां प्रकरः समूहः । तस्य विकिरणं विशेषेण प्रसरणम् । तेन उत्काथिते उच्चैः सन्तापिते । पङ्किले कर्दमवति । पिच्छादित्वात् इलच् ॥ **तमसि** महानरके ॥ **बाधिताङ्गान्** । पीडितावयवान् ॥ **भवद्द्वेषिणः** भवति त्वयि द्वेषिणो द्वेषवतः ॥ **गरिम्णा** गुरुत्वेन ॥ **ग्लपयति** ग्लानिं प्रापयति हि । 'घटादयो मितः (गण.सू.भ्वा-५५३) इति मित्संज्ञायां 'मितां ह्रस्वः' (पा.सू-६.४.९२) इति । द्वेषा नवविधाः–

४१. पण्डितानां प्रथमक इत्यपि पाठः ।

४२. अनुकरणशब्दः इत्यपि पाठः ।

'जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा । साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च । प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च । तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः' (म.भा.ता.नि.अ-१,श्लो-१११,११२) इति । विष्णुवैष्णव-द्वेषिणस्ते येषां दुःखोत्तरेऽन्धे तमसि नित्यं निवास इति भावः ।। ११ ।।

## बालबोधिनी

एवं तद्भक्तिमतां गतिमुक्त्वा तद्द्वेषिणामन्धे तमसि दुःखप्राप्तिमाह– **उत्तप्तेति** ।। **विद्वदाद्य** विदुषामाद्य प्राथमिक श्रीमध्व । उत्कृष्टतया तप्ता **उत्तप्ता** सन्तप्तेत्यर्थः । अत्यन्तम् उत्कटा चण्डा अत्युत्कटा तादृशी त्विट् दीप्तिर्यस्याः सा तथोक्ता ।। **ते** तव **किङ्करैः** भृत्यैः । ततस्तस्मात्प्रदेशादित एतस्मात्प्रदेशात् । समन्ततोऽपीत्यर्थः ।। **उद्गाढं** उच्चैः सम्यग् गाढं दृढं यथा भवति तथा उद्गाढम् ।। **पात्यमाना** प्रक्षिप्यमाणा ।। **ग्राव्णां** पाषाणानां 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ।। **पङ्क्तिः** परम्परा ।। **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्ग-प्रकरविकिरणोत्काथिते** ।। प्रकटः स्पष्टो यः कटकटध्वानः कटकट इत्यनुकरण-शब्दः स एव ध्वानो ध्वनिर्यस्मिन् सङ्घर्षणकर्मणि तत्कटकटध्वानं तादृशं यत् सङ्घट्टनं सङ्घर्षणम्, यद्वा कटकट इति ध्वानो ध्वनिः कटकटध्वानस्तेन सङ्घट्टनं कटकटध्वानसङ्घट्टनमिति वा । तेन उद्यन्त्य उद्गच्छन्त्यो विद्युतः प्रभा येषां ते तथोक्तास्तादृशा व्यूढाः पुञ्जीभूता ये स्फुलिङ्गा अग्निकणाः ।

यद्वा उद्यन्त्य उच्चैर्गच्छन्त्यो या विद्युतस्ततितः तद्वत् व्यूढा भिन्नभावं गता विपुला वा ये स्फुलिङ्गा दग्धपाषाणत्रुटत्कणा इति वा । तेषां प्रकरः सङ्घातस्तस्य विकरणं प्रसरणं तेन उत्काथितम् उच्चैः सम्यक् क्वाथितं सन्तापितं तस्मिन् । पङ्किले कर्दमवति 'पिच्छादित्वात् इलच्' । तमसि महानरके ।। **बाधिताङ्गान्** बाधितानि पीडितान्यङ्गान्यवयवा येषां ते तथोक्तास्तान् ।। **भगवद्द्वेषिणः** भवति त्वयि द्वेषो भवद्द्वेषः स एषामस्तीति तथोक्तास्तान् । **गरिम्णा** गरिमा गुरुत्वं तेन ।। **ग्लपयति** ग्लानिं प्रापयति हि 'ग्लै म्लै हर्षक्षये' लट् ।। ११ ।।

## मन्दबोधिनी

एवं तद्भक्तानां फलमुक्त्वा तद्द्वेषिणां फलमाह– **उत्तप्तेति** ॥ हे **विद्वदाद्य** ज्ञानिश्रेष्ठ हे मुख्यप्राण ॥ **ग्राव्णां** पाषाणानाम् ॥ **पङ्क्तिः** परम्परा 'पाषाण-प्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ॥ **भवद्द्वेषिणां** भवति त्वयि द्वेषो येषामस्तीति भवद्वेषिणः तान् । तामसान् ॥ **गरिम्णा** गुरोर्भावः गरिमा तेन स्वगतगुरुत्वेन निमित्तेन ॥ **ग्लपयति** ग्लानिं दुःखं प्रापयति 'ग्लै हर्षक्षय' इत्यतो लट् परस्मैपदं ग्लपयति ग्लपयत ग्लपयन्तीति रूपाणि । कथम्भूतानां ग्राव्णां पङ्क्तिः ॥ **ते** तव ॥ **किङ्करैः** भृत्यैः । **इतस्ततः** समन्तात् **तमसि** अन्धेतमसि ॥ **उद्गाढं** अतिदृढं यथा भवति तथा **पात्यमाना** प्रक्षिप्यमाणा । पुनः कथम्भूता पङ्क्तिः ॥ **उत्तप्तात्युत्कटत्विट्** उत्तप्ताः सन्तप्ता अत्युत्कटा अत्युल्बणाः त्विषः द्युतयो यस्याः सा तथोक्ता । कथम्भूते तमसि । प्रकटेत्यारभ्य क्वाथित इत्यन्त-मेकपदम् ॥ **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्गप्रकरविकिरणोत्क्वाथिते** ॥ प्रकटः स्फुटः कटकटः कटकटायमानः ध्वानः ध्वनिर्यस्मिन् तत्तथोक्तं तच्च तत् ग्राव्णां परस्परं प्रतिघट्टनम् । उद्यदिति स्फुलिङ्गानां विशेषणम् । सङ्घट्टनेन उद्यन्तः उद्गच्छन्तश्चेति विद्युद्वत्तटिद्वत्प्रकाशमानाश्च ते व्यूढाः पुञ्जीभूताश्च ते स्फुलिङ्गाः अग्निकणाश्च । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । तेषां प्रकरः समूहः तस्य विकिरणं विशेषेण इतस्ततः प्रसरणं तेन उत्क्वाथिते उच्चैः क्वथनं प्रापिते । पुनः कथम्भूते **पङ्किले** पङ्कमये । कथम्भूतान् **भवद्द्वेषिणः बाधिताङ्गान्** तमसि जलूकादिभिः पीडितावयवान् । वायुभक्ताः स्थूलान् गुरुभूतान् पाषाणान् भवद्द्वेषिणां शिरसि प्रक्षिप्य बहुधा पीडयन्तीति भावः ॥ ११ ॥

## भावप्रदीपिका

एवमन्वयेन भक्तेर्मुक्तिसाधनतामभिधाय तदवधारणार्थं व्यतिरेकव्याप्तिं निरूपयन् तद्द्वेषिणामनिष्टावाप्तिमाह– **उत्तप्तेति** ॥ हे **विद्वदाद्य** विदुषां प्राथमिक रुद्रादि-गुरुत्वात् ॥ **उत्तप्तात्युत्कटत्विट्** उत्तप्ताः सन्तप्ताः । अत्युत्कटाः अत्युल्बणाः त्विषो

'जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा । साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च । प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च । तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः' (म.भा.ता.नि.अ-१,श्लो-१११,११२) इति । विष्णुवैष्णवद्वेषिणस्ते येषां दुःखोत्तरेऽन्धे तमसि नित्यं निवास इति भावः ।। ११ ।।

## बालबोधिनी

एवं तद्भक्तिमतां गतिमुक्त्वा तद्द्वेषिणामन्धे तमसि दुःखप्राप्तिमाह– **उत्तप्तेति** ।। **विद्वदाद्य** विदुषामाद्य प्राथमिक श्रीमध्व । उत्कृष्टतया तप्ता **उत्तप्ता** सन्तप्तेत्यर्थः । अत्यन्तम् उत्कटा चण्डा अत्युत्कटा तादृशी त्विट् दीप्तिर्यस्याः सा तथोक्ता ।। **ते** तव **किङ्करैः** भृत्यैः । ततस्तस्मात्प्रदेशादित एतस्मात्प्रदेशात् । समन्ततोऽपीत्यर्थः ।। **उद्गाढं** उच्चैः सम्यग् गाढं दृढं यथा भवति तथा उद्गाढम् ।। **पात्यमाना** प्रक्षिप्यमाणा ।। **ग्राव्णां** पाषाणानां 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ।। **पङ्क्तिः** परम्परा ।। **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्गप्रकरविकिरणोत्काथिते** ।। प्रकटः स्पष्टो यः कटकटध्वानः कटकट इत्यनुकरणशब्दः स एव ध्वानो ध्वनिर्यस्मिन् सङ्घर्षणकर्मणि तत्कटकटध्वानं तादृशं यत् सङ्घट्टनं सङ्घर्षणम्, यद्वा कटकट इति ध्वानो ध्वनिः कटकटध्वानस्तेन सङ्घट्टनं कटकटध्वानसङ्घट्टनमिति वा । तेन उद्यन्त्य उद्गच्छन्त्यो विद्युतः प्रभा येषां ते तथोक्तास्तादृशा व्यूढाः पुञ्जीभूता ये स्फुलिङ्गा अग्निकणाः ।

यद्वा उद्यन्त्य उच्चैर्गच्छन्त्यो या विद्युतस्तटितः तद्वत् व्यूढा भिन्नभावं गता विपुला वा ये स्फुलिङ्गा दग्धपाषाणत्रुटत्कणा इति वा । तेषां प्रकरः सङ्घातस्तस्य विकरणं प्रसरणं तेन उत्क्वाथितम् उच्चैः सम्यक् क्वाथितं सन्तापितं तस्मिन् । पङ्किले कर्दमवति 'पिच्छादित्वात् इलच्' । तमसि महानरके ।। **बाधिताङ्गान्** बाधितानि पीडितान्यङ्गान्यवयवा येषां ते तथोक्तास्तान् ।। **भगवद्वेषिणः** भवति त्वयि द्वेषो भवद्वेषः स एषामस्तीति तथोक्तास्तान् । **गरिम्णा** गरिमा गुरुत्वं तेन ।। **ग्लपयति** ग्लानिं प्रापयति हि 'ग्लै म्लै हर्षक्षये' लट् ।। ११ ।।

## मन्दबोधिनी

एवं तद्भक्तानां फलमुक्त्वा तद्द्वेषिणां फलमाह– **उत्तप्तेति** ।। हे **विद्वदाद्य** ज्ञानिश्रेष्ठ हे मुख्यप्राण ।। **ग्राव्णां** पाषाणानाम् ।। **पङ्क्तिः** परम्परा 'पाषाण-प्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः ।। **भवद्द्वेषिणां** भवति त्वयि द्वेषो येषामस्तीति भवद्द्वेषिणः तान् । तामसान् ।। **गरिम्णा** गुरोर्भावः गरिमा तेन स्वगतगुरुत्वेन निमित्तेन ।। **ग्लपयति** ग्लानिं दुःखं प्रापयति 'ग्लै हर्षक्षय' इत्यतो लट् परस्मैपदं ग्लपयति ग्लपयत ग्लपयन्तीति रूपाणि । कथम्भूतानां ग्राव्णां पङ्क्तिः ।। **ते** तव ।। **किङ्करैः** भृत्यैः । **इतस्ततः** समन्तात् **तमसि** अन्धेतमसि ।। **उद्गाढं** अतिदृढं यथा भवति तथा **पात्यमाना** प्रक्षिप्यमाणा । पुनः कथम्भूता पङ्क्तिः ।। **उत्तप्तात्युत्कटत्विट्** उत्तप्ताः सन्तप्ता अत्युत्कटा अत्युल्बणाः त्विषः द्युतयो यस्याः सा तथोक्ता । कथम्भूते तमसि । प्रकटेत्यारभ्य क्वाथित इत्यन्त-मेकपदम् ।। **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्गप्रकरविकिरणो-त्क्वाथिते** ।। प्रकटः स्फुटः कटकटः कटकटायमानः ध्वानः ध्वनिर्यस्मिन् तत्तथोक्तं तच्च तत् ग्राव्णां परस्परं प्रतिघट्टनम् । उद्यदिति स्फुलिङ्गानां विशेषणम् । सङ्घट्टनेन उद्यन्तः उद्गच्छन्तश्चेति विद्युद्वत्तटिद्वत्प्रकाशमानाश्च ते व्यूढाः पुञ्जीभूताश्च ते स्फुलिङ्गाः अग्निकणाश्च । 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । तेषां प्रकरः समूहः तस्य विकिरणं विशेषेण इतस्ततः प्रसरणं तेन उत्क्वाथिते उच्चैः क्वथनं प्रापिते । पुनः कथम्भूते **पङ्किले** पङ्कमये । कथम्भूतान् **भवद्द्वेषिणः बाधिताङ्गान्** तमसि जलूकादिभिः पीडितावयवान् । वायुभक्ताः स्थूलान् गुरुभूतान् पाषाणान् भवद्द्वेषिणां शिरसि प्रक्षिप्य बहुधा पीडयन्तीति भावः ।। ११ ।।

## भावप्रदीपिका

एवमन्वयेन भक्तेर्मुक्तिसाधनतामभिधाय तदवधारणार्थं व्यतिरेकव्याप्तिं निरूपयन् तद्द्वेषिणामनिष्टावाप्तिमाह– **उत्तप्तेति** ।। हे **विद्वदाद्य** विदुषां प्राथमिक रुद्रादि-गुरुत्वात् ।। **उत्तप्तात्युत्कटत्विट्** उत्तप्ताः सन्तप्ताः । अत्युत्कटाः अत्युल्बणाः त्विषो

द्युतयो यस्याः सा । 'मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम्'[४३] इत्यमरः ॥ **ते** तव ॥ **किङ्करैः** प्रेष्यैः नियोज्यः किङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः । इतस्ततः पात्यमाना प्रक्षिप्यमाणा । ग्राव्णां पाषाणानां । पर्वतानां वा । 'ग्रावाणौ शैलपाषाणौ' इत्यमरः । पङ्क्तिः समूहः । गरिम्णा गुरोर्भावो गरिमा तेन गरिम्णा दुर्भरत्वेन । 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवे । 'पृथिव्यादिभ्य इमनिज्वा' इति भावे इमनिच् प्रत्ययः ॥ **प्रकटकटकटध्वान-सङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्गप्रकरविकिरणोत्काथिते** ॥ प्रकटः कटकट इति यो ध्वानः अनुकरणशब्दः । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । स यस्मिन्कर्मणि तत् । सङ्घट्टनं सङ्घर्षणं तेन उद्यद्विद्युतः उद्यद्विशिष्टदीप्तयः । ये व्यूढाः संहताः पुञ्जीभूता इति यावत् । 'व्यूढौ विन्यस्तसंहतौ' इत्यमरः । अथवा उद्यन्तः उदयं प्राप्नुवन्तो ये विद्युद्वत्तडिद्वत् **व्यूढाः** स्थूलाः । 'व्यूढं विपुलमुच्यते' इत्यभिधानम् । 'तडित्सौदामिनी विद्युत्' इत्यमरः । स्फुलिङ्गाः अग्निकणाः ।'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः । तेषां प्रकरः समूहः । तस्य विकिरणं प्रसरणम् । तेन उत्काथिते उत्कथनं प्रापिते ॥ **पङ्किले** पङ्कः कर्दमोऽस्मिन्निति पङ्किलं तस्मिन् । 'पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः । 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' (पा.सू-५.१.१००) इति इलच् प्रत्ययः । एवंविधे **अन्धेतमसि** नित्यनिरयविशेषे । बाधा पीडा सञ्जाता येषां ते तथोक्ताः तान् । तानि बाधां प्रापितानि वा बाधितानि 'पीडा बाधा व्यथा दुःखम्' इत्यमरः ॥ **बाधिताङ्गान्** बाधितान्यङ्गान्यवयवो येषां ते तथोक्तास्तान् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः ॥ **भवद्वेषिणः** भवन्तं द्विषन्ति तच्छीलास्तान् भवद्द्वेषिणः । 'द्विष अप्रीतौ' इत्यस्मात् 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा.सू-३.२.७८) इति ताच्छील्यार्थे णिनिप्रत्ययः । भवति द्वेषो भवद्वेष स नित्यमेषामस्तीति भवद्वेषिणः तान् । 'अत इनि ठणौ' (पा.सू-५.२.११५) इति इनिप्रत्ययः ॥ **ग्लपयति** ग्लानं प्रापयति

---

४३. उद्रिक्तमुत्कटं तद्वदुद्धतं.....त्रिषु' इति मातृकायां अधिको अमरपाठो दृश्यते । तच्चिन्त्यम् ।

हि । 'ग्लै हर्षक्षये' । हीत्यनेनात्रार्थे 'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' (ईशा.उ-३) । 'इन्द्रा सोमावर्तयतं दिवस्पर्यग्नितप्तेऽभिर्युवमश्महन्मभिः । तपुर्वधेऽभिरजरेभिरत्रिणो निपर्शाने विद्यन्तं यन्ति निस्वरम्' (ऋ.वेद-७.१०४.५) इत्यादिप्रमाणसिद्धं सूचयति ॥ ११ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

द्वैषिणां तमसि दुःखानुभवप्रकारमाह– **उत्तप्तेति ॥** उत्तप्ता । अत्युत्कटत्विट् अत्युल्बणद्युतिमतीते किंकरैरितस्ततः समन्तात् । उद्गाढमतिदृढं पात्यमानां ग्राव्णां पङ्क्तिः प्रकटः कटकटध्वानो यस्मिन् तेन संघट्टनेनोद्यती विद्युदिव प्रकाशमानानां व्यूढानां स्थूलानां स्फुलिङ्गानां प्रकारस्य सुमहस्य विकिरणेन समन्तात् प्रसरणेनोच्चैः **क्वाथिते पङ्किले** पङ्कभूयिष्ठे तमसि **बाधिताङ्गान्**, भवद्वेषिणो **गरिम्णा** स्वनिष्ठगुरुत्वेन **ग्लपयति** ग्लानिं प्रापयति ॥ ११ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– उत्तप्तेति ॥** हे विद्वदाद्य उत्तप्तात्युत्कटत्विट् ते किङ्करैः तत इतः उद्गाढं यथा भवति तथा पात्यमानाः ग्राव्णां पङ्क्तिः प्रकटकटकटध्वानसङ्घट्टनोद्यद्-विद्युद्व्यूढस्फुलिङ्गप्रकरविकिरणोत्क्वाथिते पङ्किले तमसि बाधिताङ्गात् भवद्वेषिणः गरिम्णा ग्लपयति ।

**विग्रहवाक्यानि– उत्तप्तात्युत्कटत्विट्** उत् तप्ता उत्तप्ता । अत्युत्कटा त्विट् यस्याः सा अत्युत्कटत्विट् ॥ **प्रकटकटकटध्वानसङ्घट्टनोद्यद्विद्युद्व्यूढस्फुलिङ्ग-प्रकरविकिरणोत्क्वाथिते ॥** प्रकटश्चासौ कटकटश्च प्रकटकटकटः । प्रकटकटकट एव ध्वानः यस्मिन् तत् प्रकटकटकटध्वानम् । प्रकटकटकटध्वानं च तत् सङ्घट्टनं च ध्वानसङ्घट्टनम् । ध्वानसङ्घट्टनेन उद्यन्ती सङ्घट्टनोद्यन्ती । सङ्घट्टनोद्यन्ती विद्युत् येषां ते सङ्घट्टनोद्यद्विद्युतः । व्यूढाश्च ते स्फुलिङ्गाश्च व्यूढस्फुलिङ्गाः । उद्यद्विद्युतश्च

ते व्यूढस्फुलिङ्गाश्च उद्यद्विद्युव्यूढस्फुलिङ्गाः । व्यूढस्फुलिङ्गानां प्रकरः व्यूढ-स्फुलिङ्गप्रकरः । प्रकरस्य विकिरणं प्रकरविकिरणम् । उच्चैः क्वाथितम् उत्क्वाथितम् । विकिरणेन उत्क्वाथितं विकिरणोत्क्वाथितम् । तस्मिन् ॥ **बाधिताङ्गान्** बाधितानि अङ्गानि येषां ते बाधिताङ्गाः तान् बाधिताङ्गान् ॥ **उद्गाढम्** उच्चैः गाढं यथा भवति तथा उद्गाढम् । क्रियाविशेषणमव्ययम् ॥ **पङ्किले** पङ्को अस्मिन् अस्तीति पङ्किलं तस्मिन् पङ्किले ॥ **ग्लपयति** ॥ 'ग्लपू अङ्गशैथिल्ये' लट् परस्मैपदं प्रथमपुरुष एकवचनम् ॥ **भवद्वेषिणः** द्वेषो येषां अस्तीति द्वेषिणः । भवतां द्वेषिणः भवद्वेषिणः । तान् भवद्वेषिणः ॥ **विद्वदाद्य** विदुषाम् आद्यो विद्वदाद्य । तस्य सम्बुद्धि विद्वदाद्य ॥ ११ ॥

**अस्मिन्नस्मद्गुरूणां हरिचरणचिरध्यानसन्मङ्गलानां**
**युष्माकं पार्श्वभूमिं धृतरणरणिकस्वर्गिसेव्यां प्रपन्नः ।**
**यस्तूदास्ते स आस्तेऽधिभवमसुलभक्लेशनिर्मोकमस्त-**
**प्रायानन्दं कथञ्चिन्न वसति सततं पञ्चकष्टेऽतिकष्टे ॥ १२ ॥**

## कविकर्णामृतम्

य आचार्यसम्प्रदायार्थमुपगतोऽपि समयनियताचार औदासीन्यं करोति स संसृतौ वर्तते न कदाचिन्नरकविशेष इत्याह– **अस्मिन्निति** ॥ **अस्मद्गुरूणाम्** अस्मदाचार्याणाम् । हरेः श्रीविष्णोश्चरणौ पादौ । तयोश्चिरध्यानं निरन्तरविचारः । तेन सन्मङ्गलानाम् उत्कृष्टशुभानाम् । धृता रणरणिकाऽभिलाषो यैस्तैः ॥ **स्वर्गिभिः** देवैर्मनुष्योत्तमैश्च । स्वर्गिपदस्य मनुष्योत्तमानां चोपलक्षणत्वात् ॥ **सेव्यां** सेवनीयाम् ॥ **पार्श्वभूमिं** समीपप्रदेशम् । अस्मिंल्लोके यः पुरुषः प्रपन्नः प्राप्तोऽपि **उदास्ते** उपेक्षते । समयनियताचारान्न करोतीत्यर्थः । स पुमान् । असुलभो दुर्लभः क्लेशनिर्मोको दुःखत्यागः यस्मिन् कर्मणि तत् । (अस्तप्रायः आनन्दः यस्मिन् कर्मणि तत्)[44] वैषयिकसुखस्य दुःखानुषङ्गाद्दुःखमेव ॥

४४. इदं वाक्यं मातृकायां लुप्तम् ।

**अधिभवं** भवे संसारे । 'अव्ययं विभक्ति' (पा.सू-२.१.६) इत्यादिना विभक्त्यर्थेऽव्ययीभावः ॥ **सततं** निरन्तरम् ॥ **आस्ते** तिष्ठति । समयाचारराहित्यादिति भावः । अतिकष्टेऽतिदुःसहे पञ्चेन्द्रियाधारा रूपरसादयः कष्टा असह्या यस्मिंस्तस्मिन्नरकविशेषे ॥ **कथञ्चित्** केनापि प्रकारेण ॥ **न वसति** वासं न करोति । विष्णुवैष्णवद्वेषाभावादित्यर्थः । अथवा पार्श्वभूमिं प्रपन्नोऽपि **यस्तूदास्ते** ॥ तत्त्वज्ञानं न गृह्णाति । सः **अधिभवं** आस्ते । तादृशस्य मध्यमजीवत्वात् । तदुक्तम्– 'मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि' (म.भा.ता.नि. अ-१,श्लो-८७) इति । एवञ्च **अतिकष्टे पञ्चकष्टे** कथञ्चित्केनाऽपि प्रकारेण न वसति । न वसत्येवेत्यर्थः । तथाविधस्याऽसुरत्वात् । तदुक्तम्– 'आसुराणां तमः प्राप्तिः तदा नियमतो भवेत् । यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम्' (म.भा.ता.नि.अ-१,श्लो-९०) इति ॥ १२ ॥

## बालबोधिनी

आचार्यप्रसादार्थमुपगतोऽपि यः समयनियताचारे औदासीन्यं करोति स सदा संसृतौ वर्तते न कदाचिन्नित्यनरकं विशेदित्याह– **अस्मिन्निति** ॥ **अस्मद्गुरूणाम्** अस्माकं गुरव आचार्या अस्मद्गुरवस्तेषाम् ॥ **हरिचरणचिरध्यानसन्मङ्गलानाम्** ॥ हरेश्चरणौ पादौ तयोश्चिरं निरंतरं ध्यानं स्मरणं चिरध्यानं तेन सद् उत्तमं मङ्गलं सौभाग्यं येषां ते तथा तेषाम् ॥ **युष्माकं** भवताम् ॥ **स्वर्गिसेव्याम्** स्वर्ग एषामस्तीति स्वर्गिणस्त्रिदशास्तैः सेव्यां सेवनीयाम् । स्वर्गिपदस्य मनुष्योत्तमानां चोपलक्षणत्वाद्देवादिमनुष्योत्तमान्तैः सेवनीयामित्यर्थः ॥ **पार्श्वभूमिं** पार्श्वस्य निकटस्य भूमिः प्रदेशस्ताम् ॥ **अस्मिन्** लोके ॥ **धृतरणरणिकः** धृता रणरणिका अभिलाषो येन स तथोक्तः । आदौ श्रीमदाचार्याणां सेवनेऽत्यासक्तिमानित्यर्थः । यः पुरुषः प्रपन्नः शरणागतोऽपि **उदास्ते** पश्चादुपेक्षां कुरुते । तत्समयोदितनियताचारं न करोतीत्यर्थः । 'आस उपवेशने' लट् । स पुमान् । सुलभो न भवतीत्यसुलभः । तादृशः क्लेशनिर्मोको दुःखत्यागो यथा भवति तथा असुलभक्लेश-

निर्मोकम् । प्रायेण बाहुल्येनास्तो निरस्तोऽस्तप्रायोऽविद्यमानकल्प इत्यर्थः । तादृश आनन्दो यथा भवति तथा अस्तप्रायानन्दम् । अवस्थानक्रियाविशेषणमिदं द्वयम् ॥ **अधिभवं** संसारे । 'अव्ययं विभक्ति'(पा.सू-२.१.६)इत्यादिना विभक्त्यर्थेऽव्ययीभावः । सततं निरन्तरमास्ते तिष्ठति 'आस उपवेशने' लट् । समयाचार-राहित्यादिति भावः । अत्यन्तं कष्टमतिकष्टं तस्मिन् अतिदुस्सहे इत्यर्थः ॥ **पञ्चकष्टे** पञ्च रूपरसादिपञ्चेन्द्रियविषयाः कष्टा असह्या यस्मिन्नित्यनरके तत् पञ्चकष्टं तस्मिन् ।

यद्वा पञ्चेभ्यो रौरवादिपञ्चमहानरकेभ्यः कष्टे गर्हित इति वा । तमसि **कथञ्चित्** केनापि हरिद्वेषादिकं न करोति चेत् संसारे तिष्ठति । न चेत्तमसि पतेदेवेत्यभि-प्रायेण कथञ्चिदित्युक्तम् ॥ **न वसति** वासं न करोति विष्णुवैष्णवद्वेषाभावा-दित्यर्थः । अथवा पार्श्वभूमिं प्रपन्नोऽपि यस्तूदास्ते तत्त्वज्ञानं न गृह्णाति सोऽप्यधि-भवमास्ते । तादृशस्य मध्यमजीवत्वादतिकष्टे पञ्चकष्टे कथञ्चिन्न वसति न वसत्येव । असुराणामेव तमोयोग्यत्वात् । इत्यनेन नित्यसंसारिणां गतिरप्युक्ता भवति ॥ १२ ॥

## मन्दबोधिनी

इदानीं युष्मत्सन्निधिं प्राप्यापि उदासीनानां संसारप्राप्तिरेव न तमःप्राप्तिरित्याह– **अस्मिन्निति** ॥ तुशब्दोऽप्यर्थे । अधिभवमिति पदद्वयम् । अधीत्यस्य आस्त इति क्रियया सम्बन्धः । हे मुख्यप्राण यः **अस्मिन्** लोके **अस्मद्गुरूणां युष्माकं पार्श्वभूमिं** समीपप्रदेशं **प्रपन्नोऽपि** प्राप्तोऽपि **उदास्ते** उपेक्षते तत्त्वोपदेशार्थं प्रयत्नं न करोतीत्यर्थः । 'आस उपवेशने' इत्यतो लडात्मनेपदं आस्ते आसाते आसत इति रूपाणि ॥ **सः** उदासीनः पुरुषः **भवं** संसारं **सततं** निरन्तरं **अध्यास्ते** संसारे तिष्ठतीत्यर्थः । 'अधिशीङ्स्थासां कर्म' (पा.सू-१.४.४६) इत्याधारस्य कर्म-संज्ञया 'कर्मणि द्वितीया' (पा.सू-२.३.२) इति द्वितीया सप्तम्यर्थे । तस्य मध्यमजीवत्वात् । तदुक्तं 'मध्यमा मानषा ये तु सृतियोग्याः सदैव हि'

(म.भा.ता.नि. अ-१, श्लो-८७) इति । सः उदासीनः पुरुषः **अतिकष्टे** अतिदुस्सहे नरकविशेषे । कथञ्चित् कदाचिदपि अव्ययानामनेकार्थत्वात् ॥ **न वसति** वासं न करोति 'वस निवासे' इत्यतो लट् परस्मैपदम् । कथम्भूते नरक-विशेषे **पञ्चकष्टे** पञ्च पञ्चेन्द्रियविषयाः रूपरसादयः कष्टाः दुःखप्रदा यस्मिन् स तथोक्तः तस्मिन् । अथवा पञ्चकष्टे रौरवादिभ्यः पञ्चभ्यः महाकष्ट इत्यर्थः । कथम्भूतां पार्श्वभूमिं **धृतरणरणिकस्वर्गिसेव्यां** धृता रणरणिका उत्कण्ठा यैस्ते तथोक्ताः ते च ते स्वर्गिणः देवाश्च तैः सेव्यां सेवनीयाम् कथम्भूतानां युष्माकं **हरिचरणचिरध्यानसन्मङ्गलानां** हरेः श्रीविष्णोः चरणौ पादौ तयोः चिरध्यानं निरन्तरचिन्तनं तेन ॥ **सन्मङ्गलानाम्** उत्कृष्टसुखानाम् कथम्भूतं भवम् **असुलभक्लेशनिर्मोकम्** असुलभः दुर्लभः क्लेशनिर्मोकः क्लेशमोक्षः यस्मिन् स तथोक्तः तम् । संसारस्य क्लेशपूर्णत्वादिति भावः । पुनः कथम्भूतं भवम् **अस्त-प्रायानन्दं** प्रायेण अस्तः अस्तप्रायः अविद्यमानसदृशः आनन्दः यस्मिन् सः तथोक्तः तम् सांसारिकसुखस्य दुःखाविनाभूतत्वेन दुःखवद्धेयत्वादिति भावः ॥ १२ ॥

## भावप्रदीपिका

एवमन्वयव्यतिरेकाभ्यां भक्तेर्मुक्तिसाधनतां निरूप्य तदुपेक्षावतां नित्यसंसारिणां फलं निरूपयति– **अस्मिन्निति** ॥ हरति सर्वपापजातं भक्तानामिति हरिः । स्मरणमात्रेणाशेषपापक्षयकर्तेत्यर्थः । हरत्याहरति पुरुषार्थानिति वा । तस्य विष्णोः चरणयोः ॥ **चिरं** बहुकालम् । ध्यानेन चिन्तनेन । सदनश्वरं मङ्गळं शुभं येषां ते तथोक्ताः तेषाम् ॥ **अस्मद्गुरूणां** अस्मदाचार्याणाम् ॥ **युष्माकं** युष्मदि गुरावेकेषाम् इति । एकत्वेऽपि बहुवचनविधानात् ॥ **धृतरणरणिकैः** धृतोत्कण्ठैः । **स्वर्गिभिः** स्वः सुखस्वरूपं विष्णुं गच्छन्ति सम्यक् जानन्ति प्राप्नुवन्ति वेति स्वर्गिणो मुक्तियोग्यास्तैः रुद्रादिभिरित्यर्थः ॥ **सेव्याम्** आश्रयणीयां भजनीयां वा ॥ **पार्श्वभूमिं** समीपप्रदेशम् प्रपन्नः । प्राप्तस्सन् ॥ **उदास्ते** उपेक्षते तत्वोपदेशं नाङ्गीकरोतीत्यर्थः । स रौरवादिभ्योऽधिकं दुःखदत्वादतिकष्टे अतिदुःखदे ।

पञ्चकष्टे पञ्चविषयाः शब्दाद्याः कष्टाः क्लेशदा यस्मिन् तथोक्ते निरयविशेषे । कृच्छ्रार्थत्वात् 'कृच्छ्रगहनयोः कषः'(पा.सू-८.२.२२)इति नेट् । कथञ्चित् केनापि प्रकारेण न वसति वासं न करोति । किन्त्वसुलभक्लेशनिर्मोकं असुलभः दुर्लभः । क्लेशनिर्मोकः दुःखविच्छेदो यस्मिन् कर्मणि यथा भवति तथा । प्रायेण बाहुल्येन अस्तः अस्तप्रायः । अविद्यमानकल्पः । आनन्दः सुखं यस्मिन् कर्मणि यथा भवति तथा । 'प्रायो भूम्यन्तगमन' इत्यमरः । सांसारिकसुखस्य दुःखवद्धेयत्वात् 'क्रियाव्ययविशेषणानां क्लीबत्वं कर्मत्वमेकवचनान्तत्वम्'(कात्यायनवचनम्) इति वचनात् । नपुंसकत्वादित्वं बोध्यम् ॥ **सततं** निरन्तरम् ॥ **अधिभवं** संसारमधिकृत्येत्यर्थः । 'अव्ययं विभक्ति' (पा.सू-२.१.६) इत्यादिनाऽव्ययीभावः । 'तृतीया सप्तम्योर्बहुलम्' (पा.सू-१.४.८४) इति सप्तम्या अनादेशः ॥ **आस्ते** वसतीत्यर्थः । एवंविधस्य मध्यमजीवत्वादिति भावः । 'मानुषा मध्यमा ये तु सृतियोग्याः सदैव हि' (म.भा.ता.नि. अ-१,श्लो-८७) इति वचनात् । अथवा मुक्तियोग्यस्य प्रमादादाचार्योपदिष्टाचारानुष्ठानाभावेऽपि किञ्चिदपि तत्सेवनं महान्तमनर्थं परिहरति । किमुत तत्साकल्येनेति कैमुत्येन तद्भजनस्यावश्यकत्वं निरूपयति **अस्मिन्निति** ॥ योजना तु पूर्ववत् ॥ **उदास्ते** नियमेन तदुपदिष्टाचारं न करोतीत्यर्थः । सन्ततं आचार्योपदिष्टाचाराच्छिद्रसेवनावधि इत्यर्थः । 'क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' (भ.गी. अ-९,श्लो-३१) इत्याद्युक्तेरिति भावः ।

यद्वा अनेनासुराणां फलं निष्कृष्याचष्टे । हरिचरणचिरध्यानसन्मङ्गळानां अस्मद्गुरूणां युष्माकं धृतरणरणिकस्वर्गिसेव्यां पार्श्वभूमिम् । तुशब्दोऽवधारणे । यः प्रपन्न उदास्त एव विपरीतमेवाङ्गीकरोतीत्यर्थः । **आस्ते अतिकष्टे पञ्चकष्टे** निरयविशेषे **कथञ्चित्** केनापि प्रकारेण **वसति** वसत्येवेत्यर्थ इति व्याख्येयम् । 'असुराणां तमः प्राप्तिस्तदा नियमतो भवेत् । यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम्' (म.भा.ता.नि.अ-१,श्लो-९०) इत्युक्तेरिति भावः ॥ १२ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

उदासीनानां नित्यं संसरणप्रकारमाह– **अस्मिन्निति** ।। अस्मिन् लोके यः पुरुषो हरिचरणचिरध्यानसन्मङ्गलानां पापनिर्हरणाद्धरिशब्दवाच्ययोश्चरणयोश्चिरध्यानं एषां तेषां स्वपादपद्मोपासकानां सन्मङ्गलं येभ्यस्तेषां भजकमङ्गलप्रदानां युष्माकं धृतरणरणिकैः धृतोत्कण्ठैः स्वर्गिभिर्देवैः सेव्यामभ्यस्यमानां पार्श्वभूमिसमीपतया विद्यमानां भूमिमधिष्ठानं प्रतिमारूपं युष्मत्प्रतिपादकं वेदादिशास्त्रमिति यावत् । प्रपन्नोऽपि उदास्ते उदासीनो भवति सः सुलभक्लेशनिर्मोकं क्लेशनिर्मोक्षो यत्र दुर्लभस्तं अस्तप्रायानन्दं भवं संसारमेवाध्यास्ते अतिकष्टे अतिक्लेशप्रदे तस्यैव विवरणं पञ्चकष्टे पञ्चेन्द्रियविषयाः शब्दादयो यत्र कष्टप्रदास्तस्मिन्नन्धे तमसि न वसति ।।१२।।

## श्रीनिवासतीर्थीया

**अन्वयः– अस्मिन्निति** ।। अस्मिन् अस्मद्गुरूणां हरिचरणचिरध्यान-सन्मङ्गलानां युष्माकं धृतरणरणिकस्वर्गिसेव्याम् पार्श्वभूमिं प्रपन्नोऽपि यस्तु उदास्ते सः असुलभक्लेशनिर्मोकम् । अस्तप्रायानन्दम् भवं अधि अधिकृत्य सततम् आस्ते । अतिकष्टे पञ्चकष्टे तमसि कथञ्चित् न वसति ।

**विग्रहवाक्यानि– अस्मद्गुरवः** ।। अस्माकं गुरवः अस्मद्गुरवः । तेषां अस्म-द्गुरूणाम् ।। **हरिचरणचिरध्यानसन्मङ्गलानाम्** ।। हरेश्चरणौ हरिचरणौ । चिरं ध्यानं चिरध्यानम् । हरिचरणयोः चिरध्यानं हरिचरणचिरध्यानम् । सन्ति च तानि मङ्गलानि च सन्मङ्गलानि । हरिचरणचिरध्यानेन सन्मङ्गलानि येषां ते सन्मङ्गलाः । तेषां हरिचरणचिरध्यानसन्मङ्गलानाम् ।। **धृतरणरणिकस्वर्गिसेव्याम्** धृता रणरणिका यैस्ते धृतरणरणिकाः । स्वर्गो येषामस्तीति स्वर्गिणः । धृतरण-रणिकाश्च ते स्वर्गिणश्च । स्वर्गिभिः सेव्या स्वर्गिसेव्या । तां धृतरणरणिक-स्वर्गिसेव्याम् ।। **उदास्ते** उदित्युपसर्गः । आस्ते 'आस भुवि'[४५] लडात्मनेपदि

---

४५. आस उपवेशने इत्येव साधुः ।

प्रथमपुरुषैकवचनम् ॥ **असुलभक्लेशनिर्मोकम्** न सुलभः असुलभः । क्लेशस्य निर्मोकः क्लेशनिर्मोकः । असुलभः क्लेशनिर्मोको यस्मिन् सः । असुलभक्लेशनिर्मोकः । तं असुलभक्लेशनिर्मोकम् ॥ **अस्तप्रायानन्दम्** प्रायेण अस्तः अस्तप्रायः आनन्दः यस्मिन् सः अस्तप्रायानन्दः । तमस्तप्रायानन्दम् ॥ **वसति** 'वस निवासे' लट् परस्मैपदि प्रथमपुरुषैकवचनम् ॥ **अतिकष्टे** अत्यन्तं कष्टं यस्मिन् तत् अतिकष्टम् । तस्मिन् अतिकष्टे ॥ १२ ॥

**क्षुत्क्षामान् रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्**
**आमग्नानन्धकूपे क्षुरमुखमुखरैः पक्षिभिर्विक्षताङ्गान् ।**
**पूयासृङ्मूत्रविष्ठाकृमिकुलकलिले[४६] तत्क्षणाक्षिप्तशक्त्या-**
**द्यस्त्रव्रातार्दितांस्त्वद्विष उपजिहते वज्रकल्पा जळूकाः ॥ १३ ॥**

## कविकर्णामृतम्

असुरा अन्धे तमसि दुःखमनुभवन्तीत्युक्तम् । किं तदन्धतमसम्? किं तद्दुःखम्? इत्याशङ्क्य[४७] तयोः स्वरूपं निरूपयति– **क्षुत्क्षामानिति** ॥ क्षुधा बुभुक्षया क्षामान् क्षीणान् । 'क्षै' धातोः 'क्षायो मः' (पा.सू.८-२-५३) इति निष्ठात्वम् ॥ **रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्** ॥ रूक्षाणां क्रूराणां रक्षसां राक्षसानां रदाः दन्ताः । खरनखरा कराळनखाश्च । 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । तैः क्षुण्णानि चूर्णीकृतानि । 'क्षुदिर् क्षये'[४८] इति धातोः 'रदाभ्याम्–' (पा.सू-८.२.४२) इत्यादिना निष्ठानत्वम् । विक्षोभितानि विशेषेणाऽकुलीकृतानि अक्षीणि चक्षूंषि येषां तांस्तथोक्तान् । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा.सू-५.४.११३) इत्यादिना समासान्तः षच् ॥ **पूयासृङ्मूत्र-**

४६. क्रिमिकुलकलिले

४७. किं तद्दुःखमिति 'श्रोतारः शङ्केरन्' इत्याशङ्क्य, इति किञ्चिदध्याहारेण वाक्य-योजना कर्तव्या । श्रोत्राशङ्कां स्वस्मिन्नारोप्य निरूपयतीति वा वक्तव्यम् ।

४८. 'क्षुदिर् सम्पेषणे' इति प्रचलितो धातुपाठः । क्षुदिर् सञ्चूर्णने इत्यपि पाठः ।

**विष्ठाकृमिकुलकलिले** पूयः[४९] रक्तपरिणामः । असृक् रक्तम् । 'रुधिरेऽसृग् लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । मूत्रं प्रस्रावः । 'मूत्रं प्रस्राव उच्चारः'[५०] इत्यमरः । विष्ठा विट् । 'विष्ठाविशौ स्त्रियौ'[५१] इत्यमरः । कृमिकुलानि कीटसमूहाः । एतैः कलिले बुद्बुदे ।। **अन्धकूपे** अन्धतमसान्धौ । 'पुंस्येवान्धुः प्राहिः कूपः' इत्यमरः ।। **आमग्नान्** आ समन्तान्निमग्नान् ।। **क्षुरमुखमुखरैः** क्षुरः वपनसाधनशास्त्रम्[५२] । तद्वन्मुखानि येषां तैः । मुखरैः वाचालैः । पक्षिभिः शकुन्तविशेषैः ।। **विक्षताङ्गान्** विदीर्णावयववान्[५३] ।। **तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातार्दितान्** ।। तस्मिन् क्षणे क्षिप्तानि प्रेरितानि । शक्तिः कासूनामायुधविशेषः । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । साऽऽदिर्येषां तानि । (अस्त्राणि) आयुधानि । तेषां व्रातः समूहः । तेन अर्दितान् पीडितान् ।। **त्वद्द्विषः** तव द्वेषिणः ।। **वज्रकल्पाः** ईषदसमाप्तवज्राः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (पा.सू-५.३.६७) इति कल्पप्प्रत्ययः । जलमोको येषां ते[५४] ।। **जलूकाः** रक्तपाः । पृषोदरादित्वात्साधुः । 'रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः' इत्यमरः ।। **उपजिहते** समीपं गच्छन्ति । समीपं गत्वा विध्यन्तीत्यर्थः । 'ओहाङ्गतौ' इत्यस्माज्जुहोत्यादिकात् लटि प्रथमपुरुषबहुवचने 'भृञामित्'

---

४९ पूयमिति साधु ।

५०. 'मूत्रं प्रस्रावः' इत्येव अलम् । यतो हि तदेव प्रकृतोपयोगि । उच्चारपदस्य तु 'अवस्करः शमलं शकृत्' इत्युत्तरान्वयात् । नव्यास्तु 'उच्चारावस्कारौ' इति समस्तमुत्तरान्वयित्वेन पठन्ति । अत एव पुरुषोत्तमोऽप्याह– 'उच्चारस्तु पुरीषणः' इति । तथापि उत्सर्गोच्चारपदयोर्मूत्रपुरीषोभयपरत्वं युक्तम् । उभयत्रापि प्रयोगदर्शनात् । तथाहि भारते- 'दाने तपसि सत्ये च यस्य नोच्चरितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः' (म.भा.उद्योग.पर्व-१३३.२४) इति ।

५१. स्त्रियामित्यपि पाठः ।

५२. वपनसाधनास्त्रमित्यपि पाठः ।

५३. विशीर्णावयववान् इति पाठः ।

५४. यासां ताः इत्येव वक्तव्यम् । लिपिकृतां प्रमादेन येषां ते इति सञ्जातम् ।

प्रथमपुरुषैकवचनम् ।। **असुलभक्लेशनिर्मोकम्** न सुलभः असुलभः । क्लेशस्य निर्मोकः क्लेशनिर्मोकः । असुलभः क्लेशनिर्मोको यस्मिन् सः । असुलभक्लेशनिर्मोकः । तं असुलभक्लेशनिर्मोकम् ।। **अस्तप्रायानन्दम्** प्रायेण अस्तः अस्तप्रायः आनन्दः यस्मिन् सः अस्तप्रायानन्दः । तमस्तप्रायानन्दम् ।। **वसति** 'वस निवासे' लट् परस्मैपदि प्रथमपुरुषैकवचनम् ।। **अतिकष्टे** अत्यन्तं कष्टं यस्मिन् तत् अतिकष्टम् । तस्मिन् अतिकष्टे ।। १२ ।।

**क्षुत्क्षामान् रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्**
**आमग्नानन्धकूपे क्षुरमुखमुखरैः पक्षिभिर्विक्षताङ्गान् ।**
**पूयासृङ्मूत्रविष्ठाकृमिकुलकलिले[४६] तत्क्षणाक्षिप्तशक्त्या-**
**द्यस्त्रव्रातार्दितांस्त्वद्द्विष उपजिहते वज्रकल्पा जळूकाः ।। १३ ।।**

## कविकर्णामृतम्

असुरा अन्धे तमसि दुःखमनुभवन्तीत्युक्तम् । किं तदन्धतमसम्? किं तद्दुःखम्? इत्याशङ्क्य[४७] तयोः स्वरूपं निरूपयति– **क्षुत्क्षामानिति** ।। क्षुधा बुभुक्षया क्षामान् क्षीणान् । 'क्षै' धातोः 'क्षायो मः' (पा.सू.८-२-५३) इति निष्ठात्वम् ।। **रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्** ।। रूक्षाणां क्रूराणां रक्षसां राक्षसानां रदाः दन्ताः । खरनखरा कराळनखाश्च । 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । तैः क्षुण्णानि चूर्णीकृतानि । 'क्षुदिर् क्षये'[४८] इति धातोः 'रदाभ्याम्–' (पा.सू-८.२.४२) इत्यादिना निष्ठानत्वम् । विक्षोभितानि विशेषेणाऽकुलीकृतानि अक्षीणि चक्षूंषि येषां तांस्तथोक्तान् । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा.सू-५.४.११३) इत्यादिना समासान्तः षच् ।। **पूयासृङ्मूत्र-**

४६. क्रिमिकुलकलिले

४७. किं तद्दुःखमिति 'श्रोतारः शङ्केरन्' इत्याशङ्क्य, इति किञ्चिदध्याहारेण वाक्ययोजना कर्तव्या । श्रोत्राशङ्कां स्वस्मिन्नारोप्य निरूपयतीति वा वक्तव्यम् ।

४८. 'क्षुदिर् सम्पेषणे' इति प्रचलितो धातुपाठः । क्षुदिर् सञ्चूर्णने इत्यपि पाठः ।

**विष्ठाकृमिकुलकलिले** पूयः[४९] रक्तपरिणामः । असृक् रक्तम् । 'रुधिरेऽसृग् लोहितास्रक्षतजशोणितम्' इत्यमरः । मूत्रं प्रस्रावः । 'मूत्रं प्रस्राव उच्चारः'[५०] इत्यमरः । विष्ठा विट् । 'विष्ठाविशौ स्त्रियौ'[५१] इत्यमरः । कृमिकुलानि कीटसमूहाः । एतैः कलिले बुद्बुदे ॥ **अन्धकूपे** अन्धतमसान्धौ । 'पुंस्येवान्धुः प्राहिः कूपः' इत्यमरः ॥ **आमग्नान्** आ समन्तान्निमग्नान् ॥ **क्षुरमुखमुखरैः** क्षुरः वपनसाधनशस्त्रम्[५२] । तद्वन्मुखानि येषां तैः । मुखरैः वाचालैः । पक्षिभिः शकुन्तविशेषैः ॥ **विक्षताङ्गान्** विदीर्णावयववान्[५३] ॥ **तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातार्दितान्** ॥ तस्मिन् क्षणे क्षिप्तानि प्रेरितानि । शक्तिः कासूनामायुधविशेषः । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । साऽऽदिर्येषां तानि । (अस्त्राणि) आयुधानि । तेषां व्रातः समूहः । तेन अर्दितान् पीडितान् ॥ **त्वद्द्विषः** तव द्वेषिणः ॥ **वज्रकल्पाः** ईषदसमाप्तवज्राः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (पा.सू-५.३.६७) इति कल्पप्प्रत्ययः । जलमोको येषां ते[५४] ॥ **जलूकाः** रक्तपाः । पृषोदरादित्वात्साधुः । 'रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः' इत्यमरः ॥ **उपजिहते** समीपं गच्छन्ति । समीपं गत्वा विध्यन्तीत्यर्थः । 'ओहाङ्गतौ' इत्यस्माज्जुहोत्यादिकात् लटि प्रथमपुरुषबहुवचने 'भृञामित्'

---

४९ पूयमिति साधु ।

५०. 'मूत्रं प्रस्रावः' इत्येव अलम् । यतो हि तदेव प्रकृतोपयोगि । उच्चारपदस्य तु 'अवस्करः शमलं शकृत्' इत्युत्तरान्वयात् । नव्यास्तु 'उच्चारावस्कारौ' इति समस्तमुत्तरान्वयित्वेन पठन्ति । अत एव पुरुषोत्तमोऽप्याह– 'उच्चारस्तु पुरीषणः' इति । तथापि उत्सर्गोच्चारपदयोर्मूत्रपुरीषोभयपरत्वं युक्तम् । उभयत्रापि प्रयोगदर्शनात् । तथाहि भारते- 'दाने तपसि सत्ये च यस्य नोच्चरितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः' (म.भा.उद्योग.पर्व-१३३.२४) इति ।

५१. स्त्रियामित्यपि पाठः ।

५२. वपनसाधनास्त्रमित्यपि पाठः ।

५३. विशीर्णावयववान् इति पाठः ।

५४. यासां ताः इत्येव वक्तव्यम् । लिपिकृतां प्रमादेन येषां ते इति सञ्जातम् ।

(पा.सू-७.४.७६) इत्यभ्यासस्येत्वे कृते 'अदभ्यस्तात्' (पा.सू-७.१.४) इत्यदादेशो रूपम् ॥ १३ ॥

## बालबोधिनी

असुरा अन्धे तमसि दुःखमनुभवन्तीत्युक्तं किं तदन्धन्तमसं किं तद्दुःखमित्याशङ्कायां तयोः स्वरूपमाह– **क्षुत्क्षामानिति** ॥ क्षुधा बुभुक्षया क्षामान् क्षीणान् 'क्षै' धातोः 'क्षायो मः' (पा.सू-८.२.५३) इति क्तस्य मत्वम् ॥ **रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षात्** ॥ रूक्षाणि क्रूराणि यानि रक्षांसि तेषां रदा दन्तास्ते च खराः कर्कशा ये नखरा नखास्ते च तैः क्षुण्णानि चूर्णीकृतानि 'क्षुद सञ्चूर्णने' इति धातोः । तादृशानि यानि विक्षोभितानि विशेषेणाकुलीकृतान्यक्षीणि चक्षूंषि येषां ते तथोक्तास्तान् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (पा.सू-५.४.११३) इति समासान्तात् षच् ॥ **पूयासृङ्मूत्रविष्टाकृमिकुलकलिले** ॥ पूयं पामादिजन्यो रक्तविकारः । तच्च असृग् रक्तं तच्च मूत्रे च विष्ठा च कृमिकुलानि च कृमिसमूहास्तानि च तैः कलिले क्षुब्धे । अन्धमेवान्धतमसमेव कूपो कूपस्तस्मिन् । 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः ॥ **आमग्नान्** आसमन्तान्मग्नान् ॥ **क्षुरमुखमुखरैः** क्षुरवत् क्षुरधारावत् मुखानि येषां ते तथोक्तास्तादृशा ये मुखरा वाचालास्तैः ॥ **पक्षिभिः** काकगृध्रादिभिः ॥ **विक्षताङ्गान्** वीक्षतानि विदीर्णानि अङ्गानि येषां ते तथोक्तास्तान् ॥ **तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातार्दितान्** ॥ स चासौ क्षणश्च तत्क्षणस्तस्मिन् क्षिप्तानि प्रेरितानि यानि शक्त्याद्यस्त्राणि शक्तिः कासूनामायुधविशेषः । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । सा आदिर्येषां तानि शक्त्यादीनि तानि च तान्यस्त्राणि च तेषां व्रातः समूहस्तेन **अर्दितान्** पीडितान् । **त्वद्द्विषः** तव द्विषो द्वेषिणस्त्वद्द्विषः ॥ **वज्रकल्पा** ईषदसमाप्तवज्रा वज्रकल्पाः किञ्चिद्वज्रतुल्या इत्यर्थः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (पा.सू-५.३.६७) इति कल्पप् प्रत्ययः ॥ **जलूकाः** जलमोको येषां ते जलू(लौ)का रक्तपाः पृषोदरादित्वात्साधुः । 'रक्तपास्तु जलू(लौ)कायां स्त्रियां भूम्नि जलौकसः'

इत्यमरः ॥ **उपजिहते** उपगच्छन्ति समीपं गत्वा विध्यन्तीत्यर्थः । 'ओहाङ् गतौ' लट् ॥ १३ ॥

## मन्दबोधिनी

मुख्यप्राणद्वेषिणामन्धतमः फलमुक्तम् । तत्स्वरूपं निरूपयति– **क्षुत्क्षामानिति** ॥ हे मुख्यप्राण **वज्रकल्पाः** वज्रसदृशाः जलूकाः रक्तपानकर्तृजन्तुविशेषाः **त्वद्विषः** तव द्वेषिणः तान् मिथ्याज्ञानिनः ॥ **उपजिहते** समीपमागच्छन्ति समीपं गत्वा विद्ध्यन्तीत्यर्थः । 'ओहाङ् गतौ' इत्यतो लडात्मनेपदं जिहीते जिहाते जिहते इति रूपाणि । कीदृशान् त्वद्वेषिणः **क्षुत्क्षामान्** क्षुधा बुभुक्षया क्षामान् क्षीणान् । पुनः कीदृशान् ॥ **रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्** ॥ रूक्षाणि क्रूराणि च तानि रक्षांसि च राक्षसाः तेषां रदाः दन्ताश्च खराः तीक्ष्णाः नखराः नखाश्च तैः क्षुण्णानि क्षोदं व्यथां प्राप्तानि 'विक्षोभितानि विशेषेण आकुलीभूतानि अक्षीणि चक्षूंषि येषां ते तथोक्ताः तान् । 'रदना दशना दन्ता रदा' इत्यमरः । पुनः कथम्भूतान् **अन्धकूपे** अन्धकूपसदृशे **अन्धेतमसि आमग्नान्** आ समन्तान्निमग्नान् । पुनः कथं भूतान् ॥ **क्षुरमुखमुखरैः** ॥ क्षुरवत् क्षुरधारावत् मुखानि येषां ते तथोक्ताः ते च ते मुखरा वाचालाश्च कर्णकठोरशब्दं कुर्वन्ती इत्यर्थः तैः पक्षिभिः । **विक्षताङ्गान्** विक्षतानि विशेषेण व्रणीकृतानि अङ्गानि येषां तान् । पुनः कथम्भूता ॥ **तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातार्दितान्** ॥ स चासौ क्षणश्च तत्क्षणः तस्मिन् व्रणीकरणक्षण एव क्षिप्तानि प्रक्षिप्तानि शक्तिः तन्नामकायुधविशेष आदिर्येषां तानि शक्त्यादीनि च तानि अस्त्राणि आयुधानि च तत्क्षणाक्षिप्तानि च तानि शक्त्याद्यस्त्राणि च तेषां व्रातः समूहः तेन आर्दितान् पीडितान् । 'अस्त्रं प्रहरणे चापे' इत्यमरः । कथम्भूते अन्धकूपे ॥ **पूयासृङ्मूत्रविष्ठाकृमिकुलकलिले** ॥ पूयं रक्तपरिणामः । असृग् रक्तं 'रुधिरासृग्लोहितास्त्ररक्तक्षतजशोणितं' इत्यमरः । पूयं च असृक् च मूत्रं च विष्टा च अमेध्यं च कृमिकुलानि कीटसमूहाश्च एतैः कलिले कलुषिते ॥ १३ ॥

## भावप्रदीपिका

भक्तेर्मुक्तिसाधनतावधारणार्थं दैत्या नियमेन पञ्चकष्टे दुःखमनुभवन्तीत्युक्तम् । तत्र कथं तस्य पञ्चकष्टत्वं कीदृशं च दुःखमित्याशङ्कायां तयोः स्वरूपं विशिष्य निरूपयति– **क्षुत्क्षामानिति** ॥ वज्रादीषन्न्यूनाः वज्रकल्पाः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (पा.सू-५.३.६७) इति कल्पप् प्रत्ययः ॥ **जलूकाः** जले ओक आवास यासां ताः जलूकाः । रक्तपाः । पृषोदरादीति यथोपदिष्टमिति निपातनात्साधुः । 'रक्तपा तु जलूकायां स्त्रियं भूम्नि जलौकसः' इत्यमरः ॥ **पूयासृङ्मूत्रविष्टाकृमिकुलकलिले** पूयं रक्तविकारः । असृक् पामादिजन्यं रुधिरम् । 'रुधिरेऽसृग्लोहितास्रं रक्तक्षतजशोणितम्' इत्यमरः । मूत्रविष्ठे प्रसिद्धे । तत्सहितास्तदुत्पन्ना वा ये कृमयः कीटाः पूयानि च असृंजि च मूत्राणि च विष्ठाश्च क्रिमयश्चेति वा तेषां कुलेन समूहेन कलिले बुद्बुदायमाने ॥ **अन्धकूपे** अन्धन्तमसि ॥ **आमग्नान्** आ सम्यक् मज्जनं प्राप्तान् ॥ **क्षुत्क्षामान्** क्षुधा क्षामान् क्षीणान् । 'क्षै क्षय' इत्यस्य 'क्षायो मः' (पा.सू-८.२.५३) इति निष्ठान्तस्य मत्वे रूपम् ॥ **रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताक्षान्** रूक्षाणि क्रूराणि यानि रक्षांसि राक्षसाः तेषां रदा दन्ताः । 'रदना दशना दन्ता रदा' इत्यमरः । खराः कठिणाः ये नखराः नखाः । 'पुनर्भुवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । तैः क्षुण्णानि सञ्चूर्णितानि । 'क्षुदिर् सञ्चूर्णने' इत्यतो निष्ठान्तस्य 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (पा.सू-८.२.४२) नत्वे णत्वे रूपम् ॥ **विक्षोभिताक्षान्** विक्षोभितानि विशेषेण क्षोभमितानि अक्षीणि नेत्राणि येषान्ते तथोक्तास्तान् । 'बहुव्रीहौ संक्थ्यक्ष्णोः स्वाङ्गात् षच्' (पा.सू-५.४.११३) इति षच् प्रत्ययः । विक्षोभिताः अक्षाः इन्द्रियाणि येषामिति वा । 'अक्षो रथाङ्ग आधारे व्यवहारे विभीतके । पाशके शकटे कर्षे द्यूतभेदेऽक्षयिन्द्रिये' इति यादवः ॥ **क्षुरमुखमुखरैः क्षुरः** वपनसाधनशस्त्रम् । तद्वन्मुखानि वक्त्राणि येषां ते तथोक्ताः ते च ते मुखराश्चेति विशेषणसमासः । मखरा दुर्मुखाः वाचाला इति यावत् । 'दुर्मुखे मुखराबद्धमुखौ' इत्यमरः । तैः पक्षिभिः ॥ **विक्षताङ्गान्** विशेषेण क्षतानि

व्रणीकृतानि अङ्गानि अवयवा येषां ते तथोक्ताः तान् ॥ **तत्क्षणाक्षिप्तशक्त्याद्यस्त्र-व्रातार्दितान्** स चासौ क्षणश्चेति तत्क्षणः । तस्मिन् । व्रणीकरणक्षण एव । क्षिप्तानि निरस्तानि यानि शक्तिः कासुनामायुधविशेषः । 'कासुः सामर्थ्ययोः शक्तिः' इत्यमरः । शक्तिरादिर्येषां तानि । यान्यस्त्राणि आयुधानि तेषां व्रातेन समूहेनार्दितान् पीडितान् ॥ **त्वद्विषः** त्वदप्रीतिमतो दैत्यान् ॥ **उपजिहते** ॥ जिहते प्राप्नुवन्ति । 'ओ हाङ् गतौ' गत्यर्थानां प्राप्त्यर्थत्वात् । समीपं प्राप्य विदार-यन्तीत्यर्थः । 'धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्योऽ-नर्थकोऽन्यः प्रयुज्यते'[५५] इति वचनादुपसर्गस्य धात्वर्थविशेषकत्वं ज्ञेयम् । एवं च मुमुक्षुणैतद्भक्तिरवश्यं सम्पादनीयेति भावः ॥ १३ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

द्वेषिणां तमसि दुःखविशेषानुभवप्रकारं पुनरुपपादयति– **क्षुत्क्षामानिति** ॥ क्षुधा क्षामान् क्षीणान् । रूक्षरक्षसां रदैः खरनखरैश्च क्षुण्णानि व्यथितानि विक्षोभितानि विशेषेणाकुलतां प्राप्तानि अक्षीणि एषां तान् ॥ **पूयासृङ्मूत्रविष्टा-क्रिमिकुलकलिले अन्धकूपे** तमस्यामग्रान् क्षुरमुखप्रमुख्यैः पक्षिभिर्विक्षतावयवान् तस्मिन्नेव क्षणे आक्षिप्तैः शक्त्याद्यस्त्रव्रातैरर्दितान् त्वद्विषः पुरुषान् वज्रसदृशा जलूकाः रुधिरपातृजलजं तु विशेषाः दंशितुमुपजिहते समीपे आगच्छन्ति । 'ओहाग्गतौ' इति धातुः ॥ १३ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– क्षुत्क्षामानिति** ॥ हे वायो वज्रकल्पा जलूकाः । रूक्षरक्षोरदखर-नखरक्षुण्णविक्षोभिताक्षान् । पूयासृङ्मूत्रविष्टाकृमिकुलकलिले अन्धकूपे आमग्रान् क्षुरमुखमुखरैः पक्षिभिर्वीक्षिताङ्गान् तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्रातार्दितान् । त्वद्विषः उपजिहते ।

---

५५. कोशग्रन्थोदाहृतश्लोकोऽयम् इति भाति ।

**विग्रहवाक्यानि– क्षुत्क्षामान्** ॥ क्षुधा क्षामाः क्षुत्क्षामाः ॥ **रूक्षरक्षोरदखर-नखरक्षुण्णविक्षोभिताक्षातान्** रूक्षानि च तानि रक्षांसि च रूक्षरक्षांसि । खराश्च ते नखराश्च खरनखराः । रदाश्च ते खरनखराश्च रदखरनखराः । रूक्षरक्षसां रदखरनखराः । नखरैः क्षुण्णानि नखरक्षुण्णानि विक्षोभितानि च तानि अक्षीणि च विक्षोभिताक्षीणि । नखरक्षुण्णानि विक्षोभिताक्षीणि येषां ते तथा तान् रदखरनखरक्षुण्णविक्षोभिताक्षान् ॥ **आमग्नान्** आसमन्तात् मग्नाः आमग्नाः । तान् आमग्नान् ॥ **क्षुरमुखमुखरैः** क्षुरस्य मुखं क्षुरमुखं । क्षुरमुखवत् मुखराः क्षुरमुखमुखराः । तैः ॥ **वीक्षिताङ्गान्** वीक्षितानि अङ्गानि येषां ते वीक्षिताङ्गाः । तान् वीक्षिताङ्गान् ॥ **पूयासृङ्मूत्रविष्टाकृमिकुलकलिले** कृमीणां कुलं कृमिकुलम् । पूयश्च असृक् च मूत्रं च विष्टा च कृमिकुलं च पूयासृङ्मूत्रविष्टाकृमिकुलानि कुलानां कलिलः, तस्मिन् पूयासृङ्मूत्रविष्टाकृमिकुलकलिले ॥ **तत्क्षणाक्षिप्तशक्त्याद्यस्त्रव्राता-र्दितान्** स चासौ क्षणश्च तत्क्षणः । तस्मिन् तत्क्षणे । तत्क्षणे क्षिप्तानि तत्क्षणा-क्षिप्तानि । तत्क्षणाक्षिप्तानि शक्तिः आदिः येषां तानि तत्क्षणाक्षिप्तशक्त्यादीनि । शक्त्यादीनि च तानि अस्त्राणि च शक्त्याद्यस्त्राणि । अस्त्राणां व्रातः अस्त्रव्रातः । अस्त्रव्रातेन अर्दिताः अस्त्रव्रातार्दिताः । तान् ॥ **त्वद्विषः** तव द्विषः त्वद्विषः । तान् ॥ **उपजिहते** उप इत्युपसर्गः जिहतेः 'ओहाङ् गतौ' लडात्मनेपदि प्रथमपुरुषबहुवचनम् । उपजिहते ॥ **वज्रकल्पाः** वज्रस्य कल्पाः ॥ १३ ॥

**मातर्मे मातरिश्वन् पितरतुलगुरो भ्रातरिष्टाप्तबन्धो**
**स्वामिन् सर्वान्तरात्मन्नजरजरयितर्जन्ममृत्यामयानाम् ।**
**गोविन्दे देहि भक्तिं भवति च भगवन्नूर्जितां निर्निमित्तां**
**निर्व्याजां निश्चलां सद्गुणगणबृहतीं शाश्वतीमाशु देव ॥ १४ ॥**

## कविकर्णामृतम्

यद्यपि मूर्धनीत्यतीतश्लोके सामान्यतो भक्तिरभ्यर्थिता । तथाऽप्यतृप्ततया तामेव विशिष्य पुनः प्रार्थयते– **मातरिति** ॥ हे **मातः** अम्ब ॥ **पितः** जनक ॥

**अतुलगुरो** समानरहितगुरो ॥ **भ्रातः** सोदर ॥ **इष्ट** प्रिय **आप्तबन्धो** आप्तबान्धव ॥ **स्वामिन्** शास्तः ॥ **सर्वान्तरात्मन्** सर्वान्तर्यामिन् ॥ **अजर** अविद्यमानजर ॥ **जन्ममृत्यामयानां** जननमरणव्याधीनां **जरयितः** मारयितः ॥ **भगवन्** षड्गुणैश्वर्यसम्पन्न ॥ **देव** ज्ञानादिगुणक ॥ **हे मातरिश्वन्** मुख्यप्राण ॥ **मे** मम ॥ **ऊर्जितां** प्रवृद्धाम् ॥ **निर्निमित्तां** निरुपाधिकाम् ॥ **निर्व्याजां** अनन्यमुख-प्रसादार्थाम् । अडाम्भिकामित्यर्थः ॥ **निश्चलां** स्थिरां परनिन्दादिभिरविद्यमान-ह्रासाम् ॥ **सद्गुणगणबृहतीं** सद्गुणाः माहात्म्यज्ञानादयः । तेषां गणः तेन बृहतीं महतीम् ॥ **शाश्वतीं** नित्याम् । एवं विशिष्टां भक्तिं गोविन्दे विष्णौ भवति त्वयि च **आशु** अविलम्बेन **देहि** प्रदिश । इष्टदेवतागुरुभक्तेः सकलपुरुषार्थहेतुत्वात् । तदुक्तं गीतायां भगवता श्रीकृष्णेन–

'भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप' इति । (भ.गी.अ-११,श्लो-५४)

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'
(श्वेताश्वतरोपनिषत्-अ-६ मं-२३) इति श्रुतिश्च ॥ १४ ॥

## बालबोधिनी

यद्यपि मूर्धनीत्यतीतश्लोके सामान्यतो भक्तिरभ्यर्थिता तथाप्यतृप्ततया तामेव विशिष्य प्रार्थयते– **मातरिति** ॥ हे **मातः** अम्ब ॥ हे **पितः** जनक । न विद्यते तुला उपमा यस्य सोऽतुलोऽसदृश इत्यर्थः । स चासौ गुरुश्च तत्सम्बुद्धिर्हे अतुलगुरो ॥ हे **भ्रातः** सोदर । हे **इष्ट** प्रिय ॥ **आप्तबन्धो** आप्तश्चासौ बन्धुश्चाप्तबन्धुस्तत्सम्बुद्धिराप्तबन्धो ॥ **स्वामिन्** शास्तः । कथमेकस्य प्राणस्य पितृत्वादिकमित्यत आह **सर्वान्तरात्मन्निति** ॥ सर्वस्यान्तरात्मन् अन्तर्यामिन्[५६] ।

५६. सर्वान्तर्यामित्वात् त्वं माता, पिता, गुरुः, भ्राता, बन्धुश्च सर्वेषां भवति इत्याशयः ।

न विद्यते जरा यस्य सोऽजरस्तत्सम्बुद्धिः हे अजर । जन्म जननं तच्च मृत्युः मरणं स च आमयो रोगः स च तेषां जरयितर्विनाशयितः ॥ हे **भगवन्** षड्गुणैश्वर्यसम्पन्न **देव** क्रीडादिगुणविशिष्ट हे **मातरिश्वन्** मुख्यवायो **मे** मम **ऊर्जितां** प्रवृद्धाम् ॥ **निर्निमित्तां** निर्गतं निमित्तं यस्याः सा निर्निमित्ता ताम्, कलत्रपुत्राद्यभिवृद्ध्यनुसन्धानरहितामित्यर्थः ॥ **निर्व्याजां** निर्गतं व्याजं कैतवं यस्याः सा निर्व्याजा तामडाम्भिकामित्यर्थः ॥ **निश्चलां** निर्गतश्चलश्चलनं यस्याः सा निश्चला तां सुस्थिरामित्यर्थः । सन्तो ये गुणा वैराग्यादयस्तेषां गणः समूहस्तेन बृहतीं नित्यां भक्तिं **गोविन्दे** कृष्णे भवति त्वयि च **आशु** अविलम्बेन **देहि** प्रदिश 'डुदाञ् दाने' लोट् ॥ १४ ॥

## मन्दबोधिनी

आदरातिशयाद्धरौ गुरौ मातृत्वाद्युपाधिभिः भक्तिं प्रार्थयते– **मातरिति** ॥ हे **मातरिश्वन्** मुख्यप्राण त्वं ॥ **मे** मम **गोविन्दे** हरौ ॥ **भवति** त्वयि च ॥ **आशु** शीघ्रं ॥ **भक्तिं देहि** ॥ 'डुदाञ् दाने' इत्यतो लोट् परस्मैपदं देहि दत्तात्, दत्तं दत्त इति रूपाणि । कथम्भूतः ॥ **मातरिश्वन् मातः** ॥ मातृवत् पोषक, पुनः कथम्भूतः ॥ **पितः** पितृवच्छिक्षक ॥ **अतुलगुरो** ॥ अतुल असदृश गुरो हितोपदेशक ॥ **भ्रातः** ॥ सहोदरवत् प्रीतिकर्तः ॥ **इष्ट** प्रिय **आप्तबन्धो** आप्तबान्धव ॥ **स्वामिन्** सर्वस्वामिन् ॥ **सर्वान्तरात्मन्** सर्वान्तर्यामिन् ॥ **अजर** जरारहित पुनः कथम्भूतः **जन्ममृत्यामयानां** ॥ जननमरणव्याधीनां **जरयितः** जराप्रापकजन्मादिनिवर्तकेति यावत् ॥ **भगवन्** ऐश्वर्यादिगुणसम्पन्न ॥ **देव** क्रीडादिगुणविशिष्ट किं लक्षणां भक्तिम् ॥ **ऊर्जिताम्** उत्कृष्टां पुनः किंलक्षणां **निर्निमित्ताम्** निर्गतानि निमित्तानि फलकामनादीनि यस्याः सा तथोक्ता ताम् ॥ **निर्व्याजाम्** अविद्यमानविशिष्टत्वप्रख्यापनरूपदम्भरहिताम् ॥ **निश्चलाम्** दृढां अन्तरायसहस्रेणाप्यप्रतिहतामिति यावत् ॥ **सद्गुणगणबृहतीं** सद्गुणाः माहात्म्यज्ञानादयः तेषां गणः तेन बृहतीं अभिवृद्धाम् ॥ **शाश्वतीं** शश्वदेकप्रकारां अनश्वरामिति यावत् ॥ १४ ॥

# भावप्रदीपिका

यद्यपि मूर्धनीत्यतीतश्लोके भगवद्गुरुभक्तिरभ्यर्थिता । तथापि तत्रापि अनलम्बुद्धितया तामेव भक्तिं पुनर्विशिष्याभिमुखीकरणपूर्वकं प्रार्थयते– **मातरिति** ॥ **हे मातः** पोषकत्वाद् ॥ **हे मातरिश्वन्** ॥ श्वयति जानातीति श्वा । गत्यर्थानामवगत्यर्थत्वात् । 'टु ओश्विगतिवृद्ध्योः' इत्यस्मादौणादिको डनन् प्रत्ययः । मातरि जात्यभिप्रायेणैकवचनम् । वेदादिप्रमाणेषु । श्वा मातरिश्वा वेदादिप्रमाणज्ञ इत्यर्थः । तस्य सम्बुद्धिः । 'संज्ञायां...... (पा.सू-२.१.४४) इति सप्तमीसमासः । 'तत्पुरुषे कृति बहुलम्' (पा.सू-६.३.२४) इत्यलुक् । अन्येषां वेदज्ञत्वेऽपि 'अब्भक्षो वायुभक्षः' इतिवत् असाधारण्येन व्यपदेशा भवन्ति ॥ **हे पितः** ॥ जनकत्वात् ॥ **अतुलगुरो** असदृशगुरो । रुद्रादिसर्वजगद्गुरुत्वात् ॥ **हे भ्रातः** ॥ **हे इष्ट** ॥ **हे आप्तबन्धो** ॥ **हे स्वामिन्** ॥ सर्वं स्वमधीनमस्येति तस्य सम्बुद्धिः । स्वामिन्नैश्वर्य इति निपातनात् ॥ **हे सर्वान्तरात्मन्** ॥ सर्वान्तःप्रेरक । सर्वस्यान्तःस्थित्वा रमत इति सर्वान्तरः हरिः तत्रैवात्मा मनो यस्यासाविति वा । 'रमु क्रीडायाम्' इत्यस्मादौणादिको डप्रत्ययः ॥ **हे अजर** जरारहित ॥ **जन्ममृत्यामयानां** जन्म उत्पत्तिः । मृतिर्मरणम् । आमयो रोगः । 'रोगव्याधिगदामया' इत्यमरः । तेषां जन्ममृत्यामयानां **जरयितः** निवर्तयितः ॥ **हे भगवन्** भूतोत्पत्यादिकर्तृ ब्रह्मज्ञ । 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवान् इति' (नारद.पु.अ-४६,श्लो-२१) । इति पुराणवचनात् । हे **देव** क्रीडादिगुणविशिष्ट ।

यद्वा **आशुदेव** इत्येकं पदम् । अश्नुते सर्वं व्याप्नोतीत्याशुः । 'अशुव्याप्तौ' इत्यस्मात् 'कृवापाजिमिस्वादसाध्यशूभ्य उण्' (उणादि-१) इत्युण् प्रत्ययः । ततः कर्मधारयः । तस्य सम्बुद्धिः ॥ **हे आशुदेव** । 'आश्वविलम्बितमाशु च' इत्यमरः ॥ **मे** मम ॥ **गोविन्दे** गाः वेदादिवाचो विन्दति विषयतया प्राप्नोतीति गोशब्दवाच्यानि इन्द्रियाणि नियामकत्वादिना प्राप्नोतीति गोविन्दः तस्मिन् विष्णौ ।

'स्वर्गेषु पशुवाग्वज्रदिङ्मात्रघृणिभूतले । 'लक्ष्यदृष्ट्योः स्त्रियां पुंसि गोर्लिङ्गं चिह्नशेफसोः' इत्यमरः । 'गवादिषु विन्देः संज्ञायाम्' (वा-३८६१) इति शप्रत्ययः ॥ **ऊर्जिताम्** वर्धमानत्वेनोत्कृष्टाम् ॥ **निर्निमित्ताम्** ॥ निर्गतानि निमित्तानि फलकामनादीनि यस्याः सा निर्निमित्ता ताम् ॥ **निर्व्याजाम्** ॥ अविद्यमानविशिष्टत्वख्यापनरूपदम्भरहिताम् । 'कपटोऽस्त्री व्याजदम्भोपधयश्चद्म-कैतवे' इत्यभिधानम् ॥ **निश्चलाम्** । दृढाम् । अन्तरायसहस्रेणाप्यप्रतिबद्धा-मित्यर्थः ॥ **सद्गुणगणबृहतीम्** । सज्ज्ञानवैराग्यादिगुणगणपरिपूर्णाम् ॥ **शाश्वतीम्** ॥ शश्वद्भवा शाश्वती ताम् 'तत्र भवः' (पा.सू-४.३.५३) इत्यण् प्रत्ययः । अणन्तत्वात् ङीप् । तां शश्वदेकप्रकारां **भक्तिं** उक्तलक्षणविशिष्टाम् **देहि** ॥ अथ भवति च मुख्यप्राणे उक्तलक्षणविशिष्टां भक्तिं देहि 'डुदाञ् दाने' लोट् च' (पा.सू-३.३.२६१) प्रार्थने लोट् । 'घ्वसोरेद्धावभ्यासलोपश्च' (पा.सू-६.४.१२९) इत्येत्वाभ्यासलोपौ । उक्तानुकर्षणार्थचकारादत्रान्वयभेदस्य लब्धत्वेन नोभयत्रैकलक्षणभक्तिप्रार्थनम् युक्तमित्येतन्निरस्तमिति ज्ञेयम् । हरिभक्तिरुक्त-लक्षणैव । गुरुभक्तिस्तु भगवद्भक्तिपूर्वकशमदमादिगुणादिमत्वज्ञानपूर्वकेत्यादिलक्षणा द्रष्टव्या । एवं च विशिष्टश्रेयोऽर्थिभिरुक्तलक्षणा हरिभक्तिरभ्यर्थनीयेति भावः ॥१४॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवं द्वेषस्य महानर्थहेतुत्वात् तद्भक्तिमेव मे देहीति पुनर्विज्ञापयति– **मातरिति** ॥ अव्यवधानेन प्रसवितृत्वान्मातः । व्यवधानेन प्रसवितृत्वात् **पितः** ॥ मातरि जगज्जनन्यां लक्ष्म्यां गमनान्मातरिश्वन् लक्ष्मीनिवास । 'श्वि गतौ' इति धातुः । सहैव जननाद्भ्रातः ॥ **अजर** ॥ जन्मादीनां जरयितः ॥ हे देव **गोविन्दे** वेदप्रतिपाद्ये **भवति च** भवत्येव भक्तिं देहीत्यन्वयः ॥ **निर्निमित्ताम्** फलकामना-रहिताम् । सद्गुणानां विषयवैराग्यादीनां गणैर्बृहतीमभिवृद्धाम् । यद्वा सद्गुणगणे इतरगुणापेक्षया उत्तमामिति ॥ १४ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– मातर्मे इति ॥** हे मातः अतुलगुरो भ्रातः इष्टाप्तबन्धो स्वामिन् सर्वान्तरात्मन् अजर जन्ममृत्यामयानां जरयितः भगवन् देव हे मातरिष्वन् त्वं गोविन्दे भवति च ऊर्जितां निर्निमित्तां निर्व्याजाम् निश्चलां सद्गुणगणबृहतीं शाश्वतीं भक्तिम् आशु देहि ।

**विग्रहवाक्यानि– अतुलगुरो ॥** न विद्यते तुला यस्यासौ अतुलः । अतुलश्चासौ गुरुश्च अतुलगुरुः । तस्य सम्बुद्धिः अतुलगुरो ॥ **जन्ममृत्यामयानाम् ॥** जन्म च मृतिश्च आमयश्च जन्ममृत्यामयाः तेषां जन्ममृत्यामयानाम् ॥ **देहि** 'डुदाञ् दाने' लोट् परस्मैपदं मध्यमपुरुषैकवचनम् ॥ **निर्निमित्तां** निर्गतं निमित्तं यस्या सा निर्निमित्ता । तां निर्निमित्ताम् ॥ **निर्व्याजाम्** न विद्यते व्याजो यस्याः सा निर्व्याजा । तां निर्व्याजाम् ॥ **निश्चलाम्** न विद्यते चलः यस्याः सा निश्चला । तां निश्चलाम् ॥ **सद्गुणगणबृहतीम्** सन्तश्च ते गुणाश्च सद्गुणाः । सद्गुणानां गणाः सद्गुणगणाः । गुणगणैः बृहयते इति सद्गुणगणबृहती । तां सद्गुणगणबृहतीम् ॥ १४ ॥

**विष्णोरत्युत्तमत्वादखिलगुणगणैस्तत्र भक्तिं गरिष्ठां**
**संश्लिष्टे[५७] श्रीधराभ्याममुमथ परिवारात्मना सेवकेषु ।**
**यः सन्धत्ते विरिञ्चिश्वसनविहगपानन्तरुद्रेन्द्रपूर्वे-**
**ष्वाध्यायंस्तारतम्यं स्फुटमवति सदा वायुरस्मद्गुरुस्तम् ॥ १५ ॥**

## कविकर्णामृतम्

गुरुदेवताभक्तेः सकलपुरुषार्थसाधनत्वादवश्यमनुष्ठेयत्वमुक्तम् । कथमनुष्ठानक्रमः, किं तस्य फलमित्यत आह– **विष्णोरित्यादिना ॥** यः **अखिलगुणगणैः** सकलज्ञानानन्दादिकल्याणगुणसमूहैः **विष्णोः** श्रीनारायणस्य **अत्युत्तमत्वात्** समाधिक-

५७. गरिष्ठामाश्लिष्टे इत्यपि पाठः ।

रहितत्वेन सर्वोत्कृष्टत्वात् । **श्रीधराभ्यां** लक्ष्मीक्षोणीभ्यां **संश्लिष्टे** आलिङ्गिते **तत्र** विष्णौ ॥ **गरिष्ठां** अतिगुर्वीं **भक्तिं सन्धत्ते** सम्यग्दधाति ॥ **अथ** अनन्तरं **अमुं** श्रीविष्णुं प्रति । अत्र प्रतिशब्दोऽध्याहर्तव्यः । अन्यथा 'कर्तृकर्मणोः कृति' (पा.सू-२.३.६५) इति कर्मणि षष्ठी प्राप्नोति । प्रतिशब्दयोगे तु 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि'[५८] (वा) इति तदपवादिका द्वितीयैव भवति ॥ **परिवारात्मना** परिवाररूपेण **सेवकेषु** सेवां कुर्वाणेषु । विरिञ्चिः ब्रह्मा । श्वसनो मुख्यप्राणः । विहगपो गरुडः । अनन्तः शेषः । रुद्रो मृडः । इन्द्रो देवेन्द्रः । एते पूर्वाः मुख्या येषां तेषु सुरेषु ॥ **तारतम्यं** उच्चनीचत्वं **आध्यायन्** जानानः । भक्तिं सन्धत्ते सम्यक्कुरुते ॥ **तं अस्मद्गुरुः** वायुः श्रीमुख्यप्राणः **स्फुटं** व्यक्तं **अवति** रक्षति । 'तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा' (म.भा.ता.नि.अ-१श्लो-८०) इत्ययमर्थोऽत्रावगन्तव्यः ॥ १५ ॥

## बालबोधिनी

गुरुदेवताभक्तेः सकलपुरुषार्थसाधनत्वादवश्यमनुष्ठेयत्वमुक्तम् । कथमनुष्ठानक्रमः, किं तस्य फलमित्यत आह– **विष्णोरिति** ॥ **यः** पुरुषः ॥ **अखिलगुणगणैः** अखिलाः समस्ता ये गुणाः स्वातन्त्र्यसार्वज्ञ्यादिशुभधर्मास्तेषां गणाः समूहास्तैः ॥ **विष्णोः** श्रीहरेरत्यन्तमुत्तमोऽत्युत्तमस्तस्य भावस्तत्त्वं तस्मात् । समाधिक-रहितत्वेनोत्तमत्वादित्यर्थः ॥ **श्रीधराभ्यां** लक्ष्मीभूम्याम् ॥ **आश्लिष्टे** आलिङ्गिते **तत्र** तस्मिन् विष्णौ **गरिष्ठाम्** अतिभूयसीं **भक्तिं सन्धत्ते** सम्यग् दधाति ॥ **अथ** अनन्तरम् **अमुं** श्रीविष्णुं प्रति । अत्र प्रतिशब्दोऽध्याहार्यः । अन्यथा 'कर्तृकर्मणोः कृति' (पा.सू.२.३.६५) इति षष्ठी प्राप्नोति । प्रतिशब्दयोगे तु– 'अभितः परितः समयानिकषाप्रतियोगेऽपि' (वा) इति षष्ठ्यपवादिका द्वितीयैव भवति ॥ **परिवारात्मना** परिवार एवात्मा स्वरूपं तेन ॥ **सेवकेषु** सेवां कुर्वाणेषु ॥ **विरिञ्चिश्वसनविहगपानन्तरुद्रेन्द्रपूर्वेषु** ॥ विरिञ्चिः ब्रह्मा, स च श्वसनो

---

५८. **'उपान्वध्याङ्वसः' (पा.सू.-१.४.४८) इति सूत्रस्य सम्बन्धिवार्तिकम् ।**

मुख्यवायुः, स च विहायसाऽऽकाशमार्गेण गच्छन्तीति विहगाः पक्षिणस्तान् पातीति विहगपो गरुडः, स च अनन्तः शेषः, स च रुद्रः इन्द्रः एते पूर्वे मुख्या येषां ते तथोक्तास्तेषु सुरेषु । तरतमस्योच्चनीचस्य भावः **तारतम्यं** तद् **आध्यायन्** जानानः सन् भक्तिं सम्यक् करोति । 'डुधाञ् धारणपोषणयोः' लट् । लक्ष्म्या भगवतोऽतिप्रियाया विरिञ्चवाय्वाद्यखिलभागवतेभ्यो नित्यमुक्तत्वादिमहावैलक्षण्या-द्भगवतोऽतिसामीप्यात्तदङ्कस्थतया श्रीधराभ्यामिति प्रस्तुतत्वाच्च परिवारवर्गेष्वनुक्तिः । तमेवं भक्तिपूर्वकं देवतातारतम्यमाध्यायन् तं विष्णूपासकं पुरुषमस्माकं गुरुरस्मद्गुरुर्वायुः श्रीमुख्यप्राणः **स्फुटं** व्यक्तम् **अवति** रक्षति । 'अव रक्षणे' लट् ॥ १५ ॥

## मन्दबोधिनी

कथमत्रभक्तेरनुष्ठानक्रमः? किं तस्य फलमित्यत आह– **विष्णोरिति** ॥ **अस्मद्गुरुः** वायुः श्रीमुख्यप्राणः **तं** पुरुषं **सदा** सर्वस्मिन् काले । **स्फुटं** व्यक्तं यथा भवति तथा । अवति रक्षति 'अव रक्षणे' इति धातोर्लट् । स्फुटमित्यनेन न तत्र सन्देहः कार्यः इत्युक्तं भवति । तं कम्? यः पुरुषः **अखिलगुणगणैः** ज्ञानानन्दाद्यखिलगुणगणैः ॥ **विष्णोरत्युत्तमत्वात्** निरवधिकसर्वोत्तमत्वात् ॥ **श्रीधराभ्यां** लक्ष्मीधरादेवीभ्यां **संश्लिष्टे** आलिङ्गिते **तत्र** विष्णौ **गरिष्ठां** सर्वोत्कृष्टाम् ॥ **भक्तिं सन्धत्ते** सम्यक् दधाति करोतीति यावत् । 'डुधाञ्धारणपोषणयोः' इत्यतो लडात्मनेपदं धत्ते दधाते दधते इति रूपाणि ॥ **अथे**त्यनन्तरं **अमुं** विष्णुं प्रति **परिवारात्मना** परिवाररूपेण **सेवकेषु** सेवाकुर्वाणेषु ॥ **विरिञ्चिश्वसन-विहगपानन्तरुद्रेन्द्रपूर्वेषु** ॥ विरिञ्चिः ब्रह्मा, च श्वसनः वायुः, विहगान् पातीति विहगपः गरुडः, अनन्तः शेषः, रुद्रः शिवः, इन्द्रः पुरन्दरः एते पूर्वे मुख्याः येषां ते तथोक्ताः तेषु कामादिषु ॥ **तारतम्यं** उच्चनीचत्वक्रमं **आध्यायन्** सम्यक् चिन्तयन् सन् तेषु **यः भक्तिं सन्धत्ते** तं **अवती**ति सम्बन्धः ॥ १५ ॥

# भावप्रदीपिका

एवमिष्टदेवतागुरुभक्त्योः सकलपुरुषार्थसाधनत्वादवश्यानुष्ठेयत्वं समर्थितम् । तत्र कथमनुष्ठानप्रकारः किं वानुष्ठानस्य फलमित्यतस्तदुभयं निरूपयन्नधिकारिणः समाश्वासयति– **विष्णोरिति** ॥ **यः अखिलगुणगणैः** सकलज्ञानानन्दादि-कल्याणगुणसमूहैः हेतुभिः । **विष्णोः अत्युत्तमत्वात्** समाधिकरहितत्वेन सर्वोत्कृष्टत्वात् । **श्रीधराभ्यां संश्लिष्टे** सम्यगालिङ्गिते वक्षःस्थलसंश्रिता श्रीः । धरति सर्वमिति धरा त्वत्परा ॥ **ताभ्यां** लक्ष्मीरूपाभ्याम् । संश्लिष्टे सम्यगा-लिङ्गिते । नित्यावियोगित्वात् **तत्र** तस्मिन् विष्णौ ॥ **गरिष्ठां** अतिमहतीम् ॥ **भक्तिं सन्धत्ते** सम्यक् धत्ते । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यात्मने-पदम् । अथ श्रीधरालिङ्गितभगवद्भक्त्यनुष्ठानानन्तरम् ॥ **अमुम्** ॥ प्रतीति शेषः । अन्यथा 'कर्तृकर्मणोः कृति' (पा.सू-२.३.६५) इति षष्ठी स्यात् । राज्ञः परिवारः इतिवत् । प्रतिशब्दयोगे तु 'अभितः परितः समया निकषा प्रतियोगेऽपि' (वा-७९८) इति षष्ठ्यपवादिका द्वितीयैव स्यात् । गोपा हरिं प्रति इति यथा । अमुष्य श्रीधरासंश्लिष्टस्य विष्णोः **परिवारात्मना** परिवारस्वरूपेण ॥ **सेवकेषु** सेवां कुर्वाणेषु ॥ **विरिञ्चिश्वसनविहगपानन्तरुद्रेन्द्रपूर्वेषु** ॥ विरिञ्चिः ब्रह्मा, श्वसनो वायुः । 'श्वसनः स्पर्शनो वायुः मातरिश्वा सदागतिः' इत्यमरः । विहायसा गच्छन्तीति विहगाः । 'अन्यत्रापि दृश्यते' (पा.सू-३.२.१०१) इति गमेर्डः । 'विहायसो विह' इति वाच्यम् । अस्य सूत्रस्य सम्बन्धि वार्तिकम्) विहगान् पक्षिणः पातीति विहगपो गरुडः । अनन्तः शेषः । रुद्रेन्द्रौ प्रसिद्धौ । एते एव पूर्वे येषां ते तथोक्तास्तेषु देवेषु ॥ **तारतम्यं** नीचोच्चभावम् ॥ **आध्यायन्** सम्यक् चिन्तयन् सन् एषु **एकभक्तिं** सन्धत्ते ॥ **तं अस्मद्गुरुः वायुः** ॥ **स्फुटं** निर्बाधं यथा भवति तथा ॥ **सदा** सर्वस्मिन् काले । 'सर्वस्य सोऽन्यतरस्याम्' (पा.सू.५.३.६) इति सर्वशब्दस्य सादेशः ॥ **अवति** रक्षतीति सम्बन्धः । 'अव रक्षणे' । तदुक्तम्– 'लक्ष्मीर्विरिञ्चिवाणीशगिरिजेन्द्राः गिरांपतिः । सूर्यादयश्च

क्रमशो भगवत्प्रीतिगोचराः । तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः । सर्वेऽपि गुरवश्चैव पुरुषस्य विशेषतः । तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम्' (अनु.व्या-३.४.२४६-२४८) इति । अथवा पदमपेक्षितमन्यदपि पदजात-मत्रावर्तनीयम् । तथा चाथ **विष्णोः परिवारात्मना सेवकेषु** ब्रह्मादिषु तारतम्यमाध्यायन् सन् तेषु देवेषु **अमुं** श्रीधराश्लिष्टं विष्णुं **सन्धत्ते** अनुसन्धत्ते । तेषु विष्ण्वनुसन्धानं करोतीत्यर्थ इति योज्यम् । शिष्टं पूर्ववद्व्याख्येयम् ।

यद्वा **श्रीधराभ्यां संश्लिष्टे तत्र** प्रसिद्धे हरौ **भक्तिं सन्धत्ते** ॥ तमित्युक्ते माहात्म्यपरमप्रियत्वादिज्ञानहेतुकस्नेहरूपायाः भक्तेः विषयसौन्दर्यादिनिबन्धनत्वात् । तदभावे सैव कुतस्स्यात् । इत्याशङ्कायां तत्परिहारार्थं तत्र हेतुत्वेनोक्तम् **अखिल-गुणगणैरत्युत्तमत्वादिति** ॥ 'हरिभक्तिक्रमेणैव तदीयेषु हरिस्मृतिः । हरिस्मृति-स्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम् । तत्पूजा विहितात्याग इति मुक्तः क्रमेण हि । नियमात्साधनान्येव नित्यसाध्यानि चाखिलैः' (अनु.व्या-३.४.१४९,१५०) इति वचनात् ।

यद्वा यः परिवारात्मना 'इत्थम्भूतलक्षणे तृतीया' (पा.सू-३.२.२१) क्रुद्धोल्कादिस्वरूपेण स्वयं स्वस्य परिवार इति तं स्वरूपपरिवारात्मना सन्तत**ममुं** विष्णुं **सन्धत्ते** ध्यायति । अथैषु देवेषु विष्णुं सन्धत्ते ध्यायति । शेषं पूर्ववत् । अथवा यः **तारतम्यमाध्यायन्** सन् **विष्णोः परिवारात्मना सेवकेषु भक्ति-मनुतिष्ठति तममुम्** अधिकारिणमिति वा । तथा चैवं हरिगुरुभक्त्यनुष्ठाने नानर्थ-प्राप्तिरिति तदर्थं निष्कम्पं प्रयतितव्यमिति भावः ॥ १५ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' (श्वेताश्वतरोपनिषत्.अ-६.मं-२३) इति श्रुत्यनुसारेण भगवत्परिवारेष्वपि तारतम्येन भक्तिः कर्तव्येति सूचयन्त-त्फलं निरूपयन् स्तौति– **विष्णोरत्युत्तमत्वादिति** ॥ हे **विष्णो** अखिलानां

गुणानामप्रधानानां रमाब्रह्मादीनां गणैस्तवात्युत्तमत्वात् । रत्युपलक्षितगुणजातविषये उत्तमत्वात्तत्र **श्रीधराभ्यां संश्लिष्टे** त्वयि **गरिष्ठां भक्तिं अथामुं** त्वां **परिवारात्मना सेवकेषु** विरिञ्चादिषु **तारतम्यमाध्यायन्**स्तदनुसारेण **भक्तिं यः सन्धत्ते** तमस्मद्गुरुर्वायुशब्दवाच्यो भगवान् स्फुटमवति । यद्वा अखिलैर्ज्ञानादिगुणगणैर्विष्णोः अत्युत्तमत्वात्तत्राथविरिञ्चादिषु च भक्तिं यः करोति तं वायुशब्दवाच्यं हरिः पातीति परोक्षस्तुतिरियम् ॥ १५ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– विष्णोरिति ॥** यः अखिलगुणगणैः विष्णोः अत्युत्तमत्वात् । श्रीधराभ्यां संश्लिष्टे तत्र गरिष्ठां भक्तिं सन्धत्ते । अथ यः अमुं प्रति परिवारात्मना सेवकेषु विरिञ्चश्वसनविहगपानन्तरुद्रेन्द्रपूर्वेषु च तारतम्यं आध्यायन् भक्तिं सन्धत्ते । तं अस्मद्गुरुर्वायुः स्फुटं सदा अवति ।

**विग्रहवाक्यानि– अत्युत्तमत्वात् ॥** अतिशयेनोत्तमः अत्युत्तमः । अत्युत्तमस्य भावः अत्युत्तमत्वं तस्मात् अत्युत्तमत्वात् । **अखिलगुणगणैः** अखिलाश्च ते गुणाश्च अखिलगुणाः । अखिलगुणानां गणाः अखिलगुणगणाः । तैः अखिलगुणगणैः ॥ **संश्लिष्टे** सम्यक् श्लिष्टः संश्लिष्टः । तस्मिन् संश्लिष्टे ॥ **श्रीधराभ्याम्** श्रीश्च धरा च श्रीधरे । ताभ्यां श्रीधराभ्याम् ॥ **सन्धत्ते**समित्युपसर्गः धत्ते 'डुधाञ् धारणपोषणयोः' लडात्मनेपदं प्रथमपुरुषैकवचनम् ॥ **विरिञ्चश्वसनविहगपानन्त-रुद्रेन्द्रपूर्वेषु ॥** विहगान् पाति इति विहगपः । विरिञ्चिश्च श्वसनश्च विहगपश्च अनन्तश्च रुद्रश्च इन्द्रश्च विरिञ्चश्वसनविहगपानन्तरुद्रेन्द्राः पूर्वे येषां ते विरिञ्चश्वसनविहगपानन्तरुद्रेन्द्रपूर्वाः । तेषु । विरिञ्चश्वसनविहगपानन्तरुन्द्रेन्द्र-पूर्वेषु ॥ **अवति** 'अव रक्षणे' इति लट् परस्मैपदम् प्रथमपुरुषैकवचनम् ॥ **अस्मद्गुरुः** अस्माकं गुरुः अस्मद्गुरुः ॥ १५ ॥

**तत्त्वज्ञान्मुक्तिभाजः सुखयसि हि गुरो योग्यतातारतम्या-**
**दाधत्से मिश्रबुद्धींस्त्रिदिवनिरयभूगोचरान्नित्यबद्धान् ।**
**तामिस्रान्धादिकाख्ये तमसि सुबहुलं दुःखयस्यन्यथाज्ञान्**
**विष्णोराज्ञाभिरित्थं श्रुतिशतमितिहासादि चाकर्णयामः ॥ १६ ॥**

## कविकर्णामृतम्

त्रिविधानां जीवसङ्घानां यथायोग्यं मोक्षस्वर्गनिरयान्धतमसानां प्रदाता त्वमिति विज्ञापयति– **तत्त्वज्ञानिति** ॥ **हे गुरो** ॥ **विष्णोराज्ञाभिः तत्त्वज्ञान्** सम्यग्ज्ञान-वतः **मुक्तिभाजः** कृत्वा । तत्रापि **योग्यतातारतम्यात्** तैत्तिरीयोपनिषदि 'भीषाऽ-स्मात्' (तै.उ.ब्रह्मवल्ली. मन्त्र-१६) इत्यनुवाके 'स एको मानुष आनन्दः' इत्यारभ्य 'स एको ब्रह्मण आनन्दः' (तै.उ.ब्रह्मवल्ली.मन्त्र१७-२६) इत्यन्तैरेकत्रिंशद्वाक्यैर्मुक्तानामपि यदानन्दतारतम्यमुक्तं तदनुसारेण । **सुखयसि** आनन्दयसि ॥ **मिश्रबुद्धीन्** मिश्रज्ञानिनः ॥ **नित्यबद्धान्** नित्यसंसारिणः ॥ **त्रिदिवनिरयभूगोचरान्** परिदृश्यमानान् ॥ **आधत्से** ॥ आङ्पूर्वात् 'डुधाञ् धारणपोषणयोः' इत्यस्माद्धातोर्लट् । स्वर्गनरकभूभागिनः करोषीत्यर्थः ॥ **अन्यथा-ज्ञान्** मिथ्याज्ञानिनः **तामिस्रान्धादिकाख्ये** तामिस्रमन्धतामिस्रमित्याद्यनेकाभि-धानवति ॥ **तमसि सुबहुलं** अत्यर्थम् ॥ **दुःखयसि** क्षुत्क्षामेत्यादिश्लोकोक्तप्रकारेण बाधसे इत्यर्थः ॥ **इत्थं** अनेन प्रकारेण । 'वायुना हि सर्वे लोका नेनीयन्ते' (बृ.उ.भा.उदाहृतश्रुतिः-५-६-१) इत्यादि श्रुतिशतम्,

'धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम् ।
त्वदायत्तमिदं सर्वं सर्वलोकस्य भारत' (म.भा.ता.नि.अ-२.श्लो-१६१)

इत्यादीतिहासः, आदिशब्देन पुराणधर्मशास्त्रादिकं च आकर्णयामः श्रुणुमः । यद्यपि–

'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा'
(म.भा.ता.नि.अ-१.श्लो-८३)

इति श्रीविष्णोरेव मोक्षादेर्दातृत्वम् । तथाऽपि 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' (म.भा.ता.नि.अ-१श्लो-७८) इति वायोरपि श्रीविष्णोराज्ञया मोक्षदातृत्वमस्तीत्यवगन्तव्यम् । अत्र तत्त्वज्ञानादयः प्रविभज्य प्रदर्श्यन्ते । नित्यास्तावदनन्ता जीवा देवमानुषासुरभेदेन त्रिविधाः । तेषां कर्माणि प्रकृतयश्चानन्ताः । तत्र देवा नित्यानन्दज्ञानबलतारतम्या मुक्तियोग्याश्च । मानुषास्तूत्तमादिभेदेन त्रिविधाः । तत्र मनुष्योत्तमा देवकल्पाः । मध्यमा नित्यसुखदुःखात्मकसंसृतियोग्याः । मनुष्याधमा नित्यनिरयाः । असुरा नित्यदुःखात्मकाः । एते प्रकृतिसम्बन्धोपाधिप्रयुक्तान्यथाभावाभावे आत्मयोग्येन विज्ञानेन निजरूप एवावतिष्ठन्ते । प्रपञ्चोऽपि सत्यः प्रवाहरूपेण नित्यः पञ्चभेदविशिष्ट इति । एतस्य चिदचिदात्मकप्रपञ्चस्योदयलयविभवानां निमित्तकारणभूतः सार्वज्ञसत्यसङ्कल्पत्वाद्यनेकोदारगुणः सर्वदा सर्वजीवादिभ्योऽत्यन्तभिन्नः सर्वदोषविवर्जितः परिपूर्णज्ञानानन्दाद्यनन्तकल्याणगुणमूर्तिर्भगवान् विष्णुरिति ये जानन्ति ते तत्त्वज्ञाः । ऐक्यावबोधकं तत्त्वमस्यादिवाक्यं सत्यम् । स्वाभाविकनित्यनिरतिशयापरिमितोदारगुणमपि ब्रह्मैव सुरवरनरतिर्यक्स्थावरनारकिस्वर्गापवर्गिचेतनेषु स्वभावतो विलक्षणमविलक्षणं च वियदादिनानाविधमलरूपपरिणामास्पदं चेति ये विजानन्ति ते मिश्रबुद्धयः । निर्विशेषज्ञानमात्रमेव ब्रह्म । तच्च नित्यमुक्तस्वप्रकाशस्वभावमप्यविद्यापरिणतं संसरति । तदतिरिक्तेश्वरेशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं जगन्मिथ्या । कश्चिद्बद्धः कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते । इतः पूर्वं केचिन्मुक्ता इत्ययमर्थोऽपि मिथ्या । एकमेव शरीरं सज्जीवम् निर्जीवानीतराणि स्वप्नदृष्टशरीरवत् । तच्छरीरं किमिति न व्यवस्थितम् । आचार्यो ज्ञानस्योपदेष्टा मिथ्या । शास्त्रं च मिथ्या । शास्त्रप्रमाता च मिथ्या । शास्त्रजज्ञानं च मिथ्या । एतत्सर्वं मिथ्याभूतेनैव

शास्त्रेणावगम्यत इति ये मन्यन्ते ते विवरणमतानुसारिणोऽन्यथाज्ञाः । अनाद्य-निर्वाच्यमिथ्यासमस्तोपाधिविधुरानन्तानन्दाद्वितीयचैतन्यैकरसात्मनाऽपहत-पाप्मत्वाद्यशेषोपनिषद्घोषितमध्यात्मतत्वं प्रादेशिकमनेकदुःखसङ्करोपप्लुतं कर्तृत्व-भोक्तृत्वाद्याकारविशेषास्पदं नानाविधमलरूपपरिणामास्पदं च दर्शयति जपा-कुसुममिव सन्निहितमलीकमेव लौहित्यं स्फटिकस्येति ये मन्यन्ते ते वाचस्पति-मतानुसारिणोऽन्यथाज्ञाः । एतद्दुर्मतखण्डनप्रकारस्त्वप्रकृतत्वात् स्तोत्रव्याख्याने न लिख्यते ॥ १६ ॥

## बालबोधिनी

त्रिविधानां जीवसङ्घानां यथायोग्यं मोक्षनिरयान्धतमसानां प्रदातृत्वं विज्ञापयति— **तत्त्वज्ञानिति ॥ हे गुरो विष्णोराज्ञाभिः ॥ तत्त्वज्ञान्** तत्त्वं परापरवस्तुस्वरूपं जानन्तीति तत्त्वज्ञास्तान् सज्जीवान् ॥ **मुक्तिभाजः** मुक्तिं भजन्तीति प्रप्नुवन्तीति मुक्तिभाजस्तान् कृत्वा । तत्रापि ॥ **योग्यतातारतम्यात्** योग्यतायाश्चेतन-स्वरूपभूतयोग्यतालक्षणधर्मस्य तारतम्यमानुगुण्यं तस्मात्तारतम्यानुसारेणेत्यर्थः ॥ **सुखयसि** आनन्दयसि 'सुखदुःखतत्क्रियायाम्' इति धातोर्लट् ॥ **मिश्रबुद्धीन्** मिश्रा बुद्धिर्येषां ते तथोक्तास्तान् ज्ञानाज्ञानमिलितमतीनित्यर्थः ॥ **नित्यबद्धान्** नित्यं बद्धा नित्यबद्धास्तान् नित्यसंसारिण इत्यर्थः ॥ **त्रिदिवनिरयभूगोचरान्** त्रिदिवः स्वर्गः स च निरयश्च भूश्च तासु गोचराः परिदृश्यमानास्तान् स्वर्गनरकभूलोकेषु पर्यायेण सर्वदा स्थायिन इत्यर्थः ॥ **आधत्से** करोषि 'डुधाञ् धारणपोषणयोः' लट् । अन्यथा वस्तुस्वरूपापेक्षया प्रकारान्तरेण जानन्तीत्यन्यथाज्ञास्तान् मिथ्याज्ञानिन इत्यर्थः ॥ **तामिस्रान्धादिकाख्ये** तामिस्रं च अन्धं च तामिस्रान्धे । ते आदी यासां तास्तथोक्तास्तामिस्रान्धादिका इत्याख्या नामानि यस्य तत्तथोक्तं तस्मिन् । तामिस्रमन्धं नित्यनरकोऽन्धतामिस्रमित्याद्यनेकाभिधानवतीत्यर्थः ।

यद्वा तामिस्रं चान्धमन्धमिति पदमादिकमन्धतामिस्रमित्यर्थः । तामि-स्रान्धादिके इत्याख्ये नामनी यस्य तत्तथोक्तं तस्मिन्निति वा ॥ **तमसि** नित्यनरके

सम्यक् बहुलमत्यन्तं यथा भवति तथा **सुबहुलं दुःखयसि** उत्तप्तेत्याद्युक्तप्रकारेण बाधयसे । 'सुखदुःखतत्क्रियायाम्' इत्यस्माल्लट् । इत्येवं प्रकारेण श्रुतीनां 'वायुना हि सर्वे लोका नेनीयन्ते' (बृ.उ.भा.अ-५,ब्रा-६, भाष्योदाहृतवचनम्) इत्यादि-श्रुतीनां शतं तत् । इतिहासो भारतमादिर्यस्य तदितिहासादि च । आदिशब्देन पुराणादिकं गृह्यते ॥ **आकर्णयामः** श्रुणुमः । 'कर्ण आकर्णने' लट् ॥ १६ ॥

## मन्दबोधिनी

त्रिविधानां जीवसङ्घानां स्वस्वयोग्यगतिप्रदस्त्वमेवेति विज्ञापयति– **तत्त्व-ज्ञानिति** ॥ हे गुरो मुख्यप्राण त्वं **विष्णोराज्ञाभिः** तत्त्वज्ञान् तत्त्वं जानन्तीति तत्वज्ञानिनः तान् मुक्तियोग्यान् ॥ **मुक्तिभाजः** मुक्तिं भजन्तीति मुक्तिभाजः तान् मुक्तिभागिनः कृत्वा **योग्यतातारतम्यात्** योग्यतातारतम्येन **सुखयसि** आनन्दयसि सुखयसीति नामधातोर्लट् परस्मैपदम् । एवं दुःखयसीत्यपि ॥ **हे गुरो मिश्रबुद्धीन्** मिश्रज्ञानिनः **नित्यबद्धान्** नित्यसंसारिणः **त्रिदिवनिरयभूगोचरान्** त्रिदिवश्च निरयश्च भूश्च त्रिदिवनिरयभुवः तासु गोचरान् विषयान् तत्र वर्तमानानित्यर्थः ॥ **आधत्से** करोषि । 'डुधाञ् धारणपोषणयोः' इत्यतोर्लडात्मनेपदं धत्से दधाथे दध्वे इति रूपाणि । हे गुरो **अन्यथाज्ञान्** अन्यथा जानन्तीति अन्यथाज्ञाः तान् मिथ्याज्ञानिनः तमोयोग्यान् ॥ **सुबहुलं** अत्यर्थं यथा भवति तथा **तमसि** नरकविशेषे **दुःखयसि** बाधयसि । कथम्भूते तमसि **तामिस्रान्धादिकाख्ये** अत्र अन्ध इति 'नामैकदेशे नामग्रहणं' अन्धगतजनानन्धयतीत्यन्धं अन्धतामिस्रं अन्धतामिस्त्रमित्यादिका आख्या यस्य तत् तथोक्तं तस्मिन् तामिस्रमन्धतामिस्र-मित्याद्यनेकनामवतीत्यर्थः । तामिस्रान्धाधिकाख्ये इति पाठे अन्धशब्दः अधिकः यस्मिन् तत् अन्धाधिकं अन्धतामिस्रमित्यर्थः । तामिस्रं अन्धाधिकमिति आख्या यस्य तत् तामिस्रान्धाधिकाख्यं तस्मिन् ॥ **इत्थं** अनेन प्रकारेण **श्रुतिशतं** 'वायुना हि सर्वे लोकाः नेनीयन्ते, प्राण एवेदं सर्वं, स एनान्ब्रह्म गमयति' (छां.उ-४.१५) इत्यादिश्रुतिशतं **इतिहासादि** 'धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम् ।

त्वय्यायत्तमिदं सर्वं सर्वलोकस्य भारत' (म.भा.ता.नि.अ-२,श्लो-१६१) इत्यादि इतिहासादि च **आकर्णयामः** भारते श्रुणुमः ।

यद्यपि 'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबधनान् मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा' (म.भा.ता.नि.अ-१.श्लो-८३) इति श्रीविष्णोरेव मोक्षादेदातृत्वमस्मि । तथापि 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इत्यादिप्रमाणात् वायोरपि श्रीविष्णोराज्ञया मोक्षादेर्दातृत्वमस्त्येवेति न काचिदनुपपत्तिरिति ॥१६॥

## भावप्रदीपिका

एवं हरिगुरुभक्तिस्वरूपं निरूप्य विक्षिप्य वर्णितं त्रिविधानां जीवसङ्घानां मोक्षादिदातृत्वमधिकारिणां बुद्ध्यारोहार्थं सङ्कलय्य विशेषतो विज्ञापयन् स्तौति– **तत्त्वज्ञानिति** ॥ हे गुरो त्वं तत्त्वज्ञान् स्वतन्त्रास्वतन्त्रवस्तुयथावत्स्वरूपज्ञान् ॥ **मुक्तिभाजो** मुक्तियोग्यान् जीवान् ॥ **योग्यतातारतम्यात्** 'सैषाऽनन्दस्य मीमांसा भवति' इत्यादिश्रुत्युक्तयोग्यतातरतमभावमनुसृत्येत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्या' इति पञ्चमी **सुखयसि** आनन्दयसि । सज्जनानां परापरतत्व-यथावत्स्वरूपोपदेशेन तत्त्वज्ञानमुत्पाद्य तेन मुक्तिं गमयित्वा तत्तद्योग्यतानुसारेणा-नन्दयसीत्यर्थः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च' (वा) 'सत्यापपाशरूप-वीणातूलश्लोकसेनालोमत्वच्वर्मवर्णचूर्णचुरादिभ्यो णिच्' (पा.सू-३.१.२५ अस्य सूत्रस्य सम्बन्धिवार्तिकमिदम्) इति णिच्' ॥ **मिश्रबुद्धीन्** याथार्थ्यायाथार्थ्य-सङ्कीर्णज्ञानान् **नित्यबद्धान्** नित्यसंसारिणः ॥ **त्रिदिवनिरयभूगोचरान्** स्वर्गनरकभूलोकेषु दृश्यमानान् ॥ **आधत्से** तत्रैव वर्तमानान् करोषीत्यर्थः । 'डु धाञ् धारणपोषणयोः' ॥ **अन्यथाज्ञान्** स्वरूपान्यप्रकारेणार्थान् जानन्तीति अन्यथाज्ञाः । तान् मिथ्याज्ञानिनः तमोयोग्यान् । अर्थशब्दस्य गम्यमानार्थत्वाद-प्रयोगः ॥ **तामिस्रान्धादिकाख्ये** तमिस्रा तमस्ततिः अस्मिन्नस्तीति तामिस्रम् । 'तमिस्रा तु तमस्ततिः' इत्यभिधानम् । तच्च तदन्धं च । स्वगतजनान्धीकरणात् । तामिस्रान्धमित्यादिका कुत्सिता आख्या नाम यस्य तत् तथोक्तं तस्मिन् । 'कुत्सित' इति कप्रत्ययः ।

यद्वा तामिस्रं च अन्धं च तामिस्रान्धे इत्यधिके जुगुप्सिता उत्कृष्टा आख्या यस्येति वा । ताम्यते जना यस्मिन्निति वा तमः तस्मिन् । तन्नामकनरकविशेषे । 'तमु ग्लानौ' इत्यस्मादसुन्प्रत्ययः । सुबहुलं यथा स्यात्तथा दुःखयसि । उक्तार्थे प्रसिद्ध्यर्थो हिशब्दः । तर्हि 'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् । मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा' (म.भा.ता.नि-१.८३) । इत्यादिप्रमाण-विरोध इत्यत उक्तम् ॥ **विष्णोराज्ञाभिरिति** ॥ प्रधानपुरुषैरनेकशः 'प्रभोराज्ञा-मन्तरेण न प्रजाः शिक्षणीया' इति न्यायात्, आज्ञा त्रैविध्याद्वा बहुवचनम् । अत्र किं प्रमाणमित्यत उक्तं वयं इत्थं अनेन प्रकारेण ॥ **श्रुतिशतम्** ॥ 'वायुना हि सर्वे लोका नेनीयन्ते वायुना वै गौतमसूत्रेण' । अयं च लोकः परश्च लोकः सर्वाणि च भूतानि' (ब्र.सू.भा.उ.प्रमाणवचनम्) 'वायुर्भीमो भीमनादो महौजाः' (म.भा.ता.नि. अ-२, श्लो-१५८) । 'धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम् । 'त्वय्यायत्तमिदं सर्वं सर्वलोकस्य भारत' (म.भा.ता.नि.अ-२,श्लो-१६१) इत्यादि इतिहासपुराणादिकं च **आकर्णयामः** सम्यक् श्रुणुमः । नन्वेवं चेत् श्रुत्यादिप्रमाणं तर्हि कथमन्येऽन्यथा मन्यन्ते इत्यत उक्तं **वयमाकर्णयाम** इति । अधिकारिणामेव वस्तुतत्वप्रतीतिः नान्येषामिति भावः ।। १६ ।।

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

येऽमुं भावं इत्यादिनोक्तार्थं क्रोढीकृत्य स्तौति– **तत्त्वज्ञानिति** ॥ हे र रतिरूप विष्णो मुक्तिभाजो मुक्तियोग्यानधिकारिणः ॥ **आज्ञाभिः** आज्ञारूपाभिः श्रुति-स्मृतिभिस्तत्वज्ञान् परोक्षज्ञानिनः कृत्वा 'श्रुतिस्मृतिहरेराज्ञे' इति वचनात् । अनन्तरं च तत्त्वज्ञानपरोक्षज्ञानिनः एव कृत्वा मुक्तिभाजो मुक्तिप्राप्तान्विधाय सुबहुलं योग्यतातारतम्यात्सुखयसि नित्यसंसारिणस्तु मिश्रबुद्धीन् कृत्वा त्रिदिव निरयभूगोचरानाधत्से । अन्यथाज्ञान् मिथ्याज्ञानिनस्तमोयोग्यांश्च तामिस्रमन्धाधिक-तामिस्रमन्धतामिस्रामिति यावत् । तदुभयाख्ये तमसि सुबहुलं दुःखयसि । इत्थं 'शृण्वे वीर उग्रम्' (ऋ.वे.सं.मं-६, सू-४७, मन्त्र-१६) इत्यादिश्रुतिशतमिति-हासादि च वयमाकर्णयामः ।। १६ ।।

## श्रीनिवासतीर्थीया

**अन्वयः– तत्त्वज्ञानिति** ।। हे गुरो, त्वं विष्णोः आज्ञाभिः तत्त्वज्ञान् मुक्तिभाजः कृत्वा योग्यतातारतम्यात् सुखयसि हि । मिश्रबुद्धीन् नित्यबद्धान् कृत्वा त्रिदिवनिरयभूगोचरान् आधत्से । अन्यथाज्ञान् तामिस्रान्धाधिकाख्ये तमसि सुबहुलं दुःखयसि । इत्थं वयं श्रुतिशतं इतिहासादि च आकर्णयामः ।

**विग्रहवाक्यानि– तत्त्वज्ञान्** ।। तत्त्वं जानन्ति इति तत्त्वज्ञाः । तान् तत्त्वज्ञान् ।। **मुक्तिभाजः** मुक्तिं भजन्त इति मुक्तिभाजः । **सुखयसि** 'सुख' धातुः लट् परस्मैपदि मध्यमपुरुषैकवचनम् ।। **अन्यथाज्ञान्** अन्यथा जानन्ति इति अन्यथाज्ञाः । तान् ।। **योग्यतातारतम्यात्** तरतमस्य भावस्तारतम्यम् । योग्यतायाः तारतम्यम् योग्यतातारतम्यम् । तस्मात् योग्यतातारतम्यात् ।। **आधत्से** आ इत्युपसर्गः धत्से 'डु धाञ् धारणपोषणयोः' लडात्मनेपदं मध्यमपुरुषैकवचनम् ।। **मिश्रबुद्धीन्** मिश्रा बुद्धिः येषान्ते मिश्रुबुद्धयः तान् ।। **त्रिदिवनिरयभूगोचरान्** त्रिदिवं च निरयं च भूश्च त्रिदिवनिरयभुवः । त्रिदिवनिरयभुवां गोचराः । तान् ।। **नित्यबद्धान्** नित्यं बद्धाः नित्यबद्धाः तान् ।। **तामिस्रान्धाधिकाख्ये** तामिस्रमिति अन्धाधिकमिति आख्या यस्य तत् तामिस्रान्धाधिकाख्यम् । तस्मिन् । **अत्यन्तं** बहुलं सुबहुलम् ।। **दुःखयसि** 'दुःखधातुः' लट् परस्मैपद मध्यमपुरुषैकवचनम् ।। **श्रुतिशतं** श्रुतीनां शतम् । तत् श्रुतिशतम् ।। **इतिहासादि** इतिहासः एव आदिर्यस्य तत् इतिहासादि तत् इतिहासादि ।। **आकर्णयामः** आङ् इत्युपसर्गः 'कर्ण आकर्णने' । धातूनामनेकार्थत्वात् श्रुणुम इत्यर्थः । लट् परस्मैपदं उत्तम-पुरुषबहुवचनान्तः ।। १६ ।।

**वन्देऽहं तं हनूमानिति महितमहापौरुषो बाहुशाली**
**ख्यातस्तेऽग्र्योऽवतारः सहित इह बहु ब्रह्मचर्यादिधर्मैः ।**
**सस्नेहानां सहस्वानहरहरहितं निर्दहन्देहभाजा-**
**मंहोमोहापहो यः स्पृहयति महतीं भक्तिमद्यापि रामे ।। १७ ।।**

## कविकर्णामृतम्

इतः परं पञ्चश्लोक्या वायोरादिमे हनुमदवतारेऽद्भुतव्यापारान् वर्णयति–
**वन्देऽहमिति** ॥ **हे श्रीवायो** ॥ **महितमहापौरुषः** महितं सम्भावितं महापौरुषं महापुरुषकर्म यस्य सः ॥ **बाहुशाली** बाहुभ्यां शालते शोभत इति बाहुशाली । अतिशयबाहुबलपराक्रम इत्यर्थः । बहुभिः, **ब्रह्मचर्यादिधर्मैः** ब्रह्मचर्यं आदिर्येषाम्, आदिशब्देन सत्यादीनां ग्रहणम्, तैः धर्मैः सहितः समेतः ॥ **सस्नेहानाम्** स्नेहो भक्तिः तेन सह वर्तन्ते ये तेषां भक्तिमताम् ॥ **देहभाजां** प्राणिनाम् । **अहितं** अनिष्टम्, **अहरहः** प्रतिदिनम् । 'नित्यवीप्सयोः' (पा.सू.८.२.४)[५९] इति द्विर्वचनम् ॥ **निर्दहन्** भस्मीकुर्वन् ॥ **अंहः** दुरितम् । 'अंहो दुरितदुष्कृतम्' इत्यमरः ॥ **मोहः** अज्ञानम् । तावपहन्याद् यः स तथोक्तः । 'आशिषि हनः' (पा.सू.३.२.४९) इति हन्तेर्डप्रत्ययः सहोबलमस्यास्तीति **सहस्वान्** । 'सहो बलं सहा मार्गः' इत्यमरः ॥ **अग्र्यः** आदिमः । **हनूमानिति ख्यातः** प्रसिद्धः । हनुर्ज्ञानम् । तदस्यास्तीति हनुमान्[६०] । तदुक्तं भाववृत्ते–

'हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि'[६१] इति ।

(ऐ.उ.भाष्योदाहृतवचनम्) **ते** तव यः **अवतारः** प्रादुर्भावः ॥ **अद्यापि इह** अस्मिन् भूलोके ॥ **रामे** रघुपतौ ॥ **महतीं** समाधिकरहितां **भक्तिं स्पृहयति**

५९. वीप्सा नाम व्याप्तिः । यतो हि वि आप्लृ (व्याप्तौ) इत्यस्मात् सन्, 'धातोः ईत्' इत्यनेन ईति वीप्सा इति रूपसिद्धिः । अनया वीप्सया पदस्य द्विर्भावं (द्वित्वं) भवति । उदाहरणं–वृक्षं वृक्षं सिञ्चति । अत्र न केवलमेकवृक्षस्य जलसिञ्चनम् अपि तु ये ये वृक्षास्सन्ति तेषां सर्वेषां वृक्षाणां जलं सेचनीयम् इति यथा तथा अत्रापि अहरहः इत्यनेन न केवलमेकस्मिन् दिने किन्तु सर्वदा इति फलितोऽर्थः ।

६०. स एव हनूमान् । ज्ञानाधिक्यद्योतनाय दैर्घ्यम् ।

६१. भाववृत्त इति ग्रन्थे बलित्थासूक्तवचनस्य एवं व्याख्यानं कृतमिति ऐतरेयोपनिषद्भाष्यस्य अन्तिमभागे आचार्यैः उदाहृतमिदमिति ज्ञातव्यम् ।

इच्छति । इदानीमपि किम्पुरुषखण्डे श्रीरघुपतिभक्त्या भजत इति भावः । भक्तिशब्दस्य 'स्पृहेरीप्सितः' (पा.सू.१.४.३६) इति सम्प्रदानसंज्ञा न भवति । ईप्सिततम इति विवक्षायां 'कर्तुरीप्सिततमं कर्म' (पा.सू.१.४.४९) इति कर्मसंज्ञया बाधितत्वात् । तं अवतारं अहं **वन्दे** स्तौमि नमामि च ॥ १७ ॥

## बालबोधिनी

इतःपरं पञ्चभिः श्लोकैर्वायोः प्रथमावतारस्य हनूमतोऽत्यद्भुतव्यापारान् वर्णयति– **वन्देऽहमिति** ॥ हे श्रीवायो ॥ **महितमहापौरुषः** महितं पूजितं, महापौरुषं महापराक्रमो यस्य स तथोक्तः । बाहुभ्यां शालते शोभत इति **बाहुशाली** बाहुबलवानित्यर्थः । ब्रह्मचर्यं समस्तेन्द्रियनिग्रह आदिर्येषां ते तथोक्तास्ते च ते धर्माश्च तैः **सहितः** समेतः । स्नेहेन भक्त्या सह वर्तन्त इति सस्नेहास्तेषां भक्तिमतामित्यर्थः । देहं भजन्तीति देहभाजस्तेषां प्राणिनाम् **अहितम्** अनिष्टं तत् ॥ **अहरहः** प्रतिदिनं 'नित्यवीप्सयोः' इति द्विर्वचनम् ॥ **निर्दहन्** भस्मीकुर्वन् । अंहो दुरितं तच्च मोहो मिथ्याज्ञानं स च तावपहन्तीति तथोक्तः । 'आशिषि हनः' (पा.सू.३.२.४९) इति हन्तेर्डप्रत्ययः । सहो बलमस्यास्तीति **सहस्वान्** ॥ 'सहो बलं सहामर्षः' इत्यमरः । अग्रे भवोऽग्र्य आदिम इत्यर्थः । हनुर्ज्ञानमस्यास्तीति **हनूमान्** 'हनुशब्दो ज्ञानवाची हनूमान्मतिशब्दितः' (ऐ.भा.३.२. अन्तिमभागे) इत्युक्तेः । **इत्येवं ख्यातः** प्रसिद्धः **ते** तव **अवतारः** प्रादुर्भावः ॥ **अद्यापि** इदानीमपि **इह** अस्मिन् भूलोके ॥ **रामे महतीं** समाधिकरहितां **भक्तिं स्पृहयति** इच्छति 'स्पृह इच्छायां' लट् । इदानीमपि किम्पुरुषखण्डे श्रीरामं भजत इति भावः । 'स्पृहेरीप्सितः' इति सूत्रे ईप्सितमात्रस्य सम्प्रदानसंज्ञा । तदविवक्षायां तु परत्वात्कर्मसंज्ञैवेति वैय्याकरणसिद्धान्तात् सम्प्रदानाविवक्षया कर्मविवक्षया द्वितीयोपपत्तिः । भक्तिशब्दस्य 'स्पृहेरीप्सितः' (पा.सू-१.४.३६) इति सम्प्रदानसञ्ज्ञा न भवति । ईप्सिततम इति विवक्षायां 'कर्तुरीप्सिततमं कर्म' (पा.सू-१.४.४९) इति कर्मसञ्ज्ञाया बाधितत्वात् ॥ **अहं तम**वतारं **वन्दे** स्तौमि नमामि च ॥ १७ ॥

## मन्दबोधिनी

इदानीं वायोरादिहनुमदवतारे अद्भुतव्यापारान्वर्णयति **वन्दे हन्तमित्यादि** पञ्चश्लोकैः । हे वायो **अहं तं** त्वां **वन्दे** स्तौमि 'वदि अभिवादनस्तुत्योः' इति धातोः लडात्मनेपदं वन्दे वन्दावहे वन्दामहे इति रूपाणि । कं **तं** यः **ते** तव **इह** जगति **हनुमानिति ख्यातः** प्रसिद्धः **अग्र्यः** प्राथमिको **अवतारः** हनुः ज्ञानमस्यास्तीति हनुमान् हनुशब्दो ज्ञानवाचीति वचनात् । कीदृशोऽवतारः **महितमहापौरुषः** महितं अखिलैः पूजितं महापौरुषं समुद्रतरणादिमहापराक्रमः यस्य सः तथोक्तः । पुनः कीदृशः **बाहुशाली** बाहुभ्यां शालते शोभत इति बाहुशाली आजानुबाहुरित्यर्थः । पुनः कीदृशः **बहुब्रह्मचर्यादिधर्मैः** ब्रह्मचर्यं जितेन्द्रियत्वं तत् आदि येषां ते ब्रह्मचर्यादयः । ते च ते धर्माश्च बहवश्च ते ब्रह्मचर्यादिधर्माश्च तैः सहितः समेतः । आदिशब्देन वैराग्यादीनां ग्रहणम् । पुनः कीदृशः **सस्नेहानां** भक्तिसहितानां **देहभाजां** देहं भजन्तीति देहभाजः तेषां शरीरिणां **अहरहः** प्रतिदिनं **अहितं** अनिष्टं **निर्दहन्** नितरां भस्मीकुर्वन् । पुनः कीदृशः सहः बलं अस्यास्तीति सहस्वान् महाबलवानित्यर्थः । अत एव बलदेवतेति नाम सुप्रसिद्धं 'सहो बले ज्योतिषि मार्गशीर्षः' इत्यभिधानम् । अथवा । **सहस्वान्** सहनशक्तिमानित्यर्थः । पुनः कीदृशः **अंहोमोहापहः** अंहो दुष्कृतं च । 'अंहो दुरितदुष्कृतम्' इत्यमरः । मोहः मुह्यते अनेनेति मोहः अज्ञानं च तौ अपहन्तीति निवर्तयतीति तथोक्तः । **यः** हनुमान् **अद्यापि** इदानीमपि **रामे** श्रीरामदेवे । महतीं अविच्छिन्नप्रवाहां सर्वसाधनोत्तमां वा ॥ **भक्तिं स्पृहयति** इच्छति । 'स्पृह इच्छायाम्' इति धातोर्लट् स्पृहयति स्पृहयतः स्पृहयन्ति इति रूपाणि ॥ **अद्यापि** किम्पुरुषखण्डसन्निहितं श्रीराघवं भक्त्या निरन्तरं पूजयतीति शेषः **वन्दे** इत्यनुषङ्गः ॥ १७ ॥

## भावप्रदीपिका

एवं विष्ण्वाज्ञया जगत्समीरणस्य सकलजीवनियामकत्वलक्षणमहत्वं निरूप्य तदवतारस्तवनमुखेन विशेषतो विज्ञापयितुकामो मुख्यप्राणमिमं हनुमदव-

ताराद्भुततमव्यापारानितः पञ्चश्लोक्या वर्णयति– **वन्देऽहमिति** ॥ हे वायो **अहं तं वन्दे** ॥ स्तौमि नमामि चेत्यन्वयः । 'वदि अभिवादनस्तुत्योः' ॥ **यः ते** तव ॥ **इह** जगति । श्रुत्यादिप्रमाणे वा । हनुः उत्कृष्टं ज्ञानमस्यास्तीति **हनूमान्** ॥ इति **ख्यातः** प्रसिद्धः । अतो नात्राविद्यमानस्तुतित्वशङ्का कार्येति भावः । गत्यर्थनां ज्ञानार्थत्वेन हनशब्दो ज्ञानवाची । तृतीयोऽतिशये इति दीर्घः ऊकारः अतिशयार्थः । 'हनुशब्दो ज्ञानवाची हनूमान् मतिशब्दितः । रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' (ऐ.उ.भाष्योदाहृतभाववृत्तवचनम्) इति निर्वचनात् ॥ **महितमहापौरुषः** महितं पूजितम् । महत् गुरु । पौरुषं पराक्रमः । क्रियाः यस्य स तथोक्तः । 'पुम्भावे तत्क्रियायां च पौरुषं विषमप्सु च' इत्यमरः । बाहुभ्यां शालते शोभते तच्छीलः । नास्य वैरिहननार्थं साधनान्तरापेक्षा इति भावः ॥ **बहुब्रह्मचर्यादिधर्मैः सहितः** ॥ धरतीति धरः । विष्णुः सर्वाधारकत्वात् । स मीयत ज्ञायते यैस्ते धर्माः सदाचाराः । ब्रह्मचर्यं जितेन्द्रियत्वादिः आदिः येषां ते ब्रह्मचर्यादयः । ते च ते धर्माश्च बहवश्च ते ब्रह्मचर्यादिधर्माश्च तैर्युक्तः । वृत्ताध्ययनसम्पत्तिब्रह्मचर्यमुदाहृतमिति इति । सहो बलमस्यास्तीति **सहस्वान्** ॥ 'सहो बलं सहोऽमात्यः' इत्यमरः ॥ **सस्नेहानां** भक्तिमताम् ॥ **देहभाजां** शरीरिणाम् ॥ **अहितं** अनिष्टम् ॥ **निर्दहन्** भस्मीकुर्वन् । अंहः दुष्कृतम् । 'अंहो दुरितदुष्कृतम्' इत्यमरः । मुह्यतेऽनेनेति मोहः अज्ञानम् । तदुभयं अपहन्ति निवर्तयतीति **अंहोमोहापहः** । 'आशिषि हनः' (पा.सू-३.२.४९) इति हन्तेः डप्रत्ययः ॥ **अग्र्यः** ॥ अधिकारिवर्गोत्तमः प्रथमोऽवा ॥ **अवतारः** ॥ इहेति पदमत्रापि सम्बद्ध्यते ॥ **इह** अस्मिन् लोके । किंपुरुषखण्ड इत्यर्थः ॥ **अद्यापि** इदानीमपि ॥ **रामे** रमते क्रीडते रमयति क्रीडयति इति वा रामः । 'रमन्ते योगिनो यस्मिन्नित्यानन्दचिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयत' इति रुद्रवचनात् ।

यद्वा रमानित्यावियोगित्वाद्रामः । यथाह हारीतः 'रमया नित्ययुक्तत्वाद्राम इत्येव गीयते । श्रियोऽभिरामकत्वाच्च श्रीराम इति कीर्त्यत' इति । अथवा रमते

रमयतीति रः । रमु क्रीडायाम् इत्यस्मादौणादिको डप्रत्ययः । न विद्यते मा मितिः परिमितिर्यस्यासौ अमः । रश्चासौ अमश्चेति रामः । आनन्दरूपो निष्परिमाण एव लोकश्चैतस्माद्रमते तेन राम इति श्रुतेः । तस्मिन् रामे । सीतापतौ ॥ **महतीम्** अविच्छिन्नप्रवाहां सर्वसाधारणोत्तमां वा भक्तिं **अहरहः** प्रतिदिनम् । वीप्साया-मव्ययीभावः ॥ **स्पृहयति** ॥ अभिलषति । किंपुरुषखण्डे भगवन्तमादिपुरुष-मित्यादिश्रीमद्भागवतप्रसिद्धेरिति भावः । अत्र भक्तेर्भगवत्प्रसादसाधनत्वेनोप-सर्जनत्वविवक्षया 'स्पृहेरीप्सितः' (पा.सू-१.४.३६) इति सम्प्रदानसंज्ञा न भवति । पुष्पेभ्यो वने स्पृहयतीति यथा । श्रवणादिषु साधनेषु भक्तेः प्राधान्यं द्योतयितुं उत्तमत्वविवक्षया(इष्टतमत्वविवक्षया) 'विप्रतिषेधे परं कार्यं' (पा.सू-१.४.२) इति सूत्रे परशब्दस्येष्टवाचित्वेनापि व्याख्यातत्वाद्वा । 'कर्तुरीप्सिततमं कर्म' (पा.सू-१.४.४९) इति कर्मसंज्ञायां द्वितीया इति बोद्धव्यम् ॥ १७ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इतः परं पञ्चश्लोका हनुमत्परा इव तदुपास्यरामपरा अपि । तत्राद्ये रामस्य वायुप्रथमावतारहनुमत्सेव्यत्वात् प्राथम्यं विवक्षित्वा स्तुवंस्तं प्रणमति– **वन्दे इति** ॥ हे विष्णो यस्ते अग्र्यः प्रथमो रामाख्योऽवतारो हनूमान् ज्ञानपूर्णः । हनुशब्दो ज्ञानवाची । भूमार्थे मतुप् ॥ **महितमहापौरुषः, बाहुशाली बहुब्रह्मचर्यादिधर्मैः सहितः सहस्वान्** सहनशक्तिमान् **सस्नेहानां** देहभाजां भक्तजनाना**महितम् अहरहः निर्दहन् अंहो मोहापहः** पापमोहावपहन्तीति ॥ **रामे** रमणरूपे मुक्तियोग्यजने **महतीं भक्तिमेव स्पृहयति** भक्त्येकलभ्य इति यावत् । 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्' (म.भा.ता.नि.अ-१.श्लो-११६) इत्युक्तेः । इति एवं प्रकारेण **इह** जगति **अद्यापि** न केवलं प्राक् **तमहं** रामावतारं **वन्दे** इत्यन्वयः । यद्वा **यस्तेऽवतारो** महितमहापुरुषादिरिति ख्यातो यस्मिंश्च **रामे सस्नेहानां** भक्तिमताम**ग्र्यो**ऽपि **हनूमानद्यापि महतीं भक्तिं स्पृहयति तमहं वन्दे** इति । अधिकं तु गुरुप्रकाशिकायाम् ॥ १७ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– वन्देऽहं तमिति ।।** हे वायो महितमहापौरुषः बाहुशाली बहुब्रह्मचर्यादिधर्मैः सहितः सहस्वान् सस्नेहानां देहभाजां अहरहः अहितं निर्दहन् अंहोमोहापहः हनुमानितिख्यातः यस्ते अग्र्योऽवतारः इह स्थितः सन् अद्यापि रामे महतीं भक्तिं स्पृहयति तमवतारम् अहं वन्दे ।

**विग्रहवाक्यानि– वन्दे** 'वदि अभिवादनस्तुत्योः' लडात्मनेपदि उत्तमपुरुषैकवचनम् ।। **महितमहापौरुषः** महच्च तत् पौरुषं च महापौरुषं महितं महापौरुषं यस्य सः । महितमहापौरुषः ।। **बाहुशाली** बाहुभ्यां शालत इति बाहुशाली ।। **ब्रह्मचर्यादिधर्मैः** ब्रह्मचर्यमेवादिर्येषां ते ब्रह्मचर्यादयः । ब्रह्मचर्यादयश्च ते धर्माश्च ब्रह्मचर्यादिधर्माः । बहवश्च ते ब्रह्मचर्यादिधर्माश्च बहुब्रह्मचर्यादिधर्माः । तैः ।। **सस्नेहानाम्** स्नेहेन सहिताः सस्नेहाः तेषां सस्नेहानाम् ।। **अहितम्** न हितं अहितम् । तत् अहितम् ।। **देहभाजां** देहं भजन्त इति देहभाजः । तेषां देहभाजाम् ।। **अंहोमोहापहः** अंहश्च मोहश्च अंहोमोहौ । अंहोमोहौ अपहन्तीति अंहोमोहापहः ।। **स्पृहयति** 'स्पृह इच्छायां' लट् परस्मैपदं प्रथमपुरुषैकवचनम् ।। १७ ।।

**प्राक् पञ्चाशत्सहस्रैर्व्यवहितममितं योजनैः पर्वतं त्वं**
**यावत्सञ्जीवनाद्यौषधनिधिमधिकप्राणलङ्कामनैषीः ।**
**अद्राक्षीदुत्पतन्तं तत उत गिरिमुत्पाटयन्तं गृहीत्वाऽऽ**
**यान्तं खे राघवाङ्घ्रौ प्रणतमपि तदैकक्षणे त्वां हि लोकः ।। १८ ।।**

## कविकर्णामृतम्

व्यापारान्तरं विज्ञापयति– **प्राक् पञ्चाशदिति ।। हे अधिकप्राण** अधिकबल । त्वं **यावत्** यदा **प्राक्** पूर्वम् ।। **पञ्चाशत्सहस्रैः**, पञ्चाशत्सङ्ख्याकैः सहस्रैः **योजनैः व्यवहितं** अन्तरितम् ।। **अमितं** कीदृशोऽयं कुत्र वर्तत इति पूर्वमविज्ञातरूपम् ।

सञ्जीवनं मृतसञ्जीवनं आदिर्येषां तेषामौषधानां[६२] निधिं स्थानं **पर्वतं लङ्कां** प्रति **अनैषीः** आनीतवानसि । 'णीञ् प्रापण' इत्यस्माल्लुङि 'सिचिवृद्धिः' (पा.सू-७.२.१) इत्यादिना वृद्धिः । तदा **लोकः** जनः । 'लोकस्तु भुवने जने' इत्यमरः ॥ **एकक्षणे** क्षणाख्यकाले । क्षणस्वरूपमुच्यते यस्य सांशत्वेऽप्यवयव-विभागः परस्परं न क्रियते स परमाण्वाख्यः कालः । एवम्भूतेन परमाणुद्वयेनाणु-काल उच्यते । द्व्यणुककालत्रयेण त्रसरेणुकालः । त्रसरेणुत्रयेण त्रुटिकालः । त्रुटिकालत्रयेण वेधाख्यकालः । त्रिभिर्वेधैर्लवाख्यकालः । त्रिभिर्लवैर्निमेषः । निमेषत्रयेण यः कालो भवति स क्षण इति । ततः तस्याः लङ्कायाः ॥ **उत्पतन्तं** उत्प्लवमानम् । उत अनन्तरम् । अव्ययानामनेकार्थत्वात् । तं गिरिं **उत्पाटयन्तं** उन्मूलयन्तम् । अनन्तरं गिरिं गृहीत्वा **आयान्तम्** आगच्छन्तम् । अनन्तरं **खे** आकाशे । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । **राघवाङ्घ्रौ** रघुपतिपदाब्जे प्रणतमपि प्रणामं चाऽऽरभमाणम् । 'आदिकर्मणि क्तः कर्तरि च' (पा.सू-३.४.७१) इति क्तः । त्वां **अद्राक्षीत्** आलोकितवान् । 'दृशिर् प्रेक्षणे' इत्यास्माल्लुङ् । 'सृजिदृशोर्झल्यमकिति' (पा.सू-६.१.५८) इत्यमागमः । एकस्मिन् क्षणे लङ्का-प्रदेशात्पञ्चाशत्सहस्रयोजनमार्गगमनं पर्वतोत्पाटनं तं गृहीत्वा तावन्मार्गप्रत्यागमनं तत्पादपङ्कजप्रणाम (इति) एवम्भूतो व्यापारोऽन्यैरनेककालकर्तव्योऽपि त्वयैकस्मिन् क्षणे कृतः । अहो ते महिमार्णवाणुरपि स्तोतॄणामवाङ्मनसगोचर इति भावः ॥ १८ ॥

## बालबोधिनी

व्यापारान्तरं विज्ञापयति– **प्रागिति** ॥ अधिकः प्राणो बलं यस्य तथा तत्सम्बुद्धिः । हे हनूमन् त्वं यावद्यदा **प्राक्** पूर्वं पञ्चाशच्च तानि सहस्राणि च तैः पञ्चाशत्सङ्ख्याकसहस्रैरित्यर्थः । **योजनैर्व्यवहितम्** अन्तरितम् **अमितम्** अज्ञातम् । कीदृशोऽयं कुत्र वर्तत इति पूर्वमविज्ञातस्वरूपमित्यर्थः । सञ्जीवनं

---

६२. **तेषामोषधीनाम् इत्यपि पाठः ।**

मृतसञ्जीवनं तदादिर्येषां सन्धानकरणीविशल्यकरण्यादीनां तानि सञ्जीवनादीनि तानि च तान्यौषधानि च तेषां निधिः स्थानभूतस्तं गन्धमादनपर्वतं **लङ्कां** प्रति **अनैषीः** आनीतवानसि । 'णीञ् प्रापणे' लुङ् । तदा **लोको** जनः । एकश्चासौ क्षणश्चैक-क्षणस्तस्मिन् । क्षणकालो नाम यस्य सांशत्वेऽप्यवयवविभागः परस्परं न क्रियते स परमाण्वाख्यः कालस्त्रसरेणुत्रयेण त्रुटिकालस्तत्त्रयेण वेधाख्यः कालस्त्रिभि-र्वेधैर्लवाख्यः कालस्त्रिभिर्लवैर्निमेषो निमेषत्रयेण यः कालो भवति स क्षण इत्युच्यते ॥ **ततो** लङ्काया **उत्पतन्तमुद्गच्छन्तम्** **उत**ानन्तरं तं गिरि**मुत्पाटयन्त-मुन्मूलयन्त**मनन्तरं च गिरिं गृहीत्**वायान्तं** लङ्कां प्रत्यागच्छन्तमनन्तरं **खे** आकाशे 'अनन्तं सुरवर्त्म खम्' इत्यमरः ॥ **राघवाङ्घ्रौ** श्रीरामपादे **प्रणतमपि** प्रणामं चारभमाणमपि 'आदिकर्मणि क्तः कर्तरि च' (पा.सू-३.४.७१) इति क्तः ॥ **त्वामद्राक्षीत्** आलोकितवान् । 'दृशिर् प्रेक्षणे' लुङ् ॥ १८ ॥

## मन्दबोधिनी

अनन्यसाध्यव्यापारान्तरं विज्ञापयति– **प्राक् पञ्चाशदिति** ॥ अधिकश्चासौ प्राणश्च अधिकप्राणः तस्य सम्बुद्धिः हे मुख्यप्राण **यावत्** यदा अव्ययानामनेकार्थ-त्वात् । **त्वं पर्वतं** गन्धमादनपर्वतम् ॥ **प्राक्** पूर्वं **लङ्कां** प्रति ॥ **अनैषीः** आनीतवानसि । 'णीञ् प्रापणे' इत्यस्माद्धातोः कर्तरि लुङ् परस्मैपदं अनैषीः अनैष्टं अनैष्ट इति रूपाणि । कथम्भूतं पर्वतं **पञ्चाशत्सहस्रैः** पञ्चाशत् सङ्ख्याकानि च तानि सहस्राणि च पञ्चाशत् सहस्राणि तैः ॥ **योजनैः व्यवहितं** व्यवधानयुक्तं लङ्कापुर्यपेक्षया अर्धलक्षयोजनदूरे विद्यमानमित्यर्थः । पुनःकीदृग्विधं **अमितं** अज्ञेयं कीदृशोऽयं कुत्र वर्तत इत्यप्यन्यैरविज्ञातस्वरूपमित्यर्थः । पुनः कीदृशं **सञ्जीवनाद्यौषधनिधिं** सञ्जीवनं मृतसञ्जीवनं आदि येषां तानि सञ्जीवनादीनि तानि च तानि औषधानि च तेषां निधिं आश्रयमित्यर्थः । तदा तस्मिन् काले **लोकः** जनः 'लोकस्तु भुवने जन' इत्यमरः ॥ **एकक्षणे** एकस्मिन् क्षणे त्रिंशत्कला-परिमितकाले । अष्टादशनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कला 'तास्तु त्रिंशत्क्षणस्तं

तु मुहूर्तो द्वादशास्त्रियाम्' । ततः लङ्काप्रदेशादुत्पतन्तं उत्प्लवनं कुर्वन्तं त्वां **अद्राक्षीत्** अपश्यत् 'दृशिर्प्रेक्षणे' इत्यतः कर्तरि लुङ् परस्मैपदं अद्राक्षीत् अद्राष्टां अद्राक्षुः इति रूपाणि । कथम्भूतं त्वां अनन्तरम् ॥ **गिरिं** गन्धमादनगिरिं **उत्पाटयन्तं** उन्मूलयन्तं पुनः कथम्भूतं त्वां अनन्तरं गिरिं गृहीत्वा आकाशे **आयान्तं** आगच्छन्तं खमिन्द्रियं समाख्यातं खमाकाशं प्रकीर्तितम्' इति निघण्टुः । पुनः कथम्भूतं **राघवाङ्घ्रौ** रघुपतिपदाब्जे **प्रणतमपि** प्रणामं कुर्वाणमपि । एकस्मिन् क्षणे लङ्काप्रदेशात् पञ्चाशत् सहस्रयोजनमार्गगमनं पर्वतोत्पाटनं तं गृहीत्वा तावन्मार्गात्पुनः प्रत्यागमनं रामपादपङ्कजप्रणामः एवम्भूतो महाव्यापारः अन्यैर्बहु-कालासाध्योऽपि त्वया एकस्मिन् क्षणे कृतः अतः ते महिमार्णवः श्रोतॄणां अवाङ्मनसगोचर इति भावः ॥ १८ ॥

## भावप्रदीपिका

व्यापारान्तरं वर्णयति– **प्रागिति** ॥ **हे अधिक** ॥ मुक्तियोग्यतम । अधि अत्युत्कृष्टं कं सुखमस्येति वा । शतानन्दत्वात् । 'प्रीतिः सुखं कमानन्द' इत्यभिधानम् ॥ **हे प्राण** ॥ प्राणयति सर्वान्प्रवर्तयतीति प्राणः । तस्य सम्बुद्धिः । यद्वा अधिकः प्राणः शक्तिः पराक्रमो वा यस्य स तथोक्तः । तस्य सम्बुद्धिः । हे अधिकप्राण । 'शक्तिः पराक्रमः प्राणः' इत्यमरः । अधिकान् रुद्रादीन् प्राणयतीति वा ॥ **यावत्** यदा । त्वम् ॥ **प्राक्** पूर्वम् । पञ्चाशत्सहस्रं मानं येषां तानि पञ्चाशत्सहस्राणि तैर्योजनैः ॥ **व्यवहितं** व्यवधानयुक्तम् ॥ **अमितं** इदं वस्तु अस्मिन्नस्तीत्यन्यैः अविज्ञातम् । सञ्जीवनमादिः येषां सन्धानकरण्यादीनां तानि, तेषां औषधानां भेषजानां निधिः आश्रयस्तम् । 'मृतसञ्जीविनी मुख्या सन्धानकरणी परा । विशल्यकरणी चैव सवर्णकरणीति च' (म.भा.ता.नि.अ-८, श्लो-१५३) इति । इति तन्नामकान्यौषधानि निधीयन्तेऽस्मिन्निति वा । 'भेषजौषधभैषज्यान्यगदः' इत्यमरः ॥ **पर्वतं** गन्धमादनम् ॥ **लङ्कां प्रत्यनैषीः** ॥ नीतवानसि ॥ **तदा** तस्मिन् काले । 'तदोदा च' (पा.सू-५.३.१९) इति दाप्रत्ययः । लोको जनः । त्वाम् । एकश्चासौ क्षणश्च एकक्षणः । तस्मिन् **एकक्षणे**

त्रिंशत्कलापरिमितकाले । 'अष्टादशनिमेषास्तु काष्ठास्त्रिंशस्तु ताः कलाः । तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशाऽस्त्रियाम्' इत्यमरः । निमेषत्रयपरिमितः । कालः क्षण इति केचित् । ततः लङ्कायाः 'पञ्चम्यास्तसिल्' (पा.सू-५.३.७) इति तसिल् प्रत्यये कृते 'तसिलादिष्वाकृत्वा सुचः' (पा.सू-६.३.३५) इति पुंवद्भावः । यद्वा 'तस्मात् शसो नः पुंसि' (पा.सू-६.१.१०३) इति । ततोऽ-लङ्काप्रदेशात् इत्यर्थः ॥ **उत्पतन्तं** उड्डीयमानम् ॥ **गिरिं** पर्वतं गन्धमादनम् ॥ **उत्पाटयन्तं** उन्मूलयन्तम् ॥ **उत** अपि ॥ **गृहीत्वा** उन्मीलितं पर्वतमादाय इत्यर्थः ॥ **खे** अन्तरिक्षे । 'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः ॥ **आयान्तं** आगच्छन्तं अपि ॥ **राघवाङ्घ्रौ** राघवस्य रामस्य । अङ्घ्रौ चरणे । प्रणतं प्रणाममारभमाणं अपि । 'आदिकर्मणि क्तः कर्तरि च' (पा.सू-३.४.७१) इति कर्तरिक्तप्रत्ययः ॥ **अद्राक्षीत्** दृष्टवान् । हि तथा दर्शनस्य प्रामाणिकार्थो हिशब्दः । तथाचान्यैः कथञ्चिदनेककालासाध्यान् लङ्काप्रदेशोत्पतनादीन् विविधव्यापारान् क्षणाख्यैककाले कृतवतोऽस्य पौरुषं किमु वर्णनीयमिति भावः ॥ १८ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

'चरितं वैष्णवानां तु विष्णूद्रेकाय कथ्यते' (म.भा.ता.नि-२.१२९) इत्युक्ते रामस्य महामाहात्म्यं कैमुत्येनोपपादयितुं तदाज्ञाबलेन हनुमता कृतमनन्यसाध्यकृत्यं विज्ञापयति– **प्रागिति** ॥ हे अधिक प्राण हे राघव श्रीराम । ततस्तेन हनुमता यावत्या पञ्चाशत्सहस्रैर्योजनैर्व्यवहितं प्रागमितं अदृष्टं सञ्जीवनाद्यौषधनिधिं गन्धमादनाख्यं पर्वतं कपिकुलोत्थापनाय लङ्कामनैषीः आनयामासिथ । अन्तर्णीत-ण्यर्थोऽयम् । तदा तं हनूमन्तं ततो लङ्काप्रदेशादुत्पतन्तं उतानन्तरं तत्र गत्वा गिरिमुत्पाटयन्तं ततो गृहीत्वा खे आयान्तं त्वां तव । 'षट्सु द्वितीया' । अङ्घ्रौ प्रणतमपि लोको लङ्कादितत्तत्प्रदेशस्थो जन एकक्षण एवाद्राक्षीदित्यन्वयः ।

यद्वा प्रकर्षेणाञ्चति जानातीति प्राक् सर्वज्ञ । पञ्चानां देवर्षिपितृपनरभेदेन पञ्चविधानां मुक्तियोग्यानां वा आ सम्यक् शं सुखं तनोतीति पञ्चाशत् । सम्यक्

प्राणधारकत्वात्सञ्जीवन । आद्य सर्वोत्तम अधिकप्राण । उत्कृष्टत्वात्ततत्वाच्च उत । हे राघव । औषधानां तद्व्द्विषपरिहरणशक्तिविशेषाणाम् । निधिमाश्रयं प्राक् पूर्वं सर्वेषामपि त्रिदशानां भूमाववतरणायाज्ञाप्रदानसमये 'ममापि सेवा भवता प्रयोज्या' इत्येवमङ्घ्रौ प्रणतं 'परावनात्पर्वतनामधेयं' गरुडं भुजगपाशनिबद्धप्लवगो त्थापनाय एकस्मिन्नेव क्षणे स्मृतिमात्रेण यस्त्वं यावद्यदा लङ्कामनैषीः । अपिपदेन तत्पक्ष-वातस्पर्शेन कपीनुत्थापयामासिथ चेति ग्राह्यम् । तदा तं त्वां परमाश्चर्यतया तत्रत्यलोकोऽद्राक्षीत् । कथं भूतं त्वाम् । सहस्रैरनन्तैरज्ञैरपौरुषेयत्वेनोत्पत्ति-शून्यैर्वेदैर्व्यवहितं विशिष्टत्वेनावधारितम् । यद्वा तेषामपि व्यवहितं साकल्येना-गोचरमित्यर्थः । अमितम् । 'गिरिर्वायुः समुद्दिष्टः' इति वचनाद्गिरिं वायुं गृहीतत्वात्तेन सहैव खे इन्द्रियजाते यान्तं नियामकतया चरन्तम् । तत इन्द्रिया-दुत्पतं तं उद्धृत्य चरन्तम् । 'विमे कर्णा पतयतो विचक्षुः' इति श्रुतेः ॥ **उत्पाट-यन्तम्** ॥ भक्तानिष्टनिचयमिति शेषः ॥ १८ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– प्रागिति** ॥ हे अधिकप्राण त्वं यावत् यदा प्राक् पञ्चाशत्सहस्रैः योजनैः व्यवहितम् अमितं सञ्जीवनाद्यौषधनिधिं पर्वतं लङ्कां प्रति अनैषीः । तदा लोकः एकक्षणे ततः उत्पतन्तम् उत गिरिम् उत्पाटयन्तं गृहीत्वा खे आयान्तं राघवाङ्घ्रौ प्रणतमपि त्वां अद्राक्षीत् ।

**विग्रहवाक्यानि– पञ्चाशत्सहस्रैः** ॥ पञ्चाशत्सङ्ख्याकानि सहस्राणि येषां तानि तैः पञ्चाशत्सहस्रैः । **अमितम्** न मितः अमितः तम् ॥ **सञ्जीवनाद्यौषध-निधिम्** ॥ सञ्जीवनं आदिर्येषां ते सञ्जीवनादयः । सञ्जीवनादयश्च ते औषधाश्च सञ्जीवनाद्यौषधाः । सञ्जीवनाद्यौषधानां निधिः तम् ॥ **अनैषीः** 'नीञ् प्रापणे' लुङ् परस्मैपदं मध्यमपुरुषैकवचनम् । राघवाङ्घ्रौ राघवस्य अङ्घ्रिः राघवाङ्घ्रिः । तस्मिन् राघवाङ्घ्रौ ॥ **एकक्षणे** एकश्चासौ क्षणश्च एकक्षणः । तस्मिन् एकक्षणे

॥ १८ ॥

**क्षिप्तः पश्चात्सलीलं शतमतुलमते योजनानां स उच्च-**
**स्तावद्विस्तारवांश्चाप्युपलव इव व्यग्रबुद्ध्या त्वयाऽतः ।**
**स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्ट**
**च्छेदाङ्कः प्रागिवाभूत्कपिवरवपुषस्ते नमः कौशलाय ॥ १९ ॥**

## कविकर्णामृतम्

कविरिदानीं तदतिमानुषव्यापारं स्मारंस्मारं स्तावंस्तावं चोदितोद्वेलानन्द-सन्दोहसमुद्रे विगाहमानो मध्ये तत्कौशलं प्रणमति **क्षिप्त इति ॥ हे अतुलमते** अनुपमबुद्धे ॥ **योजनानां शतं उच्चः** उन्नतः **तावद्विस्तारवान्** विशालवान् । यावदुन्नतस्तावद्विस्तारवानित्यर्थः । सः प्रथममानीतो गिरिः ॥ **व्यग्रबुद्ध्या** विविधसूक्ष्मबुद्ध्या । कृतोहापोहमत्येत्यर्थः ॥ **त्वया ॥ उपललवः** पाषाणशकलः । स इव ॥ **अतः** अस्माल्लङ्काप्रदेशात् । लीलया सह वर्तत इति **सलीलं क्षिप्तः** प्रेरितः ॥ **स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्टच्छेदाङ्कः ॥** स्वानि स्वानि स्थानानि स्वस्वस्थानानि । तेषु स्थिताः अतिस्थिराः दृढतराः शकलाः खण्डाः यासां तासां शिलानां दृषदां जालं समूहः । 'चक्रं जालं च जालकम्' इति विश्वः । तस्य संश्लेषः सम्बन्धः । तेन नष्टः नाशं गतः । च्छेदस्य स्फोटस्य अङ्कः चिह्नम् । 'कलङ्काङ्कौ लाञ्छानम्' इत्यमरः । यस्य स तादृशः सन् । पश्चात् अनन्तरमपि । यदा सञ्जीवनाद्यौषधमादाय पुनस्तयैव प्राक्षिप्त-स्तदानीमपीत्यर्थः । प्रागिवाभूत् उत्पाटनात्पूर्वमनेन यथा स्थितं पश्चादपि तथाऽस्थीयतेत्यर्थः ॥ **कपिवरवपुषः** प्लवगश्रेष्ठकायस्य ते तव कौशलाय कर्तव्ये क्षिप्रकारित्वाय नमः । 'नमस्स्वस्ति' (पा.सू.२.३.१६) इत्यादिना नमश्शब्द-योगे चतुर्थी ॥ १९ ॥

## बालबोधिनी

कविरिदानीं तदतिमानुषव्यापारं स्मारंस्मारं स्तावंस्तावं चोदितोद्वेलानन्द-सन्दोहसमुद्रे विगाहमानो मध्ये प्रणमति– **क्षिप्त इति ॥ हे अतुलमते** अतुला

असदृशा मतिर्बुद्धिर्यस्य स तथा तत्सम्बुद्धिः ॥ **योजनानां शतं उच्चः** योजनानां शतमुच्चैरुन्नतः **तावत्** योजनशतं **विस्तारवान्** विशालः । स पूर्वानीतो गिरिः **व्यग्रबुद्ध्या** कार्यान्तरासक्तधिया कृतोहापोहयेत्यर्थः । त्वया **उपललव इव** ॥ पाषाणखण्ड इव ॥ **अतः** अस्माल्लङ्काप्रदेशात् । लीलया सह यथा भवति तथा **सलीलं क्षिप्तः** प्रेरितः ॥ **स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेष-नष्टच्छेदाङ्कः** ॥ स्वानि स्वानि स्थानानि स्वस्वस्थानानि तेषु स्थिता येऽतिस्थिरा अत्यन्तं दृढास्तादृशाः शकलाः खण्डा यासां तास्तथोक्तास्तादृशा या शिलाः पाषाणास्तासां जालं समूहस्तस्य संश्लेषः सम्बन्धस्तेन नष्टो नाशं गतः छेदस्य स्फोटस्याङ्कश्चिह्नं यस्य स तथा सन् ॥ **पश्चात्** अनन्तरमपि यदा सञ्जीवना-द्यौषधाश्रयं गिरिमानीय पुनस्तथैव प्रक्षिप्तस्तदानीमपीत्यर्थः । प्रागिवाभूत् स्फोटना-त्पूर्वं यथासीत्तथैवाभूत् । ॥ **कपिवरवपुषः** कपिषु वरं श्रेष्ठं तादृशं वपुः शरीरं यस्य स कपिवरवपुस्तस्य **ते** तव कौशलं पाटवं तस्मै **नमः** ॥ 'नमस्स्वस्ति' (पा.सू-२.३.१६) इत्यादिना नमश्शब्दयोगे चतुर्थी ॥ १९ ॥

## मन्दबोधिनी

कविरिदानीं हनुमदवतारस्य अमानुषव्यापारान् स्मरन् तत्कौशलं प्रणमति– **क्षिप्त इति** ॥ हे **अतुलमते** अतुला असदृशा मतिः प्रज्ञा यस्य सः तस्य सम्बुद्धिः हे मुख्यप्राण । त्वया सः प्रथममानीतो गन्धमादनगिरिः **पश्चात्** सञ्जीवनाद्यौषधा-नयनानन्तरम् ॥ **अतः** अस्माल्लङ्काप्रदेशात् **व्यग्रबुद्ध्या** व्यग्रा अन्यत्रासक्ता श्रीरामगुणगणालोचने आसक्तेति यावत् सा च सा बुद्धिश्च तया ॥ **उपललव इव** पाषाणलेश इव क्षुद्रपाषाण इवेत्यर्थः ॥ **सलीलं** यथा भवति तथा अनायासे-नेत्यर्थः ॥ **प्रक्षिप्तः प्रागिवाभूत्** उत्पाटनात्पूर्वं यथा स्थितः पश्चादपि तथैवा-भूदित्यर्थः । कथम्भूतः सः **योजनानां शतं उच्चः** उन्नतः शतयोजनोच्छ्रित इति यावत् । पुनः कीदृशः सः **तावद्विस्तारवांश्च** तावान् विस्तारो अस्यास्तीति तावद्विस्तारवान् यावदुच्चस्तावद्विस्तारवांश्चेत्यर्थः । पुनः कथम्भूतः सः ॥ **स्वस्व-**

**स्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्टच्छेदाङ्कः** ॥ स्वेषां स्वेषां स्थानानि स्वस्वस्थानानि तेषु स्थितानि अतिस्थिराणि अतिदृढानि शकलानि खण्डाः यासां ताः तथा ताश्च ताः शिलाश्च तासां जालं समूहः तस्य संश्लेषः सम्यक् सम्बन्धः तेन नष्टः नाशं प्राप्तः छेदस्य स्फुटितस्याङ्कः चिह्नं यस्य सः तथोक्तः । एतादृश-महामहिमोपेतस्य तव **कौशलाय** कुशलत्वाय **नमः** अस्तु नमस्स्वस्तीत्यादिना नमश्शब्दयोगे चतुर्थी । कथम्भूतस्य ते **कपिवरवपुषः** कपिवरस्य वानरश्रेष्ठस्य वपुरिव वपुर्यस्य सः तथोक्तः तस्य । यथा हनुमता समुद्रतरणकाले स्थूलशरीरं गृहीतं तद्वत् गन्धमादनपर्वतानयनकाले स्थूलशरीरं गृहीतमिति ज्ञापनायेदं विशेषणमिति बोध्यम् ॥ १९ ॥

## भावप्रदीपिका

विविधाश्चर्यतमानन्यसाध्यहेतुमद्व्यापारवर्णनसमुत्पन्नानन्दसन्दोहसमुद्रनिमग्नः कविरिदानीं तत्कौशलं विज्ञापयन् प्रणमति– **क्षिप्त इति** ॥ अतुला असमा मतिः यस्य स तथोक्तः । तस्य सम्बुद्धिः । **हे अतुलमते** ॥ तथा चायमन्यैर्वर्णयितु-मशक्यमपि कार्यं सम्पादयितुं समर्थः । तदुपायज्ञत्वादिति भावः । त्वया अनभि-हितत्वात्कर्तरि तृतीया । व्यग्रा । अन्यत्रासक्ता । श्रीरामगुणगणालोचनव्यासङ्ग-वतीत्यर्थः । अथवा वि विविधं विशिष्टं वा अग्रं विषयीकरणं यस्याः सा व्यग्रा सकलपदार्थगोचराकृतोहापोहा चेत्यर्थः ।

यद्वा 'विः पक्षिपरमात्मनोः' इत्यभिधानात् वौ परमात्मनि श्रीरामे एव अग्रं विषयीकरणं यस्याः सा व्यग्रा । श्रीरामश्रीमच्चरणनलिनासक्तेत्यर्थः । सा च बुद्धिश्च, तया व्यग्रबुद्ध्या । **अत** एतस्माल्लङ्काप्रदेशात् । 'एतदोऽशिति'[६३] इत्यशादेशः ॥ **उपललव इव** ॥ उपलः पाषाणः । 'पाषाणः प्रस्तरग्रावोपलाश्मानः शिलादृषत्' इत्यमरः । तस्य लवः लेशः इव यथा तथा इत्यर्थः । 'लवलेश-कणाणव' इत्यमरः । सलीलमिति क्रियाविशेषणम् ॥ **क्षिप्तः** निरस्तः । लीलया

---

६३. 'एतदोऽशिति' पञ्चम्यर्थे तस् एतच्छब्दस्य अशादेशः । शब्दकल्पद्रुमे अतश्शब्दव्युत्पत्तिकथने उक्तमिदम् ।

असदृशा मतिर्बुद्धिर्यस्य स तथा तत्सम्बुद्धिः ॥ **योजनानां शतं उच्चः** योजनानां शतमुच्चैरुन्नतः **तावत्** योजनशतं **विस्तारवान्** विशालः । स पूर्वानीतो गिरिः **व्यग्रबुद्ध्या** कार्यान्तरासक्तधिया कृतोहापोहयेत्यर्थः । त्वया **उपललव इव** ॥ पाषाणखण्ड इव ॥ **अतः** अस्माल्लङ्काप्रदेशात् । लीलया सह यथा भवति तथा **सलीलं क्षिप्तः** प्रेरितः ॥ **स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेष-नष्टच्छेदाङ्कः** ॥ स्वानि स्वानि स्थानानि स्वस्वस्थानानि तेषु स्थिता येऽतिस्थिरा अत्यन्तं दृढास्तादृशाः शकलाः खण्डा यासां तास्तथोक्तास्तादृशा या शिलाः पाषाणास्तासां जालं समूहस्तस्य संश्लेषः सम्बन्धस्तेन नष्टो नाशं गतः छेदस्य स्फोटस्याङ्कश्चिह्नं यस्य स तथा सन् ॥ **पश्चात्** अनन्तरमपि यदा सञ्जीवनाद्यौषधाश्रयं गिरिमानीय पुनस्तथैव प्रक्षिप्तस्तदानीमपीत्यर्थः । प्रागिवाभूत् स्फोटनात्पूर्वं यथासीत्तथैवाभूत् । ॥ **कपिवरवपुषः** कपिषु वरं श्रेष्ठं तादृशं वपुः शरीरं यस्य स कपिवरवपुस्तस्य **ते** तव कौशलं पाटवं तस्मै **नमः** ॥ 'नमस्स्वस्ति' (पा.सू-२.३.१६) इत्यादिना नमश्शब्दयोगे चतुर्थी ॥ १९ ॥

## मन्दबोधिनी

कविरिदानीं हनुमदवतारस्य अमानुषव्यापारान् स्मरन् तत्कौशलं प्रणमति– **क्षिप्त इति** ॥ हे **अतुलमते** अतुला असदृशा मतिः प्रज्ञा यस्य सः तस्य सम्बुद्धिः हे मुख्यप्राण । त्वया सः प्रथममानीतो गन्धमादनगिरिः **पश्चात्** सञ्जीवनाद्यौषधा-नयनानन्तरम् ॥ **अतः** अस्माल्लङ्काप्रदेशात् **व्यग्रबुद्ध्या** व्यग्रा अन्यत्रासक्ता श्रीरामगुणगणालोचने आसक्तेति यावत् सा च सा बुद्धिश्च तया ॥ **उपललव इव** पाषाणलेश इव क्षुद्रपाषाण इवेत्यर्थः ॥ **सलीलं** यथा भवति तथा अनायासे-नेत्यर्थः ॥ **प्रक्षिप्तः प्रागिवाभूत्** उत्पाटनात्पूर्वं यथा स्थितः पश्चादपि तथैवा-भूदित्यर्थः । कथम्भूतः सः **योजनानां शतं उच्चः** उन्नतः शतयोजनोच्छ्रित इति यावत् । पुनः कीदृशः सः **तावद्विस्तारवांश्च** तावान् विस्तारो अस्यास्तीति तावद्विस्तारवान् यावदुच्चस्तावद्विस्तारवांश्चेत्यर्थः । पुनः कथम्भूतः सः ॥ **स्वस्व-**

**स्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्टच्छेदाङ्कः** ।। स्वेषां स्वेषां स्थानानि स्वस्वस्थानानि तेषु स्थितानि अतिस्थिराणि अतिदृढानि शकलानि खण्डाः यासां ताः तथा ताश्च ताः शिलाश्च तासां जालं समूहः तस्य संश्लेषः सम्यक् सम्बन्धः तेन नष्टः नाशं प्राप्तः छेदस्य स्फुटितस्याङ्कः चिह्नं यस्य सः तथोक्तः । एतादृश-महामहिमोपेतस्य तव **कौशलाय** कुशलत्वाय **नमः** अस्तु नमस्स्वस्तीत्यादिना नमश्शब्दयोगे चतुर्थी । कथम्भूतस्य ते **कपिवरवपुषः** कपिवरस्य वानरश्रेष्ठस्य वपुरिव वपुर्यस्य सः तथोक्तः तस्य । यथा हनुमता समुद्रतरणकाले स्थूलशरीरं गृहीतं तद्वत् गन्धमादनपर्वतानयनकाले स्थूलशरीरं गृहीतमिति ज्ञापनायेदं विशेषणमिति बोध्यम् ।। १९ ।।

## भावप्रदीपिका

विविधाश्चर्यतमानन्यसाध्यहेतुमद्बुद्ध्यापारवर्णनसमुत्पन्नानन्दसन्दोहसमुद्रनिमग्नः कविरिदानीं तत्कौशलं विज्ञापयन् प्रणमति– **क्षिप्त इति** ।। अतुला असमा मतिः यस्य स तथोक्तः । तस्य सम्बुद्धिः । **हे अतुलमते** ।। तथा चायमन्यैर्वर्णयितु-मशक्यमपि कार्यं सम्पादयितुं समर्थः । तदुपायज्ञत्वादिति भावः । त्वया अनभि-हितत्वात्कर्तरि तृतीया । व्यग्रा । अन्यत्रासक्ता । श्रीरामगुणगणालोचनव्यासङ्ग-वतीत्यर्थः । अथवा वि विविधं विशिष्टं वा अग्रं विषयीकरणं यस्याः सा व्यग्रा सकलपदार्थगोचराकृतोहापोहा चेत्यर्थः ।

यद्वा 'विः पक्षिपरमात्मनोः' इत्यभिधानात् वौ परमात्मनि श्रीरामे एव अग्रं विषयीकरणं यस्याः सा व्यग्रा । श्रीरामश्रीमच्चरणनलिनासक्तेत्यर्थः । सा च बुद्धिश्च, तया व्यग्रबुद्ध्या । **अत** एतस्माल्लङ्काप्रदेशात् । 'एतदोऽशिति'[६३] इत्यशादेशः ।। **उपललव इव** ।। उपलः पाषाणः । 'पाषाणः प्रस्तरग्रावोपलाश्मानः शिलादृषत्' इत्यमरः । तस्य लवः लेशः इव यथा तथा इत्यर्थः । 'लवलेश-कणाणव' इत्यमरः । सलीलमिति क्रियाविशेषणम् ।। **क्षिप्तः** निरस्तः । लीलया

---

६३. 'एतदोऽशिति' पञ्चम्यर्थे तस् एतच्छब्दस्य अशादेशः । शब्दकल्पद्रुमे अतश्शब्दव्युत्पत्तिकथने उक्तमिदम् ।

सहितं निरसनं यथा स्यात्तथा प्रेरित इत्यर्थः ॥ **योजनानां शतं** तत्पर्यन्तम् । 'कालाध्वनोरत्यन्तसंयोगे' (पा.सू-२.३.५) इति द्वितीया । **उच्चः** उन्नतः । तावांश्चासौ विस्तारश्चेति तावद्विस्तारः । सोऽस्यास्तीति तावद्विस्तारवान् । यावान्नुतस्तावानायतश्चेत्यर्थः । यः पूर्वमानीतः पर्वतो गन्धमादनः ॥ **स्वस्वस्थान-स्थितातिस्थिरशकलशिलाजालसंश्लेषनष्टच्छेदाङ्कः** ॥ स्वानि स्वानि स्थानानि स्वस्वस्थानानि । नित्यवीप्सयोः (पा.सू-८.१.४) इति वीप्सायां द्विरुक्तिः । तेषु स्थितानि । अतिस्थिराणि अतिदृढानि । शकलानि खण्डाः । यासां तास्तथा । ताश्च ताः शिलाश्च । तासां जालं समूहः । 'जालं समूहं आनाय' इत्यमरः । तस्य संश्लेषः । समीचीनः सम्बन्धः । तेन नष्टः नाशं गतः । छेदस्य स्फुटनस्य । अङ्कः चिह्नं यस्य स तथोक्तः ॥ **पश्चात्** अनन्तरमपि । यदा लक्ष्मणपूर्वकाः वानराः इन्द्रजिन्महास्त्रघातमूर्छिताः तदानीं तमानीय तच्छैलवातस्पर्शेन सर्वानुत्थाप्य निरस्तश्च । यदा च रावणशक्त्यस्त्रविदारितवक्षाः लक्ष्मणो मूर्च्छितः तदापि तमानीय तद्गतौषधगन्धमात्रेण लक्ष्मणं समुत्थाप्य क्षिप्तः तदानीमपि इत्यर्थः ॥ **प्रागिवाभूत्** उन्मूलनात्पूर्वमनेन यथास्थितं तथाऽनन्तरमपि अस्थीयत इत्यर्थः । एवमाश्चर्यवन्तं व्यापारं कृतवतः **कपिवरवपुषः** वानरश्रेष्टविग्रहस्य । कं सुखं पिबन्ति अनुभवन्ति इति कपयः । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छां.उ.अ-४, खं-१०, मन्त्र-५) इति श्रुतेः । कं परं ब्रह्म पिबन्ति । सादरमवलोकयन्ति इति वा कपयः । रुद्रादयो देवाः तेभ्यः तेषु मध्ये वा वरं श्रेष्ठं वपुः स्वरूपं यस्य तथोक्तस्येति वा । **ते** तव । कुशलस्य भावः कौशलम् । हायानान्त-युवादिभ्योऽण्' (पा.सू-५.१.१३०) इति भावे अण् प्रत्ययः ॥ **तस्मै कौशलाय नमः** । 'नमस्स्वस्तिस्वाहास्वधालं वषड्योगाच्च' (पा.सू-२.३.१६) इति चतुर्थी । तथा च शतयोजनोच्छ्रितायतगन्धमादनसलीलनिरसनलङ्काप्रदेशात् पश्चाशत्सहस्रयोजनव्यवहितमेरुसमीपप्रदेशतत्संस्थापनाद्यनन्यसाध्याश्चर्य तम-व्यापारान् कुर्वतोऽस्य हनुमतो महिम्नोऽस्मदादीनां साकल्येन वाङ्मानसगोचरत्वेन वर्णयितुमशक्यत्वे तत्कौशलप्रणाम एव कर्तुमुचित इति भावः ॥ १९ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

हनूमतो व्यापारान्तरमुपपाद्य तत्कौशलप्रदत्वेन रामं प्रणमति– **क्षिप्त इति ॥** त्वया प्रेरितया विशेषेणाग्रया बुद्ध्या । अतः एतेन हनुमता । स आनीतो गन्धमादनो योजनानां शतमुच्चस्तावद्विस्तारवांश्चापि उपलव इव सलीलं पश्चात्क्षिप्तः सन् । स्वस्वस्थानस्थितातिस्थिरशकलोपेतशिलाजालानां संश्लेषेण नष्टच्छेदाङ्कः सन् प्रागिवाभूत् । एवं कपिवरवपुषो हनुमतः कौशलाय कुशलता प्रदाय ते नम इति ।

अथवा हे अतुलमते । स्वातन्त्र्यात्स्वः । स्वाधारतया स्थितत्वात्स्वः । अने प्राणे स्थित । अतिस्थिर शकल सुखज्ञानरूप । शिलाभिर्जालं जलनिधिं संश्लेष इतीति शिलाजालसंश्लेष । समुद्रे सेतुबन्धन । श्रीराम । यः कपिनिकरः प्राक् गरुडागमनात्पूर्वं व्यग्रबुद्ध्या कलुषितमनसा इन्द्रजिता भुजगपाशेन निबध्य कौ भूमौ उपलव इव क्षिप्तः स पश्चाद्गरुडागमनानन्तरं येन त्वया अतो गरुडद्वारा सलीलं उत्थापितः सन् नष्टच्छेदाङ्को भूत्वा प्रागिवाभूत् । यश्च त्वं अजनाना-मधिकजनानामृजुयोगिनां शतं प्रत्यपि शतादपीति यावत् । उच्चै यश्च त्वं ताव-द्विस्तारवान् तावतामृज्वाद्याधिक्योपयुक्तगुणादीनां विस्तारवांश्च तस्मै कपिवरवपुषो हनुमतः कौशलाय शं लातीति सुखप्रदाय ते नम इति ॥ १९ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– क्षिप्त इति ॥** हे अतुलमते योजनानां शतं उच्चः तावद्विस्तार-वान् च सः त्वया व्यग्रबुद्ध्या उपलव इव अतः पश्चात् क्षिप्तः अपि सलिलम् । स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्टच्छेदाङ्कः सन् प्रागिवाभूत् । हे वायो कपिवरवपुषः ते कौशलाय नमः ।

**विग्रहवाक्यानि– सलीलम् ॥** लीलया सहितं यथा भवति तथा सलीलम् । क्रियाविशेषणाव्ययम् ॥ **अतुलमते** अतुला मतिर्यस्य सः अतुलमतिः । तस्य

सम्बुद्धिः अतुलमते ॥ **विस्तारवान्** विस्तारोऽस्यास्तीति विस्तारवान् । **उपललवः** उपलस्य लवः उपललवः । व्यग्रबुद्ध्या व्यग्रा च सा बुद्धिश्च व्यग्रबुद्धिः । तया व्यग्रबुद्ध्या ॥ **स्वस्वस्थानस्थितातिस्थिरशकलशिलाजालसंश्लेषनष्ट-च्छेदाङ्कः** ॥ स्वानि च तानि स्थानानि च स्वस्थानानि । स्वस्वस्थानेषु स्थिताः स्वस्वस्थानस्थिताः । अतिस्थिराश्च ते शकलाश्च अतिस्थिरशकलाः । स्वस्वस्थानस्थिताः अतिस्थिराश्चकलाः यासां ताः । स्वस्वस्थानस्थितातिस्थिर-शकलाश्च ता शिलाश्च । शिलानां जालं शिलाजालं सम्यक् श्लेषः संश्लेषः । शिलाजालस्य संश्लेषः शिलाजालसंश्लेषः । संश्लेषेण नष्टः संश्लेषनष्टः छेदस्य अङ्कः छेदाङ्कः । नष्टः छेदाङ्कः यस्य सः स्वस्वस्थानस्थितातिस्थिरशकलशिला-जालसंश्लेषनष्टछेदाङ्कः ॥ **अभूत्** 'भू सत्तायां' लुङ् परस्मैपदि प्रथमपुरुषैकवचनम् ॥ **कपिवरवपुषः** कपिवरं वपुर्यस्य सः कपिवरवपुः । तस्य कपिवरवपुषः ॥१९॥

**दृष्ट्वा दुष्टाधिपोरः स्फुटितकनकसद्वर्म घृष्टास्थिकूटं**
**निष्पिष्टं हाटकाद्रिप्रकटतटतटाकातिशङ्को जनोऽभूत् ।**
**येनाजौ रावणारिप्रियनटनपटुर्मुष्टिरिष्टं प्रदेष्टुं**
**किं नेष्टे मे स तेऽष्टापदकटकतटित्कोटिभामृष्टकाष्ठः ॥ २० ॥**

## कविकर्णामृतम्

शिष्टानामिष्टप्रदोऽस्य मुष्टिरिति स्पष्टयन् मुष्टिं विशिनष्टि– **दृष्ट्वेति** ॥ हे मुख्यप्राण ॥ **येन** मुष्टिना ॥ स्फुटितं विदीर्णं कनकसद्वर्म विदीर्णं सुवर्णसुकवचः यस्य तत् ॥ घृष्टानि प्रध्वंसितानि अस्थीन्येव कूटानि शैलशृङ्गाणि यस्य तत् । 'अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' इत्यमरः ॥ **निष्पिष्टं** नितरां चूर्णी-कृतम्[६४] । दुष्टाः राक्षसाः तेषामधिपः रावणः तस्योरः वक्षस्थलम् ॥ **जनो** लोकः **दृष्ट्वा** ॥ **हाटकाद्रिप्रकटतटतटाकातिशङ्कः** ॥ हाटकाद्रिः सुवर्णगिरिर्मेरुः । तस्मिन् प्रकटः प्रकाशमानः तटः रोधः । तस्मिंस्तटाक इति अति अत्यर्थं शङ्का भ्रान्तिर्यस्य

६४. नितरां पिष्टं चूर्णीकृतमित्यर्थः इति पाठः ।

सोऽभूत् ॥ **आजौ** युद्धे । रावणारिः रघुपतिः तस्य **प्रियनटनं** इष्टकरणम् । तत्र **पटुः** दक्षः ॥ **अष्टापदकटकस्य** सुवर्णवलयस्य । 'कटकं वलयोऽस्त्रियाम्' इत्यमरः । तटित्कोटिसमाः भाः द्युतयः । ताभिरामृष्टाः व्याप्ताः काष्ठाः दिशो यस्य सः । 'दिशस्तु ककुभः काष्ठाः' इत्यमरः ॥ **ते** तव **मुष्टिः मे** मम **इष्टं** अभिलषितं **प्रदेष्टुं** दातुं **नेष्टे** न शक्नोति किम्? शक्नोत्येवेत्यर्थः ॥ २० ॥

## बालबोधिनी

शिष्टानामिष्टप्रदो मुष्टिरिति स्पष्टयन्मुष्टिं विशिनष्टि– **दृष्ट्वेति** ॥ हे मुख्यप्राण ॥ **येन** मुष्टिना ॥ **स्फुटितकनकसद्वर्म** कनकसद्वर्म कनकं सुवर्णात्मकं यत्सदुत्तमं वर्म कवचं, स्फुटितं विदीर्णं कनकसद्वर्म यस्य तत्तथोक्तम् ॥ **घृष्टानि** चूर्णीकृतान्यस्थिकूटान्यस्थ्नां समूहो यस्य तत्तथोक्तम् । 'कूटोऽस्त्री पुञ्जमायाघेष्वद्रि-शृङ्गेषु भेदयोः' इति वैजयन्ती ॥ **निष्पिष्टं** नितरां चूर्णीकृतम् । दुष्टानामधिपः स्वामी रावणस्तस्योरो वक्षस्स्थलं तत् ॥ **जनः दृष्ट्वा** ॥ **हाटकाद्रिः** हाटकात्म-कोऽद्रिर्हाटकाद्रिः स्वर्णगिरिर्महामेरुस्तस्मिन् प्रकटः स्पष्टः विस्तीर्ण इति यावत् । यस्तटो सेधः प्रदेशविशेष इति यावत् । तस्मिंस्तटाक इत्यतिशङ्का अत्यन्तशङ्का भ्रान्तिरिति यावत् यस्य स तथोक्तोऽभूत् ॥ **आजौ** युद्धे 'स्त्रियां सङ्के समीत्याजिः' इत्यमरः ॥ **रावणारिप्रियनटनपटुः** रावणारिः श्रीरामस्तस्य प्रियस्येष्टस्य नटनं करणं तस्मिन् पटुर्दक्षः ॥ **अष्टापदकटकतटित्कोटिभामृष्टकाष्ठः** ॥ अष्टापदं कनकं च तत् कटकं चाष्टापदकटकं सुवर्णात्मकवलयमित्यर्थः । तस्य तटितां कोटयस्त-टित्कोटयस्तद्वद्भाः द्युतयस्ताभिरामृष्टा व्याप्ताः दिशो यस्य स तथोक्तः ॥ **ते** तव **मुष्टिर्मे** मम **इष्टम्** अभिलषितं **प्रदेष्टुं** दातुं **नेष्टे** किं, न शक्नोति किं शक्नोत्येवेत्यर्थः 'ईश ऐश्वर्ये' लट् ॥ २० ॥

## मन्दबोधिनी

शिष्टानामिष्टप्रदोऽस्य मुष्टिरिति भावेन मुष्टिं विशिनष्टि– **दृष्ट्वेति** ॥ हे

मुख्यप्राण सः **ते** तव **मुष्टिः** ॥ **मे** मम ॥ **इष्टं प्रदेष्टुं** प्रकर्षेण दातुं **नेष्टे किं** न शक्नोति किं शक्नोत्येवेत्यर्थः । 'ईश ऐश्वर्य' इत्यस्माल्लडात्मनेपदं ईष्टे ईशाते ईशते इति रूपाणि । सः कः येन मुष्टिना **आजौ** युद्धे **निष्पिष्टं** नितरां चूर्णीकृतं **दुष्टाधिपः** रावणः तस्य **उरः** वक्षस्थलं **दृष्ट्वा जनः** लोकः ॥ **हाटकाद्रि-प्रकटतटतटाकातिशङ्कः** ॥ हाटकाद्रिः सुवर्णपर्वतः मेरुस्तस्मिन् प्रकटः प्रकाशमानः स चासौ तटः तीरं च प्रदेशविशेष इति यावत् तस्मिन्तटाकमिति सरोवरमिति अतिशङ्का भ्रान्तिर्यस्यासौ तथोक्तः अभूत् । कथम्भूतं **दुष्टाधिपोरः** ॥ **स्फुटित-कनकसद्वर्म** ॥ स्फुटितं विदारितं कनकमयं सद्वर्म समीचीनकवचं यस्मिन् तत्तथोक्तम् । पुनः कथं भूतं दुष्टाधिपोरः ॥ **घृष्टास्थिकूटम्** ॥ अस्थीन्येव कूटानि शिखराणि अस्थिकूटानि घृष्टानि निष्पिष्टानि अस्थिकूटानि यस्य तत्तथोक्तं 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यभिधानम् । कथम्भूतः मुष्टिः ॥ **रावणारिप्रिय-नटनपटुः** ॥ रावणारिः श्रीरामः तस्य प्रियनटनं इष्टकरणं तत्र पटुः दक्षः । पुनः कथम्भूतः मुष्टिः ॥ **अष्टापदकटकतटित्कोटिभामृष्टकाष्ठः** ॥ अष्टापदमयं च तत्कटकं च अष्टापदकटकं सुवर्णवलयमित्यर्थः 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदं स्त्रियाम्' इति सुवर्णपर्याय इत्यमरः । 'कटकं वलयोऽस्त्रियाम्' इत्यमरः । अष्टापदकटकस्य तटित्कोटिरिव विद्युत्कोटिरिव स्थिताश्च ताः भाः द्युतयश्च कोटिसङ्ख्याकविद्युद्वत् प्रकाशमानद्युतय इति यावत् । ताभिः आमृष्टाः प्रकाशिताः काष्ठाः दिशो येन सः तथोक्तः 'भाच्छविद्युतिदीप्तयः' इत्यमरः । 'दिशास्तु ककुभः काष्ठा' इति चामरः ॥ २० ॥

## भावप्रदीपिका

भक्ताभिलषितसकलपुरुषार्थप्रदोऽस्य मुष्टिरिति स्पष्टयन् तन्मुष्टिं वर्णयति– **दृष्ट्वेति** ॥ हे देव स **ते** तव **मुष्टिः** ॥ **मे** मम ॥ **इष्टं प्रदेष्टुं** प्रकर्षेण दातुम् । किं **नेष्टे** न शक्नोति किं शक्नोत्येवेत्यर्थः । 'ईश ऐश्वर्ये' लट् । निग्रहानुग्रहौपयिक-सामर्थ्यवत एव इष्टप्रदानशक्तत्वमस्य तु कथमित्यपेक्षायां उक्तम् ॥ **येन** मुष्टिना ॥

**आजौ** युधि । 'समुदायः स्त्रियां संयत् समित्याजिसमिद्युधः' इत्यमरः ॥ **निष्पिष्टम्** नितरां चूर्णितम् ॥ **स्फुटितकनकसद्वर्म** स्फुटितं विदीर्णम् । कनकस्य सुवर्णस्य सच्छोभमानम् । वर्म कवचं यस्मिन् तत् । स्फुटितकनकसद्वर्म । तत् । 'तनुत्रं वर्म दंशनम्' । उरच्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्' इत्यमरः ॥ **घृष्टास्थिकूटम्** घृष्टानि मर्दितानि । अस्थ्नां कूटानि शिखराणि यस्य तत् । घृष्टास्थिकूटम् तत् । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः ॥ **दुष्टाधिपोरः** दुष्टानामसतामधिपः प्रभुर्यो रावणः । 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः । तस्य उरः वक्षः ॥ **दृष्ट्वा** ॥ **हाटकाद्रिप्रकटतटतटाकातिशङ्कः जनः** हाटकं सुवर्णम् । 'सुवर्णं स्वर्णकनकं हिरण्यं हेमहाटकम्' इत्यमरः । तस्याद्रिः पर्वतो मेरुः 'सुमेरुर्हेमाद्री रत्नसानुः सुरालयः' इत्यमरः । तस्य प्रकटं स्फुटम् । 'स्फुटे प्रकाशप्रकटौ' इत्यमरः । तत्तटं तस्मिन् । तटाकं सरः इदमिति शङ्का यस्य स तथोक्तः । 'पद्माकरः तटाकोऽस्त्री का सारस्सरसीसरः' इत्यमरः ॥ **अभूत्** ॥ 'भूसत्तायां' लुङ् । जनः त्वन्मुष्ट्याघातनिष्पिष्टशिखरायितास्थिविलसत्कनककवचरावणस्य वक्षःस्थलदर्शनेन किमेतत्सुवर्णाद्रितटस्थसरः इत्युत्प्रेक्षां चक्रे इत्यर्थः । किं विशिष्टो मुष्टिः ॥ **रावणारिप्रियनटनपटुः** युद्धे रावणारेः श्रीरामस्य प्रियं अभीष्टम् । 'अभीष्टमीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इत्यमरः । यन्नटनं चेष्टाविशेषः । तस्मिन्पटुर्दक्षः ॥ **अष्टापदकटकतटित्कोटिभामृष्टकाष्ठः** ॥ अष्टापदं जाम्बूनदम् । 'रुग्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः । तस्य यत्कटकं वलयः । 'कटकं वलयोऽस्त्रियाम्' इत्यमरः । तस्य तटित्कोटिभाः । तटितां विद्युतां कोटयः । तटित्कोटयः । 'तटित्सौदामिनी विद्युत्' इत्यमरः । तटिद्वत् कोटिसङ्ख्याकविद्युत्प्रभाः तटित्कोटिभाः द्युतयः । 'उक्तार्थानामप्रयोग' इति वतेरप्रयोगः । कुमुदगन्धिवद्धर्म्युपमानत्वम् । सङ्ख्यासङ्ख्यावदभेदेन सङ्ख्याप्राधान्यविवक्षयैवमुक्तिः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । तथा च भगवद्भक्तपुमर्थप्रतिबन्धकीभूतरावणोपलक्षितभगवद्वेषविध्वंसकत्वेन अनिष्टनिवर्तकत्वाद्युक्तमिष्टप्रदानसामर्थ्यं इति भावः ॥ २० ॥

## भगवन्तरायकृतलघुनिगूढार्थप्रकाशिका

इदानीं राममुष्टिं स्तुवन् इष्टं प्रार्थयते– **दृष्ट्वेति ॥ येन** मुष्टिना **आजौ** युद्धे **निष्पिष्टं** स्फुटितकनकसद्धर्मोपेतं घृष्टास्थिकूटं दुष्टाधिपस्य रावणस्योरो जनो दृष्ट्वा हाटकाद्रेः प्रकटतटे तटाक इति अतिशङ्कोपेतोऽभूत् । स तथा भूतो **रावणारि-प्रियनटनपटुः** रावण एव अरिर्येषामृष्यादीनां ते रावणारयस्तेषां प्रियचरणे पटुरष्टापदकटकस्य सुवर्णबलं यस्य तटित्कोटिवद्विद्यमानया प्रभया अमृष्टाः काष्ठाः दिशो यस्य स ते मुष्टिर्मे **इष्टं** प्रदेष्टुं **नेष्टे किं** ईष्ट एवेत्यन्वयः । मुष्टिस्थित-धनुरुत्थितबाणस्यैव यद्यपि रावणवक्षोनिष्पेषकत्वं तथापि तस्य मुष्ट्यधीन-त्वादेवमुक्तिः ॥ २० ॥

## श्रीनिवासतीर्थीया

**अन्वयः– दृष्ट्वेति ॥** हे मुख्यप्राण येन स्फुटितकनकसद्धर्मघृष्टास्थिकूटं निष्पिष्टं दुष्टाधिपोरः दृष्ट्वा जनः हाटकाद्रिप्रकटतटतटाकातिशङ्कः अभूत् । सः आजौ रावणारिप्रियनटनपटुः अष्टापदकटकतटित्कोटिभामृष्टकाष्ठः ते मुष्टिः मे इष्टं प्रदेष्टुं किं नेष्टे किन्तु ईष्ट एव ।

**विग्रहवाक्यानि– दुष्टाधिपोरः ॥** दुष्टानाम् अधिपः दुष्टाधिपः । दुष्टाधिपस्य उरः दुष्टाधिपोरः ॥ **स्फुटितकनकसद्धर्मघृष्टास्थिकूटम् ॥** सच्च तद्धर्म च सद्धर्म । कनकं च तत् सद्धर्म च कनकसद्धर्म । स्फुटितं कनकसद्धर्म यस्य तत् स्फुटित-कनकसद्धर्म । घृष्टानि च तानि अस्थीनि च घृष्टास्थीनि । अस्थ्नां कूटो यस्मिन् तत् घृष्टास्थिकूटम् ॥ **निष्पिष्टम् ॥** नितरां पिष्टं निष्पिष्टं । तत् निष्पिष्टम् ॥ **हाटकाद्रिप्रकटतटतटाकातिशङ्कः ॥** हाटकश्चासौ अद्रिश्च हाटकाद्रिः । हाटकाद्रौ प्रकटः हाटकाद्रिप्रकटः । प्रकटश्चासौ तटश्च प्रकटतटः । प्रकटतटे विद्यमानं तटाकं प्रकटतटतटाकम् । अत्यन्तं शङ्का अतिशङ्का । प्रकटतटतटाकमिति अतिशङ्का यस्य सः प्रकटतटतटाकातिशङ्कः ॥ **अभूत्** 'भू सत्तायां' लुङ् परस्मैपदं प्रथमपुरुषैक-वचनम् ॥ **रावणारिप्रियनटनपटुः** रावणस्य अरिः रावणारिः । रावणारेः प्रियम् ।

प्रियं च तत् नटनं च प्रियनटनम् । प्रियनटने पटुः प्रियनटनपटुः । **ईष्टे** 'इषु इच्छायां' लट् आत्मनेपदि प्रथमपुरुषैकवचनम् ॥ **अष्टापदकटकतटित्कोटिभामृष्टिकाष्ठः** अष्टापदानि च तानि कटकानि च अष्टापदकटकानि । तटितां कोटयः तटित्कोटयः तटित्कोटिवत् स्थिताः भाः तटित्कोटिभाः । अष्टापदकटकानां तटित्कोटिभाः । तटित्कोटिभाभिः अमृष्टाः काष्ठाः येन सः अष्टापदकटकतटित्कोटिभामृष्टकाष्ठः ॥ २० ॥

**देव्यादेशप्रणीतिद्रुहिणहरवरावध्यरक्षोविघाता-**
**द्यासेवोद्यद्दयार्द्रः सहभुजमकरोद्रामनामा मुकुन्दः ।**
**दुष्प्रापे पारमेष्ठ्ये करतलमतुलं मूर्ध्नि विन्यस्य धन्यं**
**तन्वन् भूयः प्रभूतप्रणयविकसिताब्जेक्षणस्त्वेक्षमाणः ॥ २१ ॥**

## कविकर्णामृतम्

त्वत्सेवया प्रीतो विष्णुर्ब्रह्मत्वविषये मस्तके हस्तं निधाय निरवग्रहानुग्रहमकरोदिति विज्ञापयति– **देव्यादेशेति** ॥ **देवीं** सीताम् । तां प्रति श्रीरामचन्द्रस्याऽऽदेशप्रणीतिः आज्ञाप्रापणम् । श्रीरामचन्द्रं प्रति देवीविज्ञापनप्रापणं च । तदुक्तम्– 'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' (ऐ.उ.भाष्योदाहृत भाववृत्तवचनम्) इति ॥ द्रुहिणहरयोः ब्रह्मरुद्रयोः । वरैः अवध्यानि यानि रक्षांसि राक्षसाः तेषां विघातः हननं आदिर्यस्यास्तया आसेवया अच्छिद्रशुश्रूषया उद्यद्दयया 'धाताब्जयोनिद्रुहिणः' इत्यमरः इति कचित् उद्गच्छत्कृपया[६५] आर्द्रः सिक्तः ॥ **दुष्प्रापे** अन्यैः प्राप्तुमशक्ये पारमेष्ठ्ये ब्रह्मत्वविषये । अतुलं समाधिकरहितं **करतलं** हस्ततलम् ॥ **मूर्ध्नि** शिरसि **विन्यस्य** ॥ **धन्यं** कृतार्थम् । 'धनगणं लब्धा' (पा.सू-४.४.८४) इति यत्प्रत्ययः ॥ **तन्वन्** कुर्वाणः । भूयः पुनः ॥ प्रभूतः प्रचुरः । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः ॥ प्रणयः स्नेहः । तेन विकसिते अब्जेक्षणे कमलनेत्रे यस्य सः ॥ **रामनामा** रामाभिधानो **मुकुन्दः** हरिः ॥ **त्वा** त्वाम् ।

६५. उत्कृष्टकृपया ।

'त्वामौ द्वितीयायाः' (पा.सू-८.१.२३) इति त्वादेशः ॥ **ईक्षमाणः** अवलोकमानः सन् ॥ **सहभुजं** सहभोक्तारं **अकरोत्** कृतवान् । मोक्षसुखानुभवकर्तारमकरोदिति भावः ॥ २१ ॥

## बालबोधिनी

त्वत्सेवाप्रीतो विष्णुर्ब्रह्मत्वविषये मस्तके हस्तं निधाय परिपूर्णानुग्रहमकरोदिति विज्ञापयति– **देव्यादेशेति** ॥ आदेशस्य श्रीरामाज्ञायाः प्रणीतिरानयनमादेशप्रणीतिर्देवीं सीतां प्रत्यादेशप्रणीतिः । यद्वा देव्याः सीताया आदेशस्य विज्ञापनस्य प्रणीतिः श्रीरामं प्रत्यानयनं सा च । द्रुहिणश्चतुर्मुखः स च हरश्च तयोर्ये वरास्तैरवध्यानि यानि रक्षांसि अक्षकुमारादिराक्षसास्तेषां विघातो हननं दिर्यस्याः सा तथोक्ता तादृशी आसेवा नित्यशुश्रूषा सा च ताभ्यामुद्यन्त्यभिव्यज्यमाना या दया तयार्द्रः सिक्तः । यद्वा विघातो हननं स च तावादी यस्याः सा तथोक्ता तादृशी या आसेवा तयोद्यन्ती या दया तयार्द्र इति वा । प्राप्तुमशक्यं दुष्प्रापं तस्मिन् अयोग्यैरप्राप्यमित्यर्थः । परमेष्ठिनो भावः पारमेष्ठ्यं तस्मिन् ब्रह्मत्वविषय इत्यर्थः ॥ **अतुलं** असदृशं समाधिकरहितमित्यर्थः । करतलं हस्ततलं तन्मूर्ध्नि **विन्यस्य** निक्षिप्य । **धन्यं** कृतार्थं निरपेक्षगुणपूर्णमिति वा । 'धनगणं लब्धा' (पा.सू-४.४.८४) इति यत्प्रत्ययः ॥ **तन्वन्** कुर्वाणः ॥ **भूयः** पुनः पुनः प्रभूतः प्रचुरो यः प्रणयः स्नेहस्तेन विकसिते अब्जेक्षणे कमलनेत्रे यस्य स तथोक्तः । राम इति नाम यस्य स तथोक्तः ॥ **मुकुन्दः** श्रीविष्णुः **त्वा** त्वां 'त्वामौ द्वितीयायाः' (पा.सु-८.१.२३) इति त्वादेशः । ईक्षमाणोऽवलोकमानः सन् । सह भुङ्क्ते इति सहभुक् तमकरोत् कृतवान् मोक्षसुखानुभवकर्तारमकरोदिति भावः ॥ २१ ॥

## मन्दबोधिनी

त्वत्सेवया प्रीतो विष्णुर्ब्रह्मत्वे विषये मस्तके हस्तं निधाय निरवग्रहानुग्रहमकरोदिति विज्ञापयति– **देव्यादेश इति** ॥ हे मुख्यप्राण । **रामनामा** ॥ राम

इति नाम यस्य स तथोक्तः ॥ **मुकुन्दः** विष्णुः ॥ **त्वा** त्वाम् ॥ **सहभुजम्** ॥ सहभुङ्क्ते इति सहभुक् तम् । सहभोक्तारम् ॥ **अकरोत्** ॥ सहभोगलक्षणानन्द-विशेषानुभवकर्तारमकरोदिति यावत् । 'डु कृञ् करणे' इत्यस्माद्धातोर्लङ् परस्मैपदम् । सहभोक्तारं अकरोत् । अकरोत् अकुरुतां अकुर्वन् इति रूपाणि । कथम्भूतो मुकुन्द इत्याकाङ्क्षायां तं विशिनष्टि **देव्यादेशेति** ॥ देव्यादेशेत्यारभ्य दयार्द्र इत्यन्तमेकं पदम् ॥ **देव्यादेशप्रणेत्रीद्रुहिणहरवरावध्यरक्षोविघात-द्यासेव्योद्यद्दयार्द्रः** ॥ देवी सीता । तां प्रति श्रीरामचन्द्रस्य आदेशप्रणीतिः आज्ञाप्रणयनं श्रीरामचन्द्रं प्रति देव्या विज्ञापनरूपः तस्य प्रणयनं च । नयस्य प्रकर्षः भक्त्याद्यतिशयसाहित्यरूपः ज्ञेयः । द्रुहिणः ब्रह्मा । 'धाताब्जयोनिर्द्रुहिणः' इत्यमरः । हरो रुद्रः । तयोर्वरैः अवध्यानि च तानि रक्षांसि च राक्षसाः अक्ष-कुमारादयः तेषां विघातः वधः । देव्यादेशप्रणीतिश्च द्रुहिणहरवरावध्यरक्षोविघातश्च एतौ आद्यौ आदी यस्याः सा तथोक्ता । सा च सा आसेवा च आच्छिद्रशुश्रूषा च तया उद्यती उद्गच्छन्ती च सा दया च तया आर्द्रः क्लिन्नः । पुनः कथम्भूतो मुकुन्दः ॥ **दुष्प्रापे** ॥ अन्यैः प्राप्तुमशक्ये ॥ **पारमेष्ठ्ये** ॥ ब्रह्मपदविषये । तद्दातुमिति यावत् ॥ **मूर्ध्नि** ॥ मस्तके ॥ **अतुलम्** । असदृशम् ॥ **करतलम्** ॥ **विन्यस्य** ॥ निधाय ॥ **भूयः** ॥ पुनः पुनः ॥ **धन्यम्** ॥ कृतार्थम् । **तन्वन्** । कुर्वाणः । पुनः कथम्भूतः । **प्रभूतप्रणयविकसिताब्जेक्षणः** ॥ प्रभूतः प्रचुरश्चासौ प्रणयः स्नेहश्च तेन विकसिते अब्जेक्षणे कमलवत् ईक्षणे नेत्रे यस्य स तथोक्तः । प्रसादाभिमुख इति यावत् । 'प्रभूतं प्रचुरं प्राग्र्यम्' इत्यमरः । पुनः कथम्भूतः मुकुन्दः । त्वां **ईक्षमाणः** ॥ कृपादृष्ट्या निरीक्षमाणः ॥ २१ ॥

## भावप्रदीपिका

एवमनन्यसाध्यया सेवयाऽराधितो भगवान् रामो ब्रह्मत्वादि प्रदातुं अस्य मस्तके करतलं निधाय अत्युत्तमप्रसादं कृतवानिति विज्ञापयति– **देवीति** ॥ देव्यै क्रीडादिगुणवत्सीताप्रतिकृत्यै । रामस्याज्ञा देव्यादेशः । देव्याः रामाय आदेशः

विज्ञप्तिरूपो देव्यादेशः । देव्यादेशश्च देव्यादेशश्च देव्यादेशौ । 'सरूपाणामेकशेष एकविभक्तौ' (पा.सू-१.२.६४) इति एकशेषः । तयोः प्रणीतिः प्रकर्षेण नयनं प्रापणम् । प्रपूर्वात् 'णीङ् प्रापणे' इत्यस्मात् 'स्त्रियां क्तिन्' (पा.सू-३.३.९४) इति क्तिन् प्रत्ययः । प्रकर्षश्च नयनस्य भक्तिश्रद्धाद्यतिशयसाहित्यलक्षणो ज्ञेयः । तथाविधस्याभिमतफलसाधनत्वात् ।

यद्वा तन्त्रावृत्या योजनीयम् । सकृदुक्तं बहूपकारकम् तन्त्रमिति तन्त्रन्याय-लक्षणात् । सकृदुदितस्यापि इति शब्दस्य द्विवारं सम्बन्धो युक्तः । सा च द्रुहिणहरयोः ब्रह्मरुद्रयोः । वरैः अवध्यानि अन्यैः हन्तुमशक्यानि यानि रक्षांसि राक्षसाः । तेषां विघातः । वधश्च तौ आद्यौ प्रथमौ यस्याः सा, तया आसेवया अच्छिद्रशुश्रूषया उद्यन्ती दया, तया स्निग्धहृदय इत्यर्थः । प्रभूत उद्भूतो बहुर्वा । 'प्रभूतं प्रचुरं प्राज्यं अदभ्रं बहुलं बहु' इत्यमरः । यः प्रणयः स्नेहः तेन विकसिते विकासं प्राप्ते । अम्बुजवदीक्षणे नेत्रे यस्य स तथोक्तः । प्रसादविशेषाभिमुख इत्यर्थः । 'लोचनं नयनं नेत्रं ईक्षणं चक्षुरक्षिणी इत्यमरः' । राम इति नाम यस्यासौ रामनामा ॥ **रामनामा** रामाभिधानः **मुकुन्दो** विष्णुः ॥ **त्वा** त्वाम् । 'त्वामौ द्वितीयायाः' (पा.सू-८.१.२३) इति त्वादेशः । ईक्षमाणः पश्यन्निति शेषः । अत्र ईक्षतेश्चाक्षुषज्ञानार्थत्वात् । 'पश्यार्थैश्चानालोचने' इति न प्रतिषेधः ॥ **दुष्प्रापे** अन्यैः प्राप्तुमशक्ये । 'ईषदुःसुषुकृच्छ्रार्थेषु खल्' (पा.सु-३.३.१२६) इति खल्प्रत्ययः ॥ **पारमेष्ठ्ये** ब्रह्मपदविषये । तद्दातुमिति यावत् ॥ **मूर्ध्नि** मस्तके **अतुलं** समाधिकरहितं **करतलं** हस्ततलं **विन्यस्य** विधाय **भूयः** पुनः । त्वां धन्यं सुकृतिनम् । 'सुकृती पुण्यवान् धन्यः' इत्यमरः । अनपेक्षो गुणैः पूर्णो धन्य इत्यभिधीयते इति वचनात् । धन्यं अनपेक्षं गुणपूर्णमिति वा ॥ **तन्वन्** विस्तारयन् सन् जगतीति शेषः । प्रभुणा हि सत्कृता भृत्या ख्यातिं लभन्ते इति भावः । सहभुजं सह भुङ्क्ते इति सहभुक् । तम् सहभुजम् । 'क्विप् च' (पा.सू-३.२.७६) इति क्विप् प्रत्ययः । सहभोक्तारमकरोत् । भुक्त्यनन्तरं सुखभोगलक्षणानन्द-

विशेषानुभवितृत्वयोग्यं कृतवान् इत्यर्थः । यद्वा सहभुनक्ति जगत्पालयति इति सहभुक् तम् । पारमेष्ठ्यपदप्राप्त्यनन्तरं विशेषतो जगद्रक्षकमित्यर्थः । इत्याश्चर्यतमानन्यसाध्यया सेवया प्रसन्नो भगवान् रामः साक्षात् स्वयमेवानन्यसाधारणं फलमस्मै ददौ । नत्वन्येभ्य इव परम्परया इति भावः ॥ २१ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं रामस्य हनुमदनुग्रहणप्रकारं विज्ञापयति– **देवीति ॥** देवीं सीतां प्रति भवदादेशप्रणीतिराज्ञा प्रणयनं तथा देव्या य आदेशो विज्ञापनारूपः तस्य भवन्तं प्रति प्रणीतिः द्रुहिणहरवरावध्यरक्षोविघातश्च एतत्प्रभृतिसम्यक् सेवया जातया उद्यद्दयया आर्द्रः सन् रामनामा मुकुन्दो भवान् सेवाकर्तुर्हनुमतो मूर्ध्नि करतलं विन्यस्य तमतुलं हनूमन्तं धन्यं तन्वन् भूयः प्रभूतप्रणयेन विकसितेक्षणः सन् । तुशब्द एवार्थे । अतुलं हनुमन्तमेव आसम्यगीक्षमाणो भूत्वा तं सहभुजं ब्रह्मपदे स्वेन सहविषयभोजनकर्तारमकरोदित्यर्थः ।

यद्वा हे देव्यादेशप्रणीतिद्रुहिणहरवर । देवी लक्ष्मीः आदेशेन विष्ण्वाज्ञया जगज्जन्मादिप्रणीतिर्यस्यासावादेशप्रणीतिर्वायुः । तेभ्यो वर । अवध्यरक्षोविघात । आद्य । श्रीराम । हनुमत्कृता सेवोद्यद्दयार्द्रः सन्नित्यादि ॥ २१ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– दिवीति ॥** देव्यादेशप्रणीतिद्रुहिणहरवरावध्यरक्षोविघाताद्यासेवोद्यद्दयार्द्रः प्रभूतप्रणयविकसिताब्जेक्षणः भूयः त्वाम् ईक्षमाणः रामनामा मुकुन्दः अतुलं करतलं मूर्ध्नि विन्यस्य धन्यं तन्वन् सन् दुष्प्रापे पारमेष्ठ्ये पदे त्वां सहभुजम् अकरोत् ।

**विग्रहवाक्यानि– देव्यादेशप्रणीतिद्रुहिणहरवरावध्यरक्षोविघातद्यासेवोद्यद्दयार्द्रः ॥** देव्याः आदेशः देव्यादेशः । देव्यादेशस्य प्रणीतिः देव्यादेशप्रणीतिः । द्रुहिणश्च हरश्च द्रुहिणहरौ । द्रुहिणहरयोर्वरौ । न वध्यानि

अवध्यानि । द्रुहिणहरवराभ्याम् अवध्यानि । द्रुहिणहरवरावध्यानि । अवध्यानि च तानि रक्षांसि च अवध्यरक्षांसि । रक्षसां विघातः रक्षोविघातः । देव्यादेश-प्रणीतिश्च द्रुहिणहरवरावध्यरक्षोविघातश्च देव्यादेशप्रणीतिद्रुहिणहरवरावध्य-रक्षोविघातौ । विघातावेव आद्यौ यस्या सा विघाताद्या । सम्यक् सेवा आसेवा । विघाताद्या च आसेवा च विघाताद्यासेवा । विघाताद्यासेवया उद्यन्ती विघाता-द्यासेवोद्यन्ती । उद्यन्ती च सा दया च उद्यद्दया । उद्यद्दयया आर्द्रः देव्यादेश-प्रणीतिद्रुहिणहरवरावध्यरक्षोविघाताद्यासेवोद्यद्दयार्द्रः ॥ **सहभुजम्** सह भुनक्ति इति सहभुक् । तं सहभुजम् ॥ **अकरोत्** 'डुकृञ् करणे' लुङ् परस्मैपदं प्रथमपुरुषैक-वचनम् ॥ **रामनामा** राम इति नाम यस्य सः रामनामा ॥ **दुष्प्रापे** प्राप्तुमशक्यं दुष्प्रापम् । तस्मिन् दुष्प्रापे ॥ **परमेष्ठिनः** इदं पारमेष्ठ्यम् । तस्मिन् पारमेष्ठ्ये ॥ **अतुलम्** न तुलम् अतुलम् । तत् अतुलम् ॥ **प्रभूतप्रणयविकसिताब्जेक्षणः** ॥ प्रभूतश्चासौ प्रणयश्च प्रभूतप्रणयः । प्रभूतप्रणयेन विकसिते प्रभूतप्रणयविकसिते । अब्जवत् ईक्षणे अब्जेक्षणे । प्रभूतप्रणयविकसिते अब्जेक्षणे यस्य सः प्रभूतप्रणय-विकसिताब्जेक्षणः ॥ २१ ॥

**जघ्ने निघ्नेन विघ्नो बहुलबलबकध्वंसनाद्येन शोचद्**
**विप्रानुक्रोशपाशैरसुविधृतिसुखस्यैकचक्राजनानाम् ।**
**तस्मै ते देव कुर्मः कुरुकुलपतये कर्मणा च प्रणामान्**
**किर्मीरं दुर्मतीनां प्रथममथ च यो नर्मणा निर्ममाथ ॥ २२ ॥**

## कविकर्णामृतम्

हनुमदवतारव्यापारविज्ञापनानन्तरं श्रीभीमावतारव्यापारान् विज्ञापयन् मुख्यप्राणं प्रणमति– **जघ्न इति** ॥ हे **देव** ॥ शोचन्तः शोकं कुर्वन्तः । ते च ते विप्राश्च । तेषु **अनुक्रोशपाशैः** कृपारज्जुभिः । 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः' इत्यमरः । निघ्नेन अधीनेन । 'अधीनो निघ्न आयत्तः' इत्यमरः । येन त्वया बहुलं अधिकं

बलं शक्तिर्यस्य । 'बलं सैन्यं बलं स्थौल्यं बलं शक्तिर्बलोऽसुरः' इति यादवः[६६] । तस्य बकस्य **ध्वंसनात्** हननाद्धेतोः ॥ **एकचक्राजनानां** एकचक्राग्राम-निवासिनाम् ॥ **असूनां** प्राणानाम् । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । विधृतिः धारणम् । तेन जातस्य सुखस्य विघ्नः अन्तरायः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ॥ **जघ्ने** हतः । हन्तेः कर्मणि लिटि 'अभ्यासाच्च' (पा.सू-७.३.५५) इति कुत्वम् । 'गमहन...' (पा.सू-६.४.९८) इत्यादिनोपधालोपः ॥ **अथ** अनन्तरम् । यः **दुर्मतीनां** दुष्टबुद्धीनां **प्रथमं** आदिभूतम् श्रेष्ठमित्यर्थः । ज्येष्ठवध-प्रतीकारं कर्तुकामं **किर्मीरं** नाम बकानुजं च ॥ **नर्मणा** परिहासेन । अनायासे-नेत्यर्थः ॥ **निर्ममाथ** निर्मथितवान् । 'मथे विलोडने' (क्वचिन्मन्थ् विलोडने इत्यपि पाठः तच्चिन्त्यम्) इति धातोर्लिटि णल् । 'अत उपधायाः' (पा.सू-७.२.११६) इत्युपधावृद्धिः ॥ **तस्मै** तथाविधमहिम्ने **कुरुकुलपतये** कुरुकुलस्वामिने ते तुभ्यम् ॥ **कर्मणा** कायव्यापारेण । चकारोऽनुक्तसमुच्चयार्थः । तेन मनसा वचसा च ॥ **प्रणामान्** नमस्कारान् **कुर्मः** कृतवन्तः स्मः ॥ २२ ॥

## बालबोधिनी

श्रीहनुमदवतारविज्ञापनानन्तरं श्रीभीमावतारव्यापारान् विज्ञापयन् श्रीमुख्यप्राणं प्रणमति– **जघ्न इति** ॥ हे देव । शोचन्तः शोकं कुर्वन्तो ये विप्रास्तेष्वनुक्रोशो दया स एव पाशा रज्जवस्तैर्निघ्नेनाधीनेन 'अधीनो निघ्न आयत्त' इत्यमरः । येन त्वया बहुलमधिकं बलं शक्तिर्यस्य स तथोक्तः स चासौ बकश्च तस्य ध्वंसनं विनाशस्तस्माद्धेतोरेकचक्रायाः एकचक्रानगर्याः जना एकचक्राजनास्तेषामसूनां प्राणानां विधृतिर्धारणम् । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । तेन जातं सुखम-सुविधृतिसुखं तस्य विघ्नोऽन्तरायः **जघ्ने** संहृतः । 'हन हिंसागत्योः' इत्यस्मात्कर्मणि लिट् । अथ यस्त्वं भवानिति वा । दुष्टा मतिर्बुद्धिर्येषां ते तथोक्तास्तेषां प्रथम-ममादिभूतं श्रेष्ठमित्यर्थः ॥ **किर्मीरं** किर्मीरनामकं बकानुजम् ॥ **नर्मणा** परिहासेन

---

६६. नायं यादवप्रकाशे उपलभ्यते । अन्यत्र क्वचित् स्यात् ।

'क्रीडा खेला च नर्म च' इत्यमरः । अनायासेनेत्यर्थः ।। **निर्ममाथ** मथितवान् । 'मन्थे विलोडने'(मथे विलोडने इत्येव पाठः साधुः) लिट् । तस्मै तथाविधमहिम्ने । कुरोः कुरुनाम्नो राजर्षेः कुलं गोत्रं तस्य पतये स्वामिने कुरुकुलोत्पन्नेषु श्रेष्ठायेत्यर्थः । ते तुभ्यं कर्मणा च कायव्यापारेण च । चकारोऽनुक्तसमुच्चयार्थः । तेन मनसा वचसा चेति लभ्यते । प्रणामान् नमस्कारान् कुर्मः कृतवन्तः स्मः ।। २२ ।।

## मन्दबोधिनी

इदानीं श्रीभीमावतारासाधारणव्यापारान् प्रणमति– **जघ्न इति** ।। **हे देव** ।। स्तुत्य मुख्यप्राण ।। **वयम्** ।। **तस्मै** । तथाविधमहिम्ने । **कुरुकुलपतये** ।। कुरुकुलस्वामिने ।। **तुभ्यम्** ।। **कर्मणा** । कायव्यापारेण । चशब्दोऽनुक्तसमुच्चये । वचसा मनसा च ।। **प्रणामान्** । नमस्कारान् ।। **कुर्मः** ।। कुर्महे । 'डुकृञ् करणे' इत्यतो लट् परस्मैपदम् । करोमि कुर्वः कुर्मः इति रूपाणि । तस्मै कस्मै । **येन** । भीमसेनेन ।। **एकचक्राजनानाम्** ।। एकचक्रनामकनगरीस्थजनानाम् । **असुविधृतिसुखस्य** ।। असूनां विधृतिः धारणं तेन जायमानस्य सुखस्य । प्राणिनां जीवनसुखस्येति यावत् ।। **विघ्नः** ।। बकासुरक्रियमाणसर्वसंहारलक्षणो विघ्नः ।। **जघ्ने** ।। हतः 'हन हिंसागत्योः' इत्यतः कर्मणि लिडात्मनेपदम् । जघ्ने जघ्नाते जघ्निरे एवं रूपाणि ।। **कस्मात्** कारणात् ।। **बहुलबलबकध्वंसनात्** ।। बहुलं उत्कृष्टं बलं शक्तिर्यस्य स तथोक्तः । स चासौ बकः तन्नामकराक्षसश्च तस्य ध्वंसनात् हननात् । कथम्भूतेन येन **शोचद्विप्रानुक्रोशपाशैः** ।। शोचन्तश्च ते विप्राश्च शोचद्विप्राः । तेषु अनुक्रोशपाशैः कृपारज्जुभिः । **निघ्नेन** ।। अधीनेन । दयापरवशेनेति यावत् । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः' इत्यमरः । 'अधीनो निघ्न आयन्त' इति चामरः ।। **अथ** ।। बकवधानन्तरम् ।। यः ।। **दुर्मतीनाम्** ।। दुष्टबुद्धीनाम् ।। **प्रथमम्** ।। श्रेष्ठम् । ज्येष्ठवधप्रतीकारं कर्तुकामम् । **किर्मीरम्** ।। किर्मीरनामकबकानुजम् ।। **नर्मणा** ।। परिहासेन । अनायासेनेत्यर्थः ।। **निर्ममाथ** निर्मथितवान् । जघान । 'मन्थे विलोडन' (मथे विलोडने इत्येव पाठः

साधुः) इत्यस्माद्धतोर्लट् परस्मैपदम् । ममाथ मेथतुः मेथुः इति रूपाणि । भ्वादिगणस्थोऽयं ज्वलादिः ॥ २२ ॥

## भावप्रदीपिका

एवमाद्यावतारहनुमद्व्यापारान्निरूप्य अवसरप्राप्तद्वितीयावतारभीम- व्यापारान् वर्णयन् तं प्रणमति– **जघ्न इति** ॥ हे देव ॥ **शोचद्विप्रानुक्रोशपाशैः** ॥ शोचन्तः शोचयन्तः शोकं कुर्वन्तः ये विप्राः ब्राह्मणाः तेषु अनुक्रोशः दया कृपा दयानुकम्पा स्यादनुक्रोशोऽपीत्यमरः । शोचद्विप्रानुक्रोशपाशादिवृत्तैः ॥ **निघ्नेन** अधीनेन 'अधीनो निघ्न आयत्तः' 'स्वच्छन्दो गृह्यको व्याप्तो' इत्यमरः । येन त्वया कर्त्रा कर्तुस्तिङानभिहितत्वात् । 'कर्तृकरणयोस्तृतीया' (पा.सू-२.३.१८) इति कर्तरि तृतीया ॥ **बहुलबलबकध्वंसनात्** ॥ बहुलं बलं यस्य स तथोक्तः । 'बलं सैन्यं बलं स्थौल्यं बलं शक्तिर्बलोऽसुरः' इत्यभिधानात् तस्य बकस्य राक्षसस्य ध्वंसनात् हननात् ॥ **एकचक्राजनानां** एकचक्राख्यनगरस्थानां जनानाम् ॥ **असुविधृति-सुखस्य** असवः प्राणाः । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । तेषां विशिष्टा धृतिः धारणा । धृतिधारणधर्मयोः इत्यमरः । तया यत् सुखं तस्य । विघ्नः अन्तरायः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ॥ **जघ्ने** हतः । 'हन हिंसागत्योः' इत्यस्मात् कर्मणि लिट् । अथ बकहननान्तरं यस्त्वं दुर्मतीनां दुर्बुद्धीनां मध्ये ॥ **प्रथमं** आद्यं श्रेष्ठमिति यावत् । बन्धुवधप्रतीकारं कर्तुकामं **किर्मीरं** नाम बकानुजं च ॥ **नर्मणा** लीलया अनायासेन इत्यर्थः ॥ **निर्ममाथ** जघन्थ । 'मीञ् हिंसायां' इति धातोः निर् पूर्वात् लिटि थलि 'मिनाति मिनोति दीङां ल्यपि च' इति (पा.सू-६.१.५०) आत्वे द्वित्वादौ च कृते रूपम् । एकाजनुदात्तत्वेन इडभावः । क्र्यादिनियमात् प्राप्तसेटो इति प्रतिषेधे सति 'ऋतो भारद्वाजस्य' (पा.सू-७.२.६३) इति वैकल्पिकेडभावपक्षे रूपम् । 'पतिस्समास एव' (पा.सू-१.४.८) इति समस्तपतिशब्दस्य 'घि' संज्ञत्वात् 'घेर्ङिति'(पा.सू-७.३.१११) इति गुणः । एवं तस्मै **कुरुकुलपतये** कुरुवंशस्वामिने । 'कुलं वंशे गृहे स्वार्थे

जातिसम्पर्कयोरपि' इत्यभिधानम् । एवमवतीर्य अनेकानन्यसाध्यव्यापारकृते तुभ्यं मुख्यप्राणाय **कर्मणा** च कायव्यापारेणाऽपि । चशब्दोऽनुक्तसमुच्चयार्थः । तेन कायवाङ्मनोव्यापारैरित्यर्थः । वयं **प्रणामान्** नमस्कारान् **कुर्मः** इत्यर्थः । अत्र प्रणामपदसङ्कीर्तनेन 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः' (कृ.महार्णवे.श्लो-८८) इति तल्लक्षणं स्मारयति । कुर्म इत्युत्तमपुरुषबहुवचनप्रयोगेन तत्परिग्रहलब्धमहत्त्वसूचनेन तत्प्रणामकरण-शक्तत्वं दर्शितम् । सकृदनुष्ठितकर्मणो नोत्तमप्रसादसाधनत्वमिति दर्शयितुं प्रणामानिति बहुवचनप्रयोगः । एवं सदासन्निग्रहौपयिकसामर्थ्यवतोऽस्य प्रणामाः सर्वैः मुमुक्षुभिः कर्तव्या इति भावः ॥ २२ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इतः परं सप्तभिः श्लोकैर्भीमोपास्यं कृष्णं स्तौति– **जघ्न इत्यादि ॥** एकं चक्रं यस्यासावेकचक्रः सुदर्शनाख्यप्रधानचक्रः स चासावश्चेति । तस्य सम्बुद्धिः हे एकचक्र । यद्वा एक । चङ्क्रमणाच्चक्र । अ इति । अथवा दूरादाह्वाने एकचक्रा इति प्लुतः । दुर्मतीनां प्रथमं किर्मीरं अथ चशब्दाद्दुर्योधनादींश्च यो नर्मणा निर्ममाथ तस्मै कुरुकुलपतये भीमाय तं प्रतीति यावत् । देव । क्रीडादिगुणप्रापक । हे श्रीकृष्ण । शोचद्भिप्रेषु तदुपलक्षितसज्जनेष्वनुक्रोशपाशैर्निघ्नेन वशीकृतेन येन त्वया बहुलबलस्य बकस्य कंसानुगस्य ध्वंसनाद्धेतोर्जनानामसुविधृतिसुखस्य प्राणधारण-जन्यसुखस्य विघ्नो बकप्राप्तो जघ्ने परिहृतस्तस्मै तुभ्यं वयं कर्मणा चशब्दात् मनसा वचसा च प्रणामान् कुर्म इति ॥ २२ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– जघ्ने इति ॥** हे देव शोचद्विप्रानुक्रोशपाशैः निघ्नेन येन त्वया बहुलबलबकध्वंसनात् एकचक्राजनानां असुविधृतिसुखस्य विघ्नः जघ्ने अथ यः दुर्मतीनां प्रथमं किर्मीरं च नर्मणा निर्ममाथ तस्मै कुरुकुलपतये ते वयं कर्मणा प्रणामान् कुर्मः ।

**विग्रहवाक्यानि– जघ्ने ॥** 'हनहिंसागत्योः' लिडात्मनेपदं प्रथमपुरुषैकवचनम् ॥ **बहुलबलबकध्वंसनात्** ॥ बहुलं बलं यस्य सः बहुलबलः । बहुलबलश्चासौ बकश्च बहुलबलबकः । बकस्य ध्वंसनं तस्मात् बहुलबलबकध्वंसनात् ॥ **शोचद्विप्रानुक्रोशपाशैः** ॥ शोचन्तश्च ते विप्राश्च शोचद्विप्राः । शोचद्विप्रेषु अनुक्रोशः । शोचद्विप्रानुक्रोश एव पाशाः अनुक्रोशपाशाः तैः शोचद्विप्रानुक्रोशपाशैः ॥ **असुविधृतिसुखस्य** असूनां विधृतिः असुविधृतिः । असुविधृत्या जातं सुखं असुविधृतिसुखं । तस्य असुविधृतिसुखस्य ॥ **एकचक्राजनानां** एकचक्रायां स्थिता जनाः एकचक्राजनाः तेषां एकचक्राजनानां ॥ **कुर्मः** 'डु कृञ् करणे' लट् परस्मैपदं उत्तमपुरुषबहुवचनम् ॥ **कुरुकुलपतये** कुरूणां कुलं कुरुकुलम् । कुरुकुलस्य पतिः कुरुकुलपतिः । तस्मै कुरुकुलपतये ॥ **दुर्मतीनां** दुष्टा मतिर्येषान्ते दुर्मतयः । तेषां दुर्मतीनां ॥ **निर्ममाथ** निर् इत्युपसर्गः ममाथ 'मथे विलोडने' लिट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ २२ ॥

**निर्मृद्नन्नत्ययत्नं विजरवर जरासन्धकायास्थिसन्धीन्**
**युद्धे त्वं स्वध्वरे वा पशुमिव दमयन्विष्णुपक्षद्विडीशम् ।**
**यावत्प्रत्यक्षभूतं निखिलमखभुजं तर्पयामासिथासौ**
**तावत्यायोजि तृप्त्या किमु वद भगवन् राजसूयाश्वमेधे ॥ २३ ॥**

## कविकर्णामृतम्

अनन्यसाध्यो जरासन्धवधस्त्वयाऽकारि । तेन भगवतो महाप्रीतिरासीदिति विज्ञापयति– **निर्मृद्नन्निति** ॥ **हे विजरवर** विगता जरा येभ्यस्ते । विजराः देवाः । तेषु वरः श्रेष्ठः । तस्य सम्बुद्धिः । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः ॥ **जरासन्धकायास्थिसन्धीन्** जरासन्धस्य कायास्थ्नां शरीरकीकसानां सन्धीन् अवान्तरप्रदेशान् ॥ **अत्ययत्नं** अनतिप्रयत्नम् यथा भवति तथा ॥ **निर्मृद्नन्** भञ्जन् । त्वं **युद्धे** रणे **स्वध्वरे** वा महायाग इव । 'वा विकल्पोपमानयोः' इत्यमरः ॥ **विष्णुपक्षद्विडीशं** विष्णोः पक्षाः सहाया देवाः । 'पक्षः पार्श्व-

गरुत्साध्यसहायबलभित्तिषु' इत्यमरः[६७] । तेषां द्विषः द्वेषिणो दैत्याः तेषामीशं परिवृढम् । महादैत्यमित्यर्थः । तं **पशुमिव** यज्ञपशुमिव **दमयन्** मारयन् ॥ **प्रत्यक्षभूतं** चक्षुर्गोचरम् ॥ **निखिलमखभुजं** सकलयज्ञभोक्तारं श्रीविष्णुम् ॥ **यावत्** यथा ॥ **तर्पयामासिथ** ॥ 'तृप प्रीणने' इत्यस्माद्धातोर्लिटि 'कास्प्रत्ययात्......' (पा.सू-३.१.३५) इत्यादिनाऽऽम्प्रत्यये थलि रूपम् ॥ **हे भगवन्** श्रीवायो । त्वया असौ श्रीविष्णुः राजसूयेऽश्वमेधे च यागविशेषे **तावत्या तृप्त्या** प्रीत्या **अयोजि किमु?** योजितः किमु? नेत्यर्थः ॥ **वद** ब्रूहि । जरासन्धवधाद्भगवतो यावती प्रीतिः तावती तृप्तिः राजसूययागेऽश्वमेधयागे च नाभूदित्यर्थः ॥ २३ ॥

## बालबोधिनी

अनन्यसाध्यो जरासन्धवधस्त्वयैवाकारि । तेन भगवन्महाप्रीतिरासीदिति विज्ञापयति– **निर्मृद्नन्निति** ॥ **हे विजरवर** विगता जरा येभ्यस्ते विजरा देवादयस्तेषु वरः श्रेष्ठस्तत्सम्बुद्धिः । **जरासन्धकायास्थिसन्धीन्** जरया जराख्यया राक्षस्या सन्धा सन्धिर्यस्य स जरासन्धो जरासन्धाख्यो राजा तस्य यः कायः तस्य यान्यस्थीनि तेषां सन्धयोऽवान्तरप्रदेशास्तान् ॥ **अत्ययत्नम्** अत्यन्तमयत्नेन यथा भवति तथात्ययत्नम् ॥ **निर्मृद्नन्** मर्दयंस्त्वं ॥ **युद्धे** युद्धं रणं तस्मिन् । शोभनोऽध्वरः स्वध्वरस्तस्मिन् वा इव । 'वा विकल्पोपमानयोः' इत्यमरः ॥ **विष्णुपक्षद्विडीशं** विष्णोः पक्षाः सहायाः देवाः 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इत्यमरः । तेषां द्विषो द्वेषिणो दैत्यास्तेषामीशं स्वामिनं तं जरासन्धम् ॥ **पशुमिव** यज्ञपशुमिव ॥ **दमयन्** मारयन् सन् ॥ **प्रत्यक्षभूतं** चक्षुर्गोचरम् ॥ **निखिलमखभुजं** निखिलाः समस्ता ये मखा यज्ञास्तान् भुङ्क्ते इति तथोक्तस्तं श्रीविष्णुम् ॥ **यावत्** यथा ॥ **तर्पयामासिथ** प्रीणयामासिथ 'तृप प्रीणने' लिट् । हे भगवन् श्रीवायो त्वयासौ श्रीविष्णुः । राजसूयश्चाश्वमेधश्च राजसूयाश्वमेध-

---

**६७. लिपिकृत्प्रमादोऽयम् । नेदममरवचनम् । इत्यमरः इत्यत्र इति यादवः इति पठितव्यम् ।**

स्तस्मिन्। 'सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावः। युवोरिति- रिसापकान्नपुंसकलिङ्गत्वाभावश्च। यद्वा राजसूयेन सहितोऽश्वमेधो राजसूयाश्व- मेधस्तस्मिन्निति ॥ **तावत्या तृप्त्या** प्रीत्या ॥ **आयोजि किं** योजितः किं नेत्यर्थः। 'युजिर् योगे' लुङ् ॥ **वद** ब्रूहि। जरासन्धवधाद्भगवतः श्रीकृष्णस्य यावती तृप्तिः सा राजसूययागेऽश्वमेधयागे च नाभूदित्यर्थः ॥ २३ ॥

## मन्दबोधिनी

अनन्यसाध्यो जरासन्धवधस्त्वयैव अकारि। तेन भगवतो महाप्रीतिरासीदिति विज्ञापयति– **निर्मृद्नन्निति** ॥ **हे विजरवर** ॥ विगता जरा येभ्यस्ते विजराः देवाः। तेषु वरः श्रेष्ठः। तस्य सम्बुद्धिः। हे मुख्यप्राण **त्वम्** ॥ **स्वध्वरे** वा ॥ **युद्धे** ॥ वाशब्द उपमायाम्। यज्ञस्थानीययुद्धे। 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः। 'वा विकल्पोपमानयोः' इत्यमरः ॥ **पशुमिव** ॥ यज्ञपशुमिव। जरासन्धम् ॥ **दमयन्** ॥ मारयन् सन्। कृष्णमिति शेषः। यावत् यथा अव्ययानामनेकार्थत्वात् ॥ **तर्पयामासिथ** ॥ प्रीणयामासिथ। तर्पयाम् इति आम्प्रत्ययान्तमव्ययम्। आसिथ। 'अस भुवि' इत्यतो लिट् परस्मैपदम्। आसिथ आसथुः आस इति रूपाणि ॥ **हे भगवन्** ॥ हे वायो। त्वया **असौ** श्रीकृष्णः ॥ **राजसूयाश्वमेधे** ॥ राजसूये अश्वमेधे च। राजसूयेन सहित- श्चासावश्वमेधश्च। राजसूयाश्वमेध इति मध्यमपदलोपी समासो वा। तस्मिन् यागविशेषे ॥ **तावत्या** ॥ तत्सदृशया ॥ **तृप्त्या** ॥ प्रीत्या ॥ **अयोजि किम्** ॥ योजितः किम्? युक्तः किमित्यर्थः। 'युजिर् योगे' इत्यतः कर्मणि लुङात्मने- पदम्। अयोजि अयोजिषातां अयोजिषतेति रूपाणि ॥ **त्वम्** ॥ **वद** ब्रूहि। 'वद व्यक्तायां वाचि' इत्यतो लोट् परस्मैपदम्। वद वदतात् वदतं वदतेति रूपाणि। तथा च विष्णुद्विण्निग्रहस्य परमधर्मत्वेन जरासन्धवधाद्भगवतो यावती प्रीतिः तावती प्रीतिः राजसूयाश्वमेधान्नाभूदिति भावः। कथम्भूतः त्वम् ॥ **जरासन्धकायास्थिसन्धीन्** ॥ जरासन्धस्य कायो देहः तस्य अस्थीनि तेषां

अस्थ्नां सन्धयः मर्मप्रदेशाः तान् । अत्ययत्नमिति क्रियाविशेषणम् । अनतिप्रयत्नं यथा स्यात्तथा ॥ **निर्मृद्नन्** ॥ भञ्जनं कुर्वन् । मुष्टिभिरिति शेषः । कथम्भूतं जरासन्धम् ॥ **विष्णुपक्षद्विडीशम्** ॥ विष्णोः पक्षाः सहायभूताः देवाः । विष्णुपक्षः सहायः येषान्ते तथा तेषां द्विषः द्वेषिणो दैत्यास्तेषां ईशः श्रेष्ठः तम् । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इत्यमरः । कथम्भूतं श्रीकृष्णम् ॥ **प्रत्यक्षभूतम्** ॥ चक्षुर्गोचरम् । पुनः कीदृशम् ॥ **निखिलमखभुजम्** ॥ निखिलाश्च ते मखाः यज्ञाश्च तान् भुङ्क्ते इति निखिलमखभुक् तं सर्वयज्ञभोक्तारमित्यर्थः ॥२३॥

## भावप्रदीपिका

विष्णुद्विण्णिग्रहस्य परमधर्मत्वं सूचयन् महायज्ञराजसूयाश्वमेधानुष्ठानादपि जरासन्धवधाद्भगवतोऽतिमहती प्रीतिः त्वया सम्पादितेति विज्ञापयति– **निमृद्नन्निति** ॥ **हे विजरवर** ॥ विगता जरा येभ्यस्ते विजराः देवाः । तेषु वरः । श्रेष्ठः विजरवरः । तस्य सम्बुद्धिः । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इत्यमरः । हे भगवन् सर्वभूतोत्पत्यादिज्ञ । अतोऽस्य जरानाम राक्षसीसंहितदेहासुरहन्तृत्वं नानुपपन्नमिति भावः । त्वं **जरासन्धकायास्थिसन्धीन्** ॥ जरया सन्धीयत इति जरासन्धः । तस्य कायो देहः । 'कायो देहः क्लीबपुंसोः' इत्यमरः । तस्य अस्थिसन्धीन् । अस्थ्नां सन्धीन् ॥ **अत्ययत्नं** अनतिप्रयत्नं यथा स्यात् तथा ॥ **निमृद्नन्** भङ्गं कुर्वन् । मुष्टिभिरिति शेषः ॥ **स्वध्वरे** युद्धे वा । शोभमानोऽध्वरः स्वध्वरः । तस्मिन् महायज्ञे । 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुः क्रतुर्मखः' इत्यमरः । वाशब्द उपमायाम् । वा विकल्पोपमानयोरित्यमरः । महायज्ञायमाने रणे इत्यर्थः ॥ **विष्णुपक्षद्विडीशम्** । विष्णुः पक्षे पार्श्वे समीपे येषां ते विष्णुपक्षाः देवाः । विष्णुरेव पक्षः प्रसन्नमनसा साध्यो येषामिति वा । पक्षः सहायः सहकारी येषामिति वा । विष्णुपक्षाः । वैष्णवाः देवादिसज्जनाः । विष्णुसर्वोत्तमत्वसाधकः सिद्धान्तो वा । विष्णुपक्षः तद्विषयकज्ञानं वा । 'पक्षपार्श्वगुरुसाध्यसहायबलवर्तिषु' इत्यमरः । तेषां द्विषः । द्वेषिणो दैत्याः । तेषामीशं स्वामिनम् । तं महादैत्यं

जरासन्धम् ॥ **पशुं** यज्ञीयपशुमिव **दमयन्** घातयन् । यथा यज्ञे प्रथमं मुष्टिभिः पशुदेहास्थिसन्धीन् भङ्क्त्वा पशुर्हन्यते तथा इत्यर्थः । अत्र अवयवौपम्यविवक्षया इव वा शब्दानेकत्वम् । प्रत्यक्षः प्रत्यक्षविषयो भूतः जातः 'सुप् सुपा' इति समासः । प्रत्यक्षभूतो विषयतया प्राप्त इति वा प्रत्यक्षभूतः । तं चक्षुर्गोचरमित्यर्थः । निखिलमखभुजं सकलयज्ञभोक्तारं श्रीकृष्णम् । यावत् यथास्यात्तथा । यावदिति क्रियाविशेषणम् ॥ **तर्पयामासिथ** ॥ 'तृप् प्रीणने' इत्यस्मात् णिजन्तात्कर्तरि लिट् । राजसूयसहितोऽश्वमेधः राजसूयाश्वमेध इति मध्यमपदलोपी समासः ।

यद्वा राजसूयश्च अश्वमेधश्च इति इतरेतरद्वन्द्वोऽपि 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' (व्याकरण.महा.भा.अ-१,पाद-२.तत्रोदाहृतवचनम्) इत्युक्तेः एकवद्भावो बोध्यः । तस्मिन् राजसूये अश्वमेधे च यज्ञविशेषे । तया **तावत्या तृप्त्या** सन्तुष्ट्या असौ भगवान् श्रीकृष्णः **आयोजि किमु** ॥ योजितः किमु । नैवेत्यर्थः । 'युजिर्योगे' इत्यस्मात्कर्मणि लुङ् । हे भगवन् त्वं ॥ **वद** ब्रूहि । 'वद व्यक्तायां वाचि' लोट् । तथा च विष्णुद्विण्निग्रहस्य परमधर्मत्वेन जरासन्धवधात् भगवतो यावती प्रीतिरभूत्तावती राजसूयाश्वमेधाख्ययज्ञविशेषानुष्ठानान्नासीदिति भावः ॥ २३ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

भीमकृतजरासन्धहननेन कृष्णस्य यावती तृप्तिर्जाता तावती राजसूयाश्वमेधतोऽपि न जातेति विज्ञापयति– **निर्मृत्नन्निति** ॥ हे विजरवर भगवन् असौ भीमसेनो अत्ययत्नम् जरासन्धकायस्यास्थिसन्धीन् नितरां मृत्नन् विष्णुपक्षद्विषामीशं भवन्तं तं स्वध्वरे पशुमिव युद्धे दमयन् प्रत्यक्षभूतं निखिलयज्ञभोक्तारं भगवन्तं तर्पयामासिथ । तर्पयामास । तर्पणस्वातन्त्र्यं हरेरेवेति ज्ञापनाय पुरुषव्यत्ययः । तावत्या तृप्त्या तत्कृतराजसूयाश्वमेधे भवानयोजि किमु वदेत्यन्वयः । यद्वा असौ मुख्यप्राणे तदवतारभूते भीमसेने स्थितः सन् त्वं जरासन्धं दमयन् स्वात्मानं यावत्तर्पयामासिथ तावत्या तृप्त्या राजसूयाश्वमेधेऽयोजि किमु वदेति ॥ २३ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– निर्मृद्नन् इति ।।** हे विजरवर वायो युद्धे त्वं जरासन्ध-कायास्थिसन्धीन् अत्यत्नं यथा भवति तथा निर्मृत्नन् सन् विष्णुपक्षद्विडीषं तं स्वध्वरे पशुमिव दमयन् निखिलमखभुजं प्रत्यक्षभूतं श्रीकृष्णं यावत् तर्पयामासिथ हे भगवन् वायो राजसूयाश्वमेधे त्वया तावत्या तृप्या अयोजि किमु वद ।

**विग्रहवाक्यानि– अत्ययत्नम् ।।** अतिशयेन प्रयत्नरहितं यथा भवति तथा अत्ययत्नम् । क्रियाविशेषणाव्ययम् ।। **विजरवर** विगता जरा येभ्य ते विजराः । विजरेषु वरः विजरवरः । तस्य सम्बुद्धिः विजरवर ।। **जरासन्धकायास्थिसन्धीन्** जरासन्धस्य कायः जरासन्धकायः । जरासन्धकायस्य अस्थीनि जरासन्ध-कायास्थीनी । अस्थ्नां सन्धयः अस्थिसन्धयः तान् जरासन्धकायास्थिसन्धीन् । समीचीनश्चासौ अध्वरश्च स्वध्वरः । तस्मिन् स्वध्वरे ।। **विष्णुपक्षद्विडीशम्** विष्णोः पक्षाः विष्णुपक्षाः । विष्णुपक्षाणां द्विषः विष्णुपक्षद्विषः । विष्णुपक्षद्विषां ईशः विष्णुपक्षद्विडीशः । तं विष्णुपक्षद्विडीशम् ।। **प्रत्यक्षभूतम्** प्रत्यक्षत्वेन भूतः प्रत्यक्षभूतः । तं प्रत्यक्षभूतम् ।। **निखिलमखभुजं** निखिलाश्च ते मखाश्च निखिलमखाः निखिलमखान् भुनक्ति इति निखिलमखभुक् । तं निखिलमख-भुजम् ।। **तर्पयामासिथ** 'तृप् प्रीणन' इत्यस्य आम् अन्तात् धातोः अस भुवि लिट् परस्मैपदं मध्यमपुरुषैकवचनम् ।। **अयोजि** 'युजिर् योगे' लुङ् परस्मैपदं प्रथमपुरुषैकवचनम् । 'वद व्यक्तायां वाचि' लोट् परस्मैपदमध्यमपुरुषैकवचनम् ।। **राजसूयाश्वमेधे** राजसूयेन सहितः अश्वमेधः राजसूयाश्वमेधः । तस्मिन् राजसूयाश्वमेधे ।

**क्ष्वेलाक्षीणाट्टहासं तव रणमरिहन्नुद्गदोद्दामबाहो**
**बह्वक्षोहिण्यनीकक्षपणसुनिपुणं यस्य सर्वोत्तमस्य ।**
**शुश्रूषार्थं चकर्थ स्वयमयमथ संवक्तुमानन्दतीर्थ**
**श्रीमन्नामन् समर्थस्त्वमपि हि युवयोः पादपद्मं प्रपद्ये ।। २४ ।।**

## कविकर्णामृतम्

त्वदीयमत्यद्भुतं युद्धं श्रीविष्णुना त्वयाऽपि विना न केनापि वर्णयितुं शक्यत इति विज्ञापयंस्तयोश्चरणनलिनं शरणं करवाणीत्याह– **क्ष्वेलेति** ॥ **अरिहन्** अरीन् हन्तीत्यरिहा । तस्य सम्बुद्धिः । हे अरिहन् । हन्तेः क्विप् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा.सू.३.२.८७) इत्यस्य नियमस्य प्रायिकत्वात् । यथाऽऽह न्यासकारः– 'प्रायिकश्चायं क्विबिति नियमः । क्वचिदन्यस्मिन्नप्युपपदे स दृश्यते मधुहा । प्रायिकत्वं च वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते इति । अन्यत्र प्रयोगश्च 'हरिहयोऽरिहयोग विचक्षण' (रघुवंश-स-९,श्लो-२३) इति । **आनन्दतीर्थ-श्रीमन्नामन्** मुख्यप्राण ॥ **क्ष्वेलाक्षीणाट्टहासः** सिंहनादः । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । तया **अक्षीणः** प्रवृद्धः **अट्टहासः** महाहासः यस्मिंस्तम् ॥ **बह्व्यक्षोहिण्यनीकक्षपणसुनिपुणं** बह्व्यः अक्षोहिण्यो[६८] यस्मिंस्तस्यानीकस्य सैन्यस्य क्षपणे विनाशने सुनिपुणः अतिकुशलस्तं रणं युद्धम् ॥ **यस्य सर्वोत्तमस्य श्रीविष्णोः शुश्रूषार्थं** सेवार्थं **चकर्थ** कृतवानसि ॥ **उद्गदोद्दामबाहो** उद्गदा उत्कृष्टगदा । तथा उद्दामः उच्छृङ्खलः बाहुः यस्य तस्य तव सम्बन्धिनि ॥ **इह** अस्मिन् रणे विषये ॥ **अयं** सर्वोत्तमो विष्णुः स्वयं संवक्तुं सम्यक् प्रतिपादयितुं समर्थः शक्तः । त्वमपि समर्थो हि । अहं तु, सर्वोत्तमश्च त्वं च युवयोः । 'त्यदादीनि सर्वैर्नित्यम्' (पा.सू-१.२.७२) इति युष्मदः शेषः ॥ **पादपद्मं** चरणनलिनं **प्रपद्ये** शरणं गच्छामि ॥ २४ ॥

## बालबोधिनी

त्वदीयमद्भुतं युद्धं श्रीविष्णुना वायुना च विना न केनापि वर्णयितुं शक्यत इति विज्ञापयंस्तयोश्चरणनलिनसेवां करवाणीत्याह– **क्ष्वेलेति** ॥ **अरिहन्** अरीन् हन्तीत्यरिहा तत्सम्बुद्धिर्हे अरिहन् । हन्ते क्विप् 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा.सू-

---

६८. **अक्षौहिण्यः इत्यपि पाठः । अक्षादूहिन्यां वृद्धिर्वक्तव्या इति न वक्तव्यम् । अक्षोहिणीत्येव प्राचीनग्रन्थेषु प्रयोगनैय्यत्यात् ।**

३.२.८७) इत्यस्य नियमस्य प्रायिकत्वात् । यथाह न्यासकारः– 'प्रायिकश्चायं क्विप्' इति नियमः । क्वचिदन्यस्मिन्नप्युपपदे स दृश्यते बन्धुहा । प्रायिकत्वं च वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यत' इति । अन्यत्र प्रयोगश्च 'हरिहयोऽरिहयोग विचक्षण' (रघुवंश-स-९,श्लो-२३) इति । उत्कृष्टा या गदा तयोद्दाम उच्छृङ्खलो बाहुर्यस्य स तथोक्तस्तत्सम्बुद्धिः । उत्कृष्टा गदा यस्य स तत्सम्बुद्धिः ॥ **उद्गदोद्दामबाहो** उद्गद उद्दामबाहो इति भिन्नं पदद्वयं वा ॥ **क्ष्वेलाक्षीणाट्टहासः** क्ष्वेला सिंहनादः 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । तया अक्षीणः प्रवृद्धोऽट्टहासो यस्मिन्स तथोक्तस्तम् । बह्व्यो अक्षौहिण्यो यस्मिन् तत्तथोक्तं तादृशं यदनीकं सैन्यं तस्य क्षपणं विनाशनं तस्मिन् सुनिपुणोऽतिकुशलस्तं रणं युद्धम् । यस्य सर्वेभ्य उत्तमः सर्वोत्तमस्तस्य श्रीविष्णोः **शुश्रूषार्थं** सेवार्थं **चकर्थ** कृतवानसि । 'डुकृञ् करणे' लिट् । आनन्दतीर्थ इति श्रीमत् पूज्यं नाम यस्य स तथोक्तस्तत्सम्बुद्धिः ॥ **हे आनन्दतीर्थश्रीमन्नामन्** ॥ इहास्मिन् रणे विषये अयं सवोत्तमो व्यासः स्वयं **संवक्तुं** सम्यक् प्रतिपादयितुं समर्थः ॥ **अथ त्वमपि** समर्थो हि । अहं तु स च त्वं च युवां तयोर्युवयोः । 'त्यदादीनि सर्वैर्नित्यम्' (पा.सू-१.२.७२) इति युष्मदः शेषः । व्यासमध्वयोरित्यर्थः ॥ **पादपद्मं** पादौ पद्ममिव पादपद्मं तत् ॥ **प्रपद्ये** शरणं गच्छामि । 'पद गतौ' लट् ॥ २४ ॥

## मन्दबोधिनी

त्वदीयमद्भुतं युद्धं श्रीविष्णुना वायुना च विना येन केनापि वर्णयितुं न शक्यत इति विज्ञापयन् तयोश्चरणनलिनशरणं करवाणीत्याह– **क्ष्वेलेति** ॥ **अरिहन्** ॥ अरीन् शत्रून् हन्तीत्यरिहा तस्य सम्बुद्धिः । हे अरिहन् ॥ **उद्गदोद्दामबाहो** ॥ उत्कृष्टा चासौ गदा च उद्गदा । तया उद्दामबाहो । उच्छृङ्खलहस्त । त्वया सह प्रतियोद्धा कोऽपि नास्तीति भावः । हे उद्गद उद्दामबाहो इति पदद्वयं वा ॥ **हे श्रीमदानन्दतीर्थश्रीमन्नामन्** ॥ श्रीमदानन्दतीर्थेति श्रीमत् सम्पत्करं नाम यस्य तस्य सम्बुद्धिः । हे मुख्यप्राण ॥ **सर्वोत्तमस्य** ॥ तस्य विष्णोः ॥ **शुश्रूषार्थम्**

॥ सेवार्थम् ॥ **रणम्** ॥ युद्धम् ॥ **चकर्थ** ॥ कृतवानसि । 'डु कृञ् करणे' इति धातोर्लिट् परस्मैपदम् । सोऽयं विष्णुः ॥ **अथ** अनन्तरम् ॥ **त्वमपि** । त्वं च **तवरणम्** ॥ **संवक्तुम्** । सम्यग्वक्तुम् ॥ **समर्थः** ॥ **हि** ॥ यस्मादेव तस्मात्कारणात् । अहं **युवयोः** ॥ अयं च त्वं च युवां तयोः ॥ **पादपद्मं प्रपद्ये** ॥ शरणं यामि । 'पद्लृ गतौ' इत्यतो लडात्मनेपदम् पद्ये पद्यावहे पद्यामहे इति रूपाणि । कथम्भूतं रणम् ॥ **क्ष्वेलाक्षीणाट्टहासम्** ॥ क्ष्वेला सिंहनादः । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । तथा अक्षीणः प्रवृद्धः । अट्टहासो महाहासो यस्मिन् स तथोक्तः तम् । युद्धकाले शत्रूणां भयोत्पादनार्थं उच्चैर्हासं कृतवानिति भावः । पुनः कथम्भूतं रणम् ॥ **बह्वक्षौहिण्यनीकक्षपणसुनिपुणम्** । बह्वयः अक्षौहिण्यः यस्मिन् तत् बह्वक्षौहिणि । तच्च तत् अनीकं सैन्यं च तस्य क्षपणं विनाशनं तद्विषये ॥ **सुनिपुणः** कर्तुं सुतरां कुशलः तम् ॥ २४ ॥

## भावप्रदीपिका

अधुना तदीयमनन्यसाध्यमत्याश्चर्यतमं युद्धं वर्णयन् यत्प्रीत्यर्थं युद्धं तेन श्रीकृष्णेन त्वया च विना केनापि सामस्त्येन वर्णयितुं न शक्यते इति विज्ञापयन् अहं युष्मच्छ्रीचरणारविन्दद्वन्द्वमेव शरणं प्राप्तवानस्मीत्याह– **क्ष्वेलेति** ॥ **अरिहन्** अरीन् हन्तीति अरिहा । तस्य सम्बुद्धिः । हे अरिहन् । हन्तेः क्विप् । ब्रह्मभ्रूण-वृत्रेषु क्विप्' (पा.सू-३.२.८७) इत्यस्य नियमस्य प्रायिकत्वात् । तदुक्तं न्यासकृता । प्रायिकश्चायं क्विबिति नियमः । क्वचिदन्यस्मिन्नप्युपपदे स दृश्यते यथा मधुहा इति । प्रायिकत्वं चास्य वक्ष्यमाणबहुळग्रहणस्य पुरस्तादपकर्षाल्लभ्यते इति ॥ **हे उद्गद** ॥ उत्कृष्टा गदा यस्य स तथोक्तः । तस्य सम्बुद्धिः ॥ **हे उद्दाम-बाहो** ॥ दाम्नो बन्धात् उद्गतौ उद्दामौ प्रतिबन्धकरहितौ इति यावत् । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'(वा) इति समासः । उद्दामौ बाहू यस्य स तथोक्तः तस्य सम्बुद्धिः । उद्गदः उद्दामः बाहू यस्येति वा । उत्कृष्टया गदया उद्दामो वा बाहु-र्यस्येति वा । **हे आनन्दतीर्थश्रीमन्नामन्** ॥ आनन्दतीर्थेति श्रीमत् प्रशस्तार्थकं

नामधेयं यस्य स तथोक्तः । तस्य सम्बुद्धिः । एतैः सम्बोधनैरस्य दुष्टनिग्रह-शिष्टपरिपालनौपयिकसामर्थ्यं विशदयति । अत्र यच्छब्दतच्छब्दावध्याहार्यौ । यस्त्वम् । यस्य सर्वोत्तमस्य । सर्वस्मात् क्षराक्षरप्रपञ्चादुत्तमः उत्कृष्टः सर्वोत्तमः । 'पञ्चमीतिविभक्ते' (पा.सू-२.३.४२) इत्यत्र 'पञ्चमीति' योगविभागात् समासः ।

यद्वा सर्वजगत्कर्तृत्वाद्यनन्तकल्याणगुणपरिपूर्णः । 'असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् । सर्वस्य च परिज्ञानात्सर्वमेनं प्रचक्षते' (म.भा.उद्योग.प.अ-६९, श्लो-११) इति । अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः । (भ.गी.अ-११,श्लो-४०)इति भारते गीतावचनात् । उद्गतं तमश्शब्दोपलक्षितं दोषजातं यस्मादसौ उत्तमः । समासान्तोऽङ् । पारतन्त्र्याद्यशेषदोषरहितः । सर्वश्चासावुत्तमश्चेति सर्वोत्तम इति कर्मधारयसमासः । तस्य विष्णोः ॥ **शुश्रूषार्थं** शुश्रूषायै इदं क्रियाविशेषणं क्लीबत्वम् । शुश्रूषार्थं अर्थेन नित्यसमासः । सर्वलिङ्गता चेति समासः ॥ **क्ष्वेलाक्षीण्णाट्टहासं** क्ष्वेला सिंहनादः । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । तथा अक्षीणः प्रवृद्धः । अट्टहासो महाहासो यस्मिन् स तथोक्तः तम् ॥ **बह्वक्षोहिण्यनीकक्षपणसुनिपुणम्** ॥ बह्व्यः अक्षोहिण्यो यस्मिन् तत् बह्वक्षोहिणि । तच्च तदनीकं सैन्यं वा । 'वरूथिनी बलं सैन्यं चक्रं चानीकम-स्त्रियाम्' इत्यमरः । तस्य क्षपणं संहननम् । 'निस्तारणं निहननं क्षपणं परिवर्तनं' इत्यमरः । तद्विषये । सुनिपुणम् सुतरां निपुणम् । कुशलतरं कर्तुम् । रणं समरम् । 'अस्त्रियां समरानीकरणाः' इत्यमरः ॥ **चकर्थ** कृतवानसि । सोऽयं सर्वोत्तमो विष्णुः स्वयं साक्षादन्यप्रेरणां विना । स्वयं स्वतन्त्रोऽयं स्वरूपप्रवृत्तिप्रमिति-लक्षणसत्तात्रैविध्येऽन्यानपेक्षोऽयमिति भावः । अत्र रणमित्यनुषञ्जनीयम् । तव रणं **संवक्तुं** सम्यग्वक्तुं निरूपयितुं समर्थः । अथेत्यानन्तर्ये कात्स्न्र्ये च । अनन्तरं त्वमपि कात्स्न्र्येन रणं संवर्णयितुं समर्थः शक्तः । हेत्वर्थे वा । कश्चिदयमिह इति

पाठः । तत्रैवं योजना । तव इह अस्मिन् रणविषये संवक्तुमिति । अनेन रूपेण विशेषतः तत्वोपदेष्टृत्वादेवं विज्ञापनमिति द्रष्टव्यम् । यस्मादेवं तस्मादहं युवयोः विष्णुमुख्यप्राणयोः ॥ **पादपद्मं** पादः पद्ममिव पादपद्मम् तत् । हराविव गुरौ भक्तिरनुष्ठेयेति सूचयितुं एकवचनम् ॥ **प्रपद्ये** शरणं प्राप्तोऽस्मीत्यर्थः । 'पद्गतौ' कर्तरि लट् । दैवादिकत्वात् श्यन् ॥ २४ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

श्रीकृष्णकृतरणं स्तुत्वा तच्चरणं शरणं याति– **क्ष्वेलेति** ॥ हे अरिहन् उत्कृष्टया कौमोदकीनामकगदया उद्दामबाहो **स्वयम्** आसुष्ठु अयम् असदृश **अथ** दुःखभोग-रहित । श्रीमदानन्दतीर्थ । सुखनिधे श्रीमन्ति नारायणादिनामानि यस्येति श्रीमन्नामन् । श्रीकृष्ण । क्ष्वेलया सिंहनादेनाक्षीणाट्टहासं शत्रूणां बह्वक्षोहिण्यनीक-क्षपणे सुनिपुणं यं रणं त्वं चकर्थ तं संवक्तुं सम्यग्वर्णयितुं त्वमपि त्वमेव समर्थो नान्यः । अपिरवधारणे । यद्वा तं रणं संवक्तुमपि समर्थस्त्वमेव नान्यः । कर्तुं समर्थस्तु दूरोत्सारित इति भावः । एवंविधरणनिपुणस्य यस्य प्रकाशरूपस्य 'यः प्रकाशरूपः' इति भागवततात्पर्योक्तेः । सर्वोत्तमस्य युवयोः युवा चासौ युः युक्तो लक्ष्म्या चेति युवयुस्तस्य तव । शुश्रूषार्थं भक्तकृतसेवायाः स्वयमेव प्रयोजनरूपम् ।

यद्वा शुश्रूषया भक्तकृतोपासनालक्षणया अर्थ्यत इत्यर्थं ज्ञेयं गम्यं वा अयम् । 'अयः शुभावहो विधिः' इति वचनाच्छुभावहं दैवं पादपद्ममहं प्रपद्य इत्यन्वयः ॥ २४ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– क्ष्वेलेति** ॥ अरिहन् उद्गदोद्दामबाहो हे भीम क्ष्वेलाक्षीनाट्टहासं बह्वक्षौहिण्यनीकक्षपणसुनिपुणं तव रणं सर्वोत्तमस्य यस्य विष्णोः शुश्रूषार्थं त्वं चकर्थ अयं विष्णुः स्वयं संवक्तुं समर्थः अथ हि हे आनन्दतीर्थ श्रीमन्नामन् हे वायो त्वमपि संवक्तुं समर्थः अहं तु युवयोः पादपद्मं प्रपद्ये ।

**विग्रहवाक्यानि– क्ष्वेलाक्षीणाट्टहासम्** ॥ न क्षीणः अक्षीणः । क्ष्वेलया अक्षीणः क्ष्वेलाक्षीणः । अक्षीणः अट्टहासो यस्मिन् सः क्ष्वेलाक्षीणाट्टहासः । तं क्ष्वेलाक्षीणाट्टहासम् ॥ **अरिहन्** अरीन् हन्तीति अरिहा । तस्य सम्बुद्धिः अरिहन् ॥ **उद्गदोद्दामबाहो** उत्कृष्टा च सा गदा च उद्गदा । उद्गदया उद्दामः बाहुः यस्य सः । उद्गदोद्दामबाहुः । तस्य सम्बुद्धिः उद्गदोद्दामबाहो ॥ **बह्वक्षौहिण्यनीकक्षपणसुनिपुणम्** ॥ बह्व्यः अक्षौहिण्यः यस्मिन् तत् बह्वक्षौहिणि । बह्वक्षौहिणि च तत् अनीकं च बह्वक्षौहिण्यनीकम् । अनीकस्य क्षपणं बह्वक्षौहिण्यनीकक्षपणम् । क्षपणे सुनिपुणः । तम् ॥ **सर्वोत्तमस्य** सर्वेभ्यः उत्तमः सर्वोत्तमः । तस्य ॥ **चकर्थ** 'डु कृञ् करणे' लोट् परस्मैपदं मध्यम-पुरुषैकवचनम् ॥ **संवक्तुम्** सम्यक् वक्तुम् संवक्तुम् ॥ **आनन्दतीर्थश्रीमन्नामन्** श्रीमच्च तन्नाम च श्रीमन्नाम । आनन्दतीर्थ इति श्रीमन्नाम यस्य सः आनन्दतीर्थ श्रीमन्नामा । तस्य सम्बुद्धिः ॥ **पादपद्मम्** पादः पद्ममिव पादपद्मम् । तत् ॥ **प्रपद्ये** प्रेत्युपसर्गः 'पदलृ गतौ' लडात्मनेपदम् उत्तमपुरुषैकवचनम् ॥ २४ ॥

**द्रुह्यन्तीं हृद्गुहं मां द्रुतमनिलबलाद्द्रावयन्तीमविद्या-**
**निद्रां विद्राव्य सद्यो रचनपटुमथापाद्य विद्यासमुद्र ।**
**वाग्देवी सा सुविद्याद्रविणद विदिता द्रौपदी रुद्रपत्न्या-**
**द्युद्रिक्ता द्रागभद्राद्रहयतु दयिता पूर्वभीमाज्ञया ते ॥ २५ ॥**

## कविकर्णामृतम्

अनाद्यविद्यानिवृत्तिं सुविद्याप्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ **हे विद्यासमुद्र** तत्त्वज्ञानरत्नाकर ॥ **सुविद्याद्रविणद** ॥ सुविद्या अध्यात्मविद्या । सैव द्रविणं धनम् । तद् ददातीति सुविद्याद्रविणद ॥ **पूर्वभीम** प्राग् भीमसेनावतार ॥ **अनिल** श्रीवायो ॥ **द्रौपदी** द्रौपदीति **विदिता** विख्याता । तदुक्तम्– 'सा द्रौपदी नाम बभूव भूमौ' (म.भा.ता.नि.अ-२,श्लो-१६८,१६९) इति ॥ **रुद्रपत्न्या-द्युद्रिक्ता** ॥ रुद्रपत्नी पार्वती । सा रुद्रपत्नी

आदिर्यासां सौपर्णीवारुण्यादीनाम्[६९] । ताभ्यः उद्रिक्ता उत्कृष्टा । अथवा रुद्रपत्नी आदिर्यासां शच्यादीनाम् । ताभिरुद्रिक्ता उत्कर्षं प्राप्ता । तच्छरीरे तासामभिमानसद्भावात् । या ते **दयिता** प्रिया ॥ **वाग्देवी** भारती सा ॥ **द्रुह्यन्तीं** द्रोहं कुर्वाणाम् ॥ **हृद्रुहम्** हृदि रोहतीति हृद्रुट् ताम् ॥ **द्रावयन्तीं** इतस्ततो धनाद्यादित्सया गमनं कारयन्तीम् ॥ **अविद्यानिद्रां** अज्ञानतन्द्रीम् ॥ **ते** तव **आज्ञया** ॥ **द्रुतम्** शीघ्रं यथा भवति तथा ॥ **विद्राव्य** छित्वा ॥ **अथ** अनन्तरं मां **सद्योरचनपटुं** आशुकविताकरणकुशलं **आपाद्य** कृत्वा ॥ **द्राक्** झटिति । 'द्रागूझटित्यञ्जसाऽह्नाय' इत्यमरः ॥ **अभद्रात्** अशुभात् ॥ **बलात्** बलात्कारेण **रहयतु** वियोजयतु ॥ २५ ॥

## बालबोधिनी

अनाद्यविद्यानिवृत्तिं सुविद्याप्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ **विद्यासमुद्र** विद्याभिः समुद्र इव विद्यासमुद्रस्तत्सम्बुद्धिः ॥ **सुविद्याद्रविणद** सुविद्या शोभनाऽऽध्यात्मविद्या । सैव द्रविणं धनं तद्ददातीति तथोक्तस्तत्सम्बुद्धिः ॥ **पूर्वभीम** पूर्वं भीमः पूर्वभीमः तत्सम्बुद्धिः । मध्वाचार्यात्प्राग् भीमावतार ॥ **अनिल** वायो ॥ **द्रौपदी** द्रौपदीति ॥ **विदिता** प्रख्याता ॥ **रुद्रपत्न्याद्युद्रिक्ता** रुद्रपत्नी पार्वती सा आदिर्यासां सौपर्णीवारुण्यादीनां तास्तथोक्तास्ताभ्य उद्रिक्ता उत्कृष्टा । यद्वा रुद्रपत्नी आदिर्यासां शच्यादीनां तास्तथोक्तास्ताभ्य उद्रिक्ता उत्कर्षं प्राप्ता तच्छरीरे तासामभिमानसद्भावात् ॥ **ते** तव **दयिता** भार्या **वाग्देवी** भारती सा द्रौपदीरूपा भारती **द्रुह्यन्तीं** द्रोहं कुर्वाणाम् ॥ **हृद्रुहम्** हृदिरोहतीति हृद्रुट् ताम् ॥ **द्रावयन्तीम्** इतस्ततो धनाद्यादित्सया गमनं कारयन्तीम् ॥ **अविद्यानिद्रां** अविद्यैव निद्रा अविद्यानिद्रा ताम् । अज्ञानतन्द्रीमित्यर्थः ॥ **ते** तव **आज्ञया** द्रुतं शीघ्रं यथा भवति तथा **विद्राव्य** छित्वा ॥ **अथ** अनन्तरम् ॥ **मां सद्योरचनपटुं** आशु यद्रचनं कविताकरणं तस्मिन् पटुं कुशलम् **आपाद्य** कृत्वा ॥ **द्राग्**

---

६९. सुपर्णीवारुण्यादीनाम् इति सूक्तम् । प्रायो लिपिकृत्प्रमादः ।

झटिति ॥ **अभद्रम्** अशुभम् । तस्माद्बलात्कारेण ॥ **रहयतु** वियोजयतु । 'रह वियोगे' लोट् ॥ २५ ॥

## मन्दबोधिनी

अनाद्यविद्यानिवृत्तिं सुविद्याप्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे **अनिल** मुख्यप्राण ॥ **सा** ॥ भारती ॥ **ते** ॥ तव ॥ **आज्ञया** ॥ **अभद्रात्** ॥ अशुभव्यापारात् । जननमरणाद्यनर्थाद्वा ॥ **द्राक्** शीघ्रम् ॥ **रहयतु** विरहयतु । वियोजयत्वित्यर्थः । 'रह वियोगे' इत्यतो लोट् परस्मैपदम् । रहयतु रहयतात् रहयतां रहयन्तु इति रूपाणि । सा का ? या । तव **दयिता** प्रिया । किं कृत्वा ॥ **अविद्यानिद्राम्** ॥ अज्ञानलक्षणनिद्राम् ॥ **द्रुतम्** ॥ शीघ्रम् ॥ **विद्राव्य** ॥ द्रावयित्वा । पुनः किं कृत्वा । अथ अनन्तरम् । मां **सद्योरचनपटुम्** ॥ सद्यः सपदि तत्क्षण इत्यर्थः । भगवद्गुणगणप्रतिपादककविताकरणकुशलम् ॥ **आपाद्य** कृत्वा । भगवद्गुणगणप्रतिपादनसामर्थ्यप्रदत्वज्ञानं दत्वेत्यर्थः । कथम्भूतामविद्यानिद्राम् ॥ **द्रुह्यन्तीम्** ॥ द्रोहं कुर्वन्तीम् । क्लेशकरीमिति यावत् । स्वाश्रयजीवस्वरूपाच्छादिकामिति भावः । पुनः कीदृशीम् ॥ **हृद्रुहाम्** ॥ हृदि रोहति इति हृद्रुट् । ताम् हृद्रुहाम् । हृदि निगूढामित्यर्थः । पुनः कीदृशीम् ॥ **बलात्** ॥ स्वसामर्थ्यात् । **द्रावयन्तीम्** ॥ नानाहानिप्रापिकामित्यर्थः । यद्वा द्रावयन्तीं इतस्ततः धनादिलिप्सया गमनं कारयन्तीमित्यर्थः । कथम्भूता सा **वाग्देवी** ॥ वागभिमानिनी । यद्वा वाक् वागभिमानिनी देवी क्रीडादिगुणविशिष्टा । पुनः कथम्भूता ॥ **द्रौपदी** द्रौपदीति ॥ **विदिता** अयोनिजापि द्रुपदपुत्रीति विख्याता । पुनः कथम्भूता ॥ **रुद्रपत्न्याद्युद्रिक्ता** ॥ रुद्रपत्नी पार्वती सैव आदिर्यासां शच्यादीनां ताभ्यः उद्रिक्ता उत्कर्षं प्राप्ता । तच्छरीर एव तासामभिमानसद्भावात् । कथम्भूत । अनिल ॥ **विद्यासमुद्र** ॥ तत्त्वज्ञानरत्नाकर । अथवा विद्याभिः श्रुतिस्मृतीतिहासलक्षणादिभिः । समुद्र यथा समुद्रः सर्वसरितामाश्रयः पतिश्च तथा अयमपि सर्वविद्यानामाश्रयः पतिश्चेत्यर्थः । पुनः कथम्भूत अनिल ॥ **सुविद्याद्रविणद** ॥ सुविद्या अध्यात्मविद्या सैव द्रविणं धनं बलं वा ददातीति सुविद्याद्र-

विणदः । 'द्रविणं तु धनं बलम्' इत्यभिधानम् । पुनः कीदृग्विध ॥ **पूर्वभीम** ॥ पूर्वस्मिन् जन्मनि भीमसेनावतार ॥ २५ ॥

## भावप्रदीपिका

सर्वविद्या द्रौपदी यस्मात् सैव सरस्वती द्रौपद्याः सर्वविद्याभिमानित्वेनोक्तेः तत्प्रसादं विना तत्त्वज्ञानासम्भवात् तामनुकूलयिष्यन् अनाद्यविद्यानिवृत्तिं सुविद्या-प्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे **अनिल** ॥ अनति सर्वं चेष्टयतीत्यनिलः । अन प्राणे इत्यस्मात् इलच् प्रत्ययः । अनिना सर्वचेष्टकेन हरिणा । लीयते संयुज्यते इति वा । तेनानुगृह्यत इति वा ।

यद्वा यत्प्रसादं विना अन्येषां रुद्रादीनां इला वागादय न सन्ति असावनिलः । तस्य सम्बुद्धिः । 'भुवो वाचस्त्विडा इलाः' इत्यमरः ॥ **हे विद्यासमुद्र** ॥ विद्याभिः श्रुतीतिहासलक्षणाभिः समुद्र इव । यथा समुद्रः सर्वसरितामाश्रयः तत्पतिश्च तथाऽयं सर्वविद्यानां इत्यर्थः । यद्वा विद्याभिः सम्यगुपक्रमादिलिङ्गैः परममुख्यया वृत्त्या च उत् उत्तमं सर्वोत्कृष्टं सर्वोत्तमं विष्णुं रायति गायति इति वा । रैशब्द इत्यस्मात् 'आदेच उपदेशेऽशिति' (पा.सू-६.१.४५) इत्यात्वे कृते 'आतश्चोपसर्गे' (पा.सू-३.१.१३६) इति कप्रत्ययः ॥ **हे सुविद्याद्रविणद** ॥ निर्दुष्टं ब्रह्म विद्यालक्षणद्रव्यं द्रविणं बलं वा ददातीति । सुविद्याद्रविणदः । तस्य सम्बुद्धिः । 'द्रविणन्तु धनं बलम्' इत्यभिधानम् । 'डु दाञ् दाने' इत्यस्मात् 'आतोऽनुपसर्गे कः' (पा.सू-३.२.३) इति कप्रत्ययः । विद्यासमुद्रत्वादिति भावः ॥ **हे पूर्वभीम** ॥ पूर्वजन्मनि भीमः । पूर्वभीमः । तस्य सम्बुद्धिः । अतो द्रौपदीपतित्वं युक्तमिति भावः ॥ **ते** तव **दयिता** प्रिया ॥ **वाग्देवी** वागभि-मानिनी । वाक् भारती । 'ब्राह्मी गौ भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । देवी क्रीडादिगुणवतीति वा । **द्रौपदीति विदिता** द्रुपदस्य पाञ्चालराजस्य इयं द्रौपदी । अयोनिजाऽपि अनुग्रहेण तत्कन्यात्वं प्राप्ता इति भावः । यद्वा द्रवति गच्छतीति द्रुः वायुः ॥ **द्रौपदी** द्रुगतौ इत्यस्मात् क्विप् । तदधीनं पदं स्वरूपं

झटिति ॥ **अभद्रम्** अशुभम् । तस्माद्बलात्कारेण ॥ **रहयतु** वियोजयतु । 'रह वियोगे' लोट् ॥ २५ ॥

## मन्दबोधिनी

अनाद्यविद्यानिवृत्तिं सुविद्याप्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे **अनिल** मुख्यप्राण ॥ **सा** ॥ भारती ॥ **ते** ॥ तव ॥ **आज्ञया** ॥ **अभद्रात्** ॥ अशुभ-व्यापारात् । जननमरणाद्यनर्थाद्वा ॥ **द्राक्** शीघ्रम् ॥ **रहयतु** विरहयतु । वियोजय-त्वित्यर्थः । 'रह वियोगे' इत्यतो लोट् परस्मैपदम् । रहयतु रहयतात् रहयतां रहयन्तु इति रूपाणि । सा का ? या । तव **दयिता** प्रिया । किं कृत्वा ॥ **अविद्यानिद्राम्** ॥ अज्ञानलक्षणनिद्राम् ॥ **द्रुतम्** ॥ शीघ्रम् ॥ **विद्राव्य** ॥ द्रावयित्वा । पुनः किं कृत्वा । अथ अनन्तरम् । मां **सद्योरचनपटुम्** ॥ सद्यः सपदि तत्क्षण इत्यर्थः । भगवद्गुणगणप्रतिपादककविताकरणकुशलम् ॥ **आपाद्य** कृत्वा । भगवद्गुणगणप्रतिपादनसामर्थ्यप्रदत्वज्ञानं दत्वेत्यर्थः । कथम्भूता-मविद्यानिद्राम् ॥ **द्रुह्यन्तीम्** ॥ द्रोहं कुर्वन्तीम् । क्लेशकरीमिति यावत् । स्वाश्रय-जीवस्वरूपाच्छादिकामिति भावः । पुनः कीदृशीम् ॥ **हृद्रुहाम्** ॥ हृदि रोहति इति हृद्रुट् । ताम् हृद्रुहाम् । हृदि निगूढामित्यर्थः । पुनः कीदृशीम् ॥ **बलात्** ॥ स्वसामर्थ्यात् । **द्रावयन्तीम्** ॥ नानाहानिप्रापिकामित्यर्थः । यद्वा द्रावयन्तीं इतस्ततः धनादिलिप्सया गमनं कारयन्तीमित्यर्थः । कथम्भूता सा **वाग्देवी** ॥ वागभिमानिनी । यद्वा वाक् वागभिमानिनी देवी क्रीडादिगुणविशिष्टा । पुनः कथम्भूता ॥ **द्रौपदी** द्रौपदीति ॥ **विदिता** अयोनिजापि द्रुपदपुत्रीति विख्याता । पुनः कथम्भूता ॥ **रुद्रपत्न्याद्युद्रिक्ता** ॥ रुद्रपत्नी पार्वती सैव आदिर्यासां शच्या-दीनां ताभ्यः उद्रिक्ता उत्कर्षं प्राप्ता । तच्छरीर एव तासामभिमानसद्भावात् । कथम्भूत । अनिल ॥ **विद्यासमुद्र** ॥ तत्त्वज्ञानरत्नाकर । अथवा विद्याभिः श्रुतिस्मृतीतिहासलक्षणादिभिः । समुद्र यथा समुद्रः सर्वसरितामाश्रयः पतिश्च तथा अयमपि सर्वविद्यानामाश्रयः पतिश्चेत्यर्थः । पुनः कथम्भूत अनिल ॥ **सुविद्या-द्रविणद** ॥ सुविद्या अध्यात्मविद्या सैव द्रविणं धनं बलं वा ददातीति सुविद्याद्र-

विणदः । 'द्रविणं तु धनं बलम्' इत्यभिधानम् । पुनः कीदृग्विध ॥ **पूर्वभीम** ॥ पूर्वस्मिन् जन्मनि भीमसेनावतार ॥ २५ ॥

## भावप्रदीपिका

सर्वविद्या द्रौपदी यस्मात् सैव सरस्वती द्रौपद्याः सर्वविद्याभिमानित्वेनोक्तेः तत्प्रसादं विना तत्त्वज्ञानासम्भवात् तामनुकूलयिष्यन् अनाद्यविद्यानिवृत्तिं सुविद्या-प्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे **अनिल** ॥ अनति सर्वं चेष्टयतीत्यनिलः । अन प्राणे इत्यस्मात् इलच् प्रत्ययः । अनिना सर्वचेष्टकेन हरिणा । लीयते संयुज्यते इति वा । तेनानुगृह्यत इति वा ।

यद्वा यत्प्रसादं विना अन्येषां रुद्रादीनां इला वागादय न सन्ति असावनिलः । तस्य सम्बुद्धिः । 'भुवो वाचस्त्विडा इलाः' इत्यमरः ॥ **हे विद्यासमुद्र** ॥ विद्याभिः श्रुतीतिहासलक्षणाभिः समुद्र इव । यथा समुद्रः सर्वसरितामाश्रयः तत्पतिश्च तथाऽयं सर्वविद्यानां इत्यर्थः । यद्वा विद्याभिः सम्यगुपक्रमादिलिङ्गैः परममुख्यया वृत्त्या च उत् उत्तमं सर्वोत्कृष्टं सर्वोत्तमं विष्णुं रायति गायति इति वा । रैशब्द इत्यस्मात् 'आदेच उपदेशेऽशिति' (पा.सू-६.१.४५) इत्यात्वे कृते 'आतश्चोपसर्गे' (पा.सू-३.१.१३६) इति कप्रत्ययः ॥ **हे सुविद्याद्रविणद** ॥ निर्दुष्टं ब्रह्म विद्यालक्षणद्रव्यं द्रविणं बलं वा ददातीति । सुविद्याद्रविणदः । तस्य सम्बुद्धिः । 'द्रविणन्तु धनं बलम्' इत्यभिधानम् । 'डु दाञ् दाने' इत्यस्मात् 'आतोऽनुपसर्गे कः' (पा.सू-३.२.३) इति कप्रत्ययः । विद्यासमुद्रत्वादिति भावः ॥ **हे पूर्वभीम** ॥ पूर्वजन्मनि भीमः । पूर्वभीमः । तस्य सम्बुद्धिः । अतो द्रौपदीपतित्वं युक्तमिति भावः ॥ **ते** तव **दयिता** प्रिया ॥ **वाग्देवी** वागभि-मानिनी । वाक् भारती । 'ब्राह्मी गौ भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । देवी क्रीडादिगुणवतीति वा । **द्रौपदीति विदिता** द्रुपदस्य पाञ्चालराजस्य इयं द्रौपदी । अयोनिजाऽपि अनुग्रहेण तत्कन्यात्वं प्राप्ता इति भावः । यद्वा द्रवति गच्छतीति द्रुः वायुः ॥ **द्रौपदी** द्रुगतौ इत्यस्मात् क्विप् । तदधीनं पदं स्वरूपं

यस्याः सा । द्रुणा पद्यते पत्नीत्वेन प्राप्यते इति । स आश्रयो यस्याः सा इति वा । द्रुशब्दवाच्यभगवत्प्रतिपादकसुप्तिङन्तादिरूपपदात्मकवेदाभिमानिनी इति वा । सैव द्रौपदी । तद्विशदीकरणाय स्वार्थिकाणन्तात् ङीप् प्रत्ययः । इत्यनेन प्रकारेण श्रुत्यादिसिद्धेत्यर्थः ॥ **सा** भारती ॥ **ते** तव आज्ञया ॥ **द्रुह्यन्तीम्** द्रोहं कुर्वन्तीम् । द्रुहेः शत्रन्तात् 'उगितश्च' (पा.सू-४.१.६) इति ङीप् प्रत्ययः । 'शप्श्यनो-र्नित्यम्' (पा.सू-७.१.८१) इति नुम् ॥ आश्रमजीवविश्रामकत्वादिति भावः । तदेवोपपादयंस्तां विशिनष्टि **हृद्रुहमिति** ॥ हृदि मनसि रोहतीति हृद्रुट् । तां हृद्रुहन्तीमित्यर्थः । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । मनः आलम्ब्य मिथ्या-ज्ञानानर्थ सन्तानमुत्पादयन्तीमित्यर्थः ॥ **बलात्** सामर्थ्येन । 'स्थौल्यसामर्थ्यसौम्येषु बलं नाकाकसीरिणोः' इत्यमरः ॥ **द्रावयन्तीम्** । नानायोनीः प्रापयन्तीमित्यर्थः ॥ **अविद्यानिद्रां** विद्याविरोधित्वात् अविद्या भावरूपमज्ञानम् । तद्विविधम् । जीव-स्वरूपाच्छादकम् । जीवं प्रति ईश्वराच्छादकं चेति । तदभिमानितया सज्जीवस्य पिशाचवदनादिसम्बद्धं दुष्टस्त्रीजीवद्वयं च तच्छब्देन गृह्यते । नितरां द्रायते कुत्सिता गतिः प्राप्यतेऽनया इति निद्रा । निपूर्वात् 'द्रा कुत्सायां गतौ' इत्यस्मात् क्विप् । अविद्या च सा निद्रा च इति कर्मधारयः । यद्वाऽविद्या निद्रेव । तद्वन्मोहप्रापकत्वात् । तां द्रुतं शीघ्रं विद्राव्य जीवस्वरूपाच्छादिकां विनाश्य जीवं प्रति ईश्वरस्वरूपावरणभूतां च अविद्यामपसार्येत्यर्थः । अत्र यद्यपि सामान्येनोक्तम् । तथापि 'श्रीः परा प्रकृतिः प्रोक्ता ब्रह्माणी त्वपरा ततः । उमा शचीमुखास्तस्या अवराः सम्प्रकीर्तिताः । अथाऽन्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणा-च्छादिकात्वेका परमाच्छादिका परा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याधूय(व्याघुट्य)मोक्षपदवीं ददाति पुरुषोत्तमः । अजे द्वे अपि ते प्रोक्ते अनन्ताच्छादिनी हरेः । न विष्णुं छादयत्येषा तज्ज्ञानं छादयेत्परम् । जीवस्यैव तु तत्रापि ब्रह्मादेरस्ति सा क्वचित् । सर्वावरे ते प्रकृती सततं दुःखितेऽपि च । पिशाचवत्समुद्दिष्टे पुरुषस्याधिकारिणः । प्रेरिकास्तु तयोर्देव्यः इन्दिराद्याः सुखात्मिकाः' इति महातत्वविवेकवचनमादाय अयमर्थविशेषः सिद्धः ॥ **अथ**

अनन्तरम्। 'अथाथोऽनन्तराप्यर्थे विकल्पारम्भमङ्गळे' इत्यभिधानम् ॥ **सद्यः** सपदि। 'सद्यः सपदि तत्क्षण' इत्यमरः। मां **रचनपटुं** वेदादिबन्धदक्षम् ॥ **आपाद्य** सम्पाद्य। द्राक् **द्रुतम्** ॥ सद्यो 'द्राक् मंक्षु च द्रुतम्' इत्यमरः ॥ **अभद्रात्** अमङ्गलात् जननमरणाद्यनर्थात्। 'मङ्गलं भगवान्विष्णु' इति वचनात्। तद्विरोधिनो दुःखसङ्गादिति वा। 'तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते' इत्युक्तेः ॥ **रहयतु** विरहयतु। वियोजयत्वित्यर्थः। उपसर्गाणां धात्वर्थविशेषदत्वात्।

ननु अन्यासु उमाद्यविद्यादेवतासु सतीषु किमित्यसाधारण्येनैतद्ग्रहणमित्यतस्तां विशिनष्टि **रुद्रेति** ॥ रुद्रपत्नी आदिः यासां सौपर्ण्यादीनां ताः रुद्रपत्न्यादयः। ताभ्य उद्रिक्ता उत्कृष्टा। यद्वा द्रौपद्याः भवान्यादिपञ्चात्मकशरीरत्वात् कथं भारतीत्वमित्यत इदमुक्तम् ॥ **रुद्रपत्न्याद्युद्रिक्ता** रुद्रपत्नी आदिः यासां शचीश्यामलोषसाम्। उद्रिक्ता अतिरिक्ता। अतस्त्वयैकं देहत्वमिच्छामो देवि जन्मसु' (ग.पु-१.१.२१) इति ब्रह्मशक्ररुद्रादिप्रार्थितभारत्यनुग्रहेण तच्छरीरे तासां अभिमानमात्रसम्भवात् द्रौपद्या भारतीत्वं युक्तमिति भावः ॥ २५ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीमविद्यां विनाश्य सद्योरचनापाटवं दत्वा अभद्रं विनाशय इति प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे अनिल अनन्याश्रय। विद्यासमुद्र। सुविद्याद्रविणद। जगदादित्वात्पूर्व। अथ अपूर्वः कारणाभावादित्यपूर्व। भृतमत्वाद्भीम। श्रीकृष्ण। मां द्रुह्यन्तीं हृद्रुहं मम मनसि निरूढां मां बलान्नानायोनिषु द्रावयन्तीं अविद्यालक्षणनिद्रां द्रुतं विद्राव्य अथ मां सद्यो रचने पटुमापाद्य तव दयिता महालक्ष्मीस्तवाज्ञया द्राक् अभद्रात्संसारात् मां रहयतु वियोजयतु। कीदृशी। या विदिता लोके वेदे च प्रसिद्धा। द्रौपद्यादिस्त्रिभ्योऽप्युद्रिक्ता च ॥ २५ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– द्रुह्यन्तीमिति ॥** हे विद्यासमुद्र विद्याद्रविणद पूर्वभीम अनिल द्रौपदीति विदिता रुद्रपत्न्याद्युद्रिक्ता ते दयिता सा वाग्देवी द्रुह्यन्तीं हृद्रुहां, बलाद्रावयन्तीम् निद्रां ते आज्ञया द्रुतं विद्राव्य अथ मां सद्यो रचनपटुं आपाद्य द्राक् अभद्रात् रहयतु ।

**विग्रहवाक्यानि– हृद्रुहम्** हृदि रुहतीति हृद्रुहट् । तां हृद्रुहम् ॥ **अविद्यानिद्राम्** अविद्या एव निद्रा अविद्यानिद्रा । तां अविद्यानिद्राम् ॥ **सद्योरचनपटुम्** सद्यो रचनं सद्योरचनम् । सद्योरचने पटुः । तं सद्योरचनपटुम् ॥ **विद्यासमुद्र** विद्यायां समुद्र इव विद्यासमुद्रः । तस्य सम्बुद्धिः ॥ **रुद्रपत्न्याद्युद्रिक्ता** रुद्रस्य पत्नी रुद्रपत्नी । रुद्रपत्नी आदिर्यासां ता रुद्रपत्न्यादयः । रुद्रपत्न्यादिभिः उद्रिक्ता । रुद्रपत्न्याद्युद्रिक्ता ॥ **रहयतु** 'रह वियोजने' लोट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ **पूर्वभीम** पूर्वं भीमः पूर्वभीमः । तस्य सम्बुद्धिः ॥ **वाग्देवी** वाचां देवी वाग्देवी ॥ **सुविद्याद्रविणद** शोभमाना च सा विद्या च सुविद्या । सुविद्या एव द्रविणम् सुविद्याद्रविणं ददातीति सुविद्याद्रविणदः । तस्य सम्बुद्धिः ॥ २५ ॥

**याभ्यां शुश्रूषुरासीः कुरुकुलजनने क्षत्रविप्रोदिताभ्यां**
**ब्रह्मभ्यां बृंहिताभ्यां चितिसुखवपुषा कृष्णनामास्पदाभ्याम् ।**
**निर्भेदाभ्यां विशेषाद्विवचनविषयाभ्यामुभाभ्याममूभ्यां**
**तुभ्यं च क्षेमदेभ्यः सरसिजविलसल्लोचनेभ्यो नमोऽस्तु ॥ २६ ॥**

## कविकर्णामृतम्

अथ श्रीनारायण एव कृष्णत्वेनावतीर्णो व्यासस्त्वन्यो महामुनिरिति[७०] केषाञ्चिज्ज्ञानम् । तन्निरासार्थं तयोरभेदं प्रतिपादयन् तत्सेवार्थं भीमावतार इति

७०. महानृषिः इत्यपि पाठः ।

प्रकटयन् तेभ्यः प्रणमति– **याभ्यामिति** ॥ हे श्रीवायो ॥ **कुरुकुलजनने** कुरुवंशप्रादुर्भावे ॥ **क्षत्रविप्रोदिताभ्याम्** ॥ क्षतात् त्रायत इति क्षत्रम् । क्षत्रेण क्षत्रियत्वेन । विप्रेण विप्रत्वेन । उदिताभ्यां प्रादुर्भूताभ्याम् ॥ **चितिसुखवपुषा** ज्ञानानन्दस्वरूपेण **बृंहिताभ्यां** प्रवृद्धाभ्याम् । तथा च श्रुतिः– 'आ पादत आप्रणखात्सर्व एवानन्दः'[७१] (भाग.ता-१०.७५.४९) इति । सूत्रितं च भगवता बादरायणेन 'ॐ आनन्दमयोऽभ्यासात् ॐ' (ब्र.सू-१.१.१२) इति । अभियुक्तवचनं च

'सुखोल्लेखैरेव स्वरसमधुरैः साधुचरितः
शुभस्तोमैरेव स्तुतिसमुचितैः सम्भृततनुः ।
प्रभागुम्फैरेव प्रकृतिसुभगैः प्राप्तगरिमा
कृपापूरैरेव स्फुटमुपचितः काकुस्थपतिः' इति ।

**निर्भेदाभ्यां** भेदरहिताभ्याम् । 'मत्स्यकूर्मवराहाश्च....' इत्यारभ्य 'नैषां भेदः कथञ्चन' (म.भा.ता.नि-अ-२,श्लो.२५-२८) इत्यन्तेन सार्धश्लोकत्रयेण श्रीमदाचार्यैः श्रीमहाभारततात्पर्यनिर्णये द्वितीयाध्याये कृष्णव्यासादीनां स्वरूपाभेदः प्रतिपादितः ॥ **विशेषात् द्विवचनविषयाभ्यां** कृष्णव्यासेति[७२] वचनद्वयवाच्याभ्याम् ॥ **अमूभ्यां** मानसप्रत्यक्षाभ्यां उभाभ्यां द्वाभ्याम् ॥ **कृष्णनामास्पदाभ्याम्** ॥ कृष्णश्च कृष्णश्च कृष्णौ । 'सरूपाणामेकशेषः....' (पा.सू-१.२.६४) इत्येकशेषः । कृष्णाविति नामनी । तयोरास्पदाभ्यां कृष्णशब्दवाच्याभ्यामित्यर्थः । 'कृष्णाख्याः शमनव्यासधनञ्जयजनार्दनाः' इति विश्वः ॥ **ब्रह्मभ्यां** ब्रह्मशब्दवाच्याभ्याम् । ब्रह्मशब्दश्च विष्णावेव । 'यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् । तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' (महा.ना.उ.अनु-१.मन्त्र-३,४,६) इति श्रुतिः ।

---

७१. आप्रणखात्सर्व एव सुवर्णः इति प्रसिद्धोपलब्धश्रुतावानुपूर्वी ।

७२. कृष्णव्यासाविति इति पाठः स्वरसः साधुश्च ।

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ॥'

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।'

'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण चोच्यते'[७३] ॥

इत्यादिषु तस्मिन्नेव प्रसिद्धः ।' (ब्र.सू.भा.प्र.अ.प्र.पा.अधि-६,सूत्र-१२) **याभ्यां शुश्रूषुः** सेवाकरणेच्छुः **आसीः** ॥ **तुभ्यं श्रीभीमाय च** ॥ **क्षेमदेभ्यः** सुखदेभ्यः ॥ **सरसिजविलसल्लोचनेभ्यः** ॥ सरसिजवत् अम्भोजवत् विलसती शोभमाने लोचने येषां कृष्णव्यासभीमेभ्यः **नमोऽस्तु** ॥ 'नमः स्वस्ति'(पा.सू-२.३.१६) इत्यादिना नमःशब्दयोगे[७४] चतुर्थी ॥ २६ ॥

## बालबोधिनी

श्रीहरिरेव श्रीकृष्णत्वेनावतीर्णो व्यासस्त्वन्यो मुनिरिति कस्यचिन्मतं व्युदासयितुं तयोरभेदं प्रतिपादयंस्तत्सेवार्थो भीमावतार इति प्रकटयंस्तेभ्यः प्रणमति– **याभ्यामिति** ॥ **कुरुकुलजनने** कुरोः कुरुनाम्नो राज्ञः कुलं वंशस्तस्मिञ्जननं प्रादुर्भावस्तस्मिन् ॥ **क्षत्रविप्रोदिताभ्याम्** क्षतादनिष्टात्त्रायत इति क्षत्रम् । क्षत्रं च विप्रश्च क्षत्रविप्रौ ताभ्यामुदितौ प्रादुर्भूतौ ताभ्याम् । क्षत्रत्वेन विप्रत्वेन प्रादुर्भूताभ्यामित्यर्थः ॥ **चितिसुखवपुषा** चितिर्ज्ञानं सा च सुखं च ते एव वपुः स्वरूपं तेन ॥ **बृंहिताभ्यां** प्रवृद्धाभ्याम् ॥ **निर्भेदाभ्यां** निर्गतो भेदो याभ्यां तौ निर्भेदौ ताभ्याम् ॥ **विशेषात्** विशेषः स्वरूपभूतशक्तिविशेषस्तस्मात् ॥ **द्विवचनविषयाभ्याम्** द्वे एव वचने अयं कृष्णोऽयं व्यास इत्याभिलापरूपव्यवहारौ तयोर्विषयाभ्यां गोचराभ्याम् ॥ **उभाभ्यां** द्वाभ्याम् । कृष्णश्च कृष्णश्च कृष्णौ 'सरूपाणामेकशेष.....' (पा.सू-१.२.६४) इत्येकशेषः । **कृष्णनामास्पदाभ्यां** कृष्णाविति

७३. मूलमन्त्रेण वा यतिः ।

७४. नमःशब्दयोगात् इत्यपि पाठः ।

नामनी तयोरास्पदाभ्यां वाच्याभ्याम् ॥ **ब्रह्मभ्यां** पूर्णगुणत्वेन ब्रह्मशब्दवाच्याभ्याम् ॥ **याभ्याम्** ॥ **शुश्रूषुः** सेवाकरणेच्छुरासीत् ॥ **तुभ्यं** श्रीभीमाय च ॥ **क्षेमदेभ्यः** क्षेमं ददतीति क्षेमदास्तेभ्यः सुखदेभ्य इत्यर्थः ॥ **सरसिजविलसल्लोचनेभ्यः** जातानि सरसिजानि पद्मानि तानीव विलसन्ति शोभमानानि तादृशानि लोचनानि येषां ते तथोक्तास्तेभ्यः श्रीकृष्णव्यासभीमेभ्यो ॥ **नमोऽस्तु** 'नमः स्वस्ति....' (पा.सू-२.३.१६) इत्यादिना चतुर्थी ॥ २६ ॥

## मन्दबोधिनी

अत्र नारायण एव कृष्णत्वेनावतीर्णः । व्यासस्तु अन्यो महान् ऋषिरिति केषाञ्चिन्मतम् । तन्निरासार्थं तयोरभेदं प्रतिपादयन् तत्सेवार्थो भीमावतार इति प्रकटयन् तेभ्यः प्रणमति– **याभ्यामिति** ॥ हे मुख्यप्राण । तव **कुरुकुलजनने** ॥ कुरोः कुलं कुरुवंशः, तस्मिन् जननं जन्म तस्मिन् । कुरुवंशावतारे प्राप्ते सतीत्यर्थः 'जनुर्जननजन्मानि' इत्यमरः ॥ **याभ्यां** भगवद्रूपाभ्याम् । चतुर्थी द्विवचनमिदम् ॥ **शुश्रूषुः** । सेवाकरणेच्छुः ॥ **आसीः** अभवः । 'अस भुवि' इत्यतो लङ् परस्मैपदम् । आसीः आस्तं आस्त इति रूपाणि । यच्छब्दस्य तच्छब्दसापेक्षित्वात् ताभ्यामिति शेषः ॥ **उभाभ्याम्** ॥ **द्वाभ्याम्** ॥ **अमूभ्याम्** ॥ मनोविषयीभूताभ्यां एताभ्याम् ॥ **तुभ्यम्** भीमरूपाय । चेत्येवं युष्मभ्यम् नमोऽस्तु । 'अस भुवि' इत्यतो लोट् परस्मैपदम् । अस्तु–स्तात् स्तां सन्तु इति रूपाणि । कथम्भूताभ्यां याभ्याम् ॥ **क्षत्रविप्रोदिताभ्यां** चितिसुखवपुषेत्यस्यात्रापि सम्बन्धः ॥ **चितिसुखवपुषा** ॥ चितिश्च सुखं च चितिसुखमिति द्वन्द्वैकवद्भावः । चितिसुखं च तत् वपुश्च तेन ज्ञानानन्दाद्यात्मकशरीरेणैव क्षत्रविप्रोदिताभ्याम् । क्षत्रः । क्षत्रियो वसुदेवः । विप्रः पराशरः । ताभ्यामुदितौ उत्पन्नौ । न तु शुक्लशोणितात्मकदेहोत्पन्नावित्यर्थः । ताभ्यां 'न शुक्ररक्तप्रभवोऽस्य काय' (म.भा.ता.नि.अ-१२, श्लो-६१) इत्युक्तेः । पुनः कथम्भूताभ्याम् ॥ **ब्रह्मभ्याम्** परब्रह्मस्वरूपाभ्याम् । ब्रह्मशब्दवाच्याभ्यामित्यर्थः । 'अथ कस्मादुच्यते ब्रह्मेति

बृहन्तो ह्यस्मिन् गुणाः' (न्यायविवरणन्यायसुधोदाहृतवचनम्) इति श्रुतेः । अथवा **ब्रह्मभ्यां** ब्रह्मशब्दवाच्याभ्यामित्यर्थः । कुतः **बृंहिताभ्याम्** ॥ गुणैरिति शेषः । हेतुगर्भमिदम् । गुणैः बृंहिताभ्यां गुणपूर्णत्वाद्ब्रह्मशब्दवाच्याभ्यामित्यर्थः । पुनः कीदृशाभ्याम् । बृंहिताभ्यामित्यस्य चितिसुखवपुषेत्यनेन सम्बन्धः ॥ **चितिसुखवपुषा** ज्ञानानन्दात्मकशरीरेण **बृंहिताभ्याम्** अभिवृद्धाभ्याम् । 'बृह वृद्धौ' इति धातोः । शरीरेण व्याप्ताभ्यामित्यर्थः । 'परो मात्रया तन्वा वृधानः' (ऋ.वे.मं-७, सू-९९, मन्त्र-१) इति श्रुतेः । पुनः कीदृशाभ्याम् ॥ **कृष्णनामास्पदाभ्याम्** ॥ कृष्ण इति नाम्नः आस्पदाभ्यां आश्रयाभ्याम् । कृष्णशब्दवाच्याभ्यामित्यर्थः । 'कृष्णाख्याः श्यामलव्यासधनञ्जयजनार्दनाः' इति विश्वः । पुनः कथम्भूताभ्याम् ॥ **निर्भेदाभ्याम्** ॥ निर्गतो भेदो याभ्यां तौ निर्भेदौ । परस्परभेदरहिताभ्यामिति यावत् । पुनः कथम्भूताभ्याम् ॥ **विशेषात्** विशेषबलात् ॥ **द्विवचनविषयाभ्यां** कृष्णव्यासाविति द्विवचनस्य विषयाभ्याम् । द्विवचन-पदवाच्याभ्यामिति यावत् । कथम्भूतेभ्यः युष्मभ्यम् ॥ **क्षेमदेभ्यः** ॥ क्षेमं कुशलं ददातीति क्षेमदाः तेभ्यः । 'क्षेमं कुशलमस्त्रियाम्' इत्यमरः । योगक्षेमप्रदेभ्य इति वा । पुनः कीदृग्विधेभ्यः ॥ **सरसिजविलसल्लोचनेभ्यः** ॥ सरसिजवत् कमलवत् विलसती लोचने नेत्रे येषां ते तथोक्ताः तेभ्यः ॥ २६ ॥

## भावप्रदीपिका

इह विष्णोरवतारो यादव एव कृष्णो वासिष्ठस्तु कश्चिन्महान् ऋषिरिति केचिन्मिथ्यावादिनो आतिष्ठन्ते । तन्मतं निराकर्तुं तयोरत्यन्ताभेदं विज्ञापयन् तदुभयावतारसेवार्थोऽयं भीमावतार इति कथयन् तेभ्यः प्रणमति– **याभ्यामिति** ॥ हे देव । त्वं **कुरुकुलजनने** कुरोः राज्ञः वंशः कुरुवंशः । तस्मिन् जननं जन्म तस्मिन् कुरुवंशावतारे । 'जनुर्जननजन्मानि' इत्यमरः । क्षतः क्षतात् त्रायत इति क्षत्रम् । 'सुपीति योगविभागात् कप्रत्ययः । जात्या विशिष्टत्वादध्ययनादि-प्रकृष्टत्वाद्विप्रः ॥ **क्षत्रविप्रोदिताभ्यां** क्षत्रविप्रौ इत्युदितौ ताभ्यां शब्दाभ्यां च उदितौ ईरितौ । क्षत्रविप्राभ्यां वसुदेवपराशराभ्यां उदितौ आविर्भूतौ इति वा

क्षत्रविप्रोदितौ । ताभ्यां **ब्रह्मभ्यां** बृहज्ज्ञानानन्दादिगुणैः परिपूर्णाभ्याम् । भक्तेभ्यः स्वस्वयोग्यगुणपूरकाभ्यां वा । 'बृह बृहि वृद्धौ' इत्यस्मात् मनिन् प्रत्ययोऽ-मागमश्च । अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः । 'अथ कस्मादुच्यते परं ब्रह्म बृहति बृंहयति चेति' (अथर्वशिर.उ-४) श्रुतेः । नन्व-शरीरस्य कथं गुणित्वमित्यत आह ॥ **चितिसुखवपुषा** चितिश्च सुखं चेति चितिसुखे । ज्ञानानन्दौ । तावेव वपुः शरीरं तेन **बृंहिताभ्यां** समृद्धाभ्याम् । एवं तर्हि 'अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्' (का.उ.प्र.तृ.वल्ली-१५) इत्यादिश्रुतीनां का गतिरिति चेत् उच्यते । 'परोमात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' (ऋ.वे-मं-७.सू-९९.मन्त्र-१) 'आदित्यवर्णं तमसः परस्तात्' (म.ना.उ.हिरण्यगर्भसूक्तम्-२) 'आनन्दरूपममृतं यद्विभाति' (अथर्वण.उ.२.२.१०) 'आप्राणखात्सर्व एवानन्द' (भाग.ता.१०.७५.४९) इत्यादिश्रुतिभिः चिदानन्दशरीरस्य प्रमितत्वात् । अशरीरश्रुतिश्च जडशरीराभावपरेति गुणवत्वोपपत्तिरिति भावः ॥ **कृष्णनामास्पदाभ्याम्** ॥ कृष्णः इति नाम्नो वाच्यत्वेन विषयतया आश्रयाभ्याम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । नन्वेवं 'एकमेवाद्वितीयं ब्रह्म' (छां.उ-६.२.१) इति श्रुतिविरोध इत्यत आह **निर्भेदाभ्यामिति** ॥ स्वान्तर्भेदरहिताभ्याम् । तथात्वे 'वासिष्ठयादवौ' इत्यादिभेद-नियतद्विवचनव्यवहाराभावप्रसङ्ग इत्याशङ्कां सोपपत्तिकां परिहरन् तौ विशिनष्टि **विशेषाद् द्विवचनविषयाभ्यामिति** ॥ विशिष्यते व्यावर्त्यते व्यावृत्तिर्व्यवहारो वा जन्यतेऽनेनेति विशेषः । अघटितघटनापटीयसी अचिन्त्या ईश्वरशक्तिः । भेदहीनेऽपि वस्तुनि एकतरपरिशेषाभावादिनिर्वाहको धर्मो वा । तस्मात्तन्निमित्तात् उभौ इत्यादिद्विवचनगोचराभ्यामित्यर्थः । स्वान्तर्भेदहीनेऽपि ब्रह्मणि सोमाभावे पूतिकाग्रहणवत् भेदप्रतिनिधिविशेषबलेन तत्कार्यनिर्वाहाभ्युपगमान्न ब्रह्माद्वैत-श्रुतिविरोधः इति भावः ।

उक्तं हि– 'भेदहीनेत्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः' (अनु.व्या.१.१.१०९) इति । 'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्य-

योगतः । बहुसङ्ख्यागोचरं च विशेषादेव केवलम् । अभावो यत्र भेदस्य प्रमाणा-वसितोऽभवेत् । विशेषो नाम तत्रैव विशेषव्यवहारवान्' इति च । (गी.ता.नि-अ-११,श्लो-१४) **याभ्यां** भगवद्रूपाभ्यां **शुश्रूषुः** ।। 'श्रु श्रवणे' इत्यस्मात् सन्नन्तात् 'सनाशंसभिक्ष उः' (पा.सू-३.२.१६८) इति उप्रत्ययः । क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । 'प्रयोगतोऽवगन्तव्या अनेकार्था हि धातवः' (शब्दकल्पद्रुमोदाहृत दुर्गादासकृतमुग्धबोधटीकावचनम्) इति वचना-त्सेवार्थत्वं न विरुद्धम् ।। **आसीः** अभवः । 'अस भुवि' लङ् । ताभ्याम् । यच्छब्दस्य तच्छब्दापेक्षत्वात् ।। **उभाभ्यां** कृष्णाभ्यां ।। **तुभ्यम्** भीमाय च इति युष्मभ्यं **नमोऽस्तु** ।। अत्र अस्त्विति नमनस्य अविनाशिमोक्षाख्यकार्यरूपेण सत्तामाशास्ते । सामस्त्येन युष्मद्वीर्यवर्णनस्य कर्तुमशक्यत्वात् नमनमस्तु इति वा । नम्यताप्रयोजकं रूपान्तरं निरूपयंस्तं विशिनष्टि **क्षेमदेभ्यः** इति । क्षेमं कुशलं ददतीति क्षेमदाः । तेभ्यः । 'कुशलं क्षेममस्त्रियाम्' इत्यमरः ।। **सरसिजविलस-ल्लोचनेभ्यः** ।। सरसि जायत इति सरसिजं कमलम् । 'सप्तम्यां जनेर्डः' (पा.सू-३.२.९७) इति डप्रत्ययः । 'उपपदमतिङ्' (पा.सू-२.२.१९) इति समासः । 'तत्पुरुषे कृति बहुलम्'(पा.सू-६.३.१४) इति सप्तम्या अलुक् । तद्वद्विलसती शोभने लोचने नेत्रे येषां ते तथोक्ताः । तेभ्यः । अत्राद्यविशेषणेन इष्टदत्वं, द्वितीयेन अभिमुखत्वं च दर्शितम् । एवं च मुमुक्षुणा हरौ निरवधिकत्वेन भक्तिः गुरौ तु तच्छुश्रूषुत्वेन कार्या न तु साम्येन न वा ऐक्येनेति भावः ।। २६ ।।

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

भीमे परमानुग्रहकर्तारौ वासिष्ठयादवकृष्णौ तन्मूलरूपिणं नारायणं च वस्तुत्वात् नमति– **याभ्यामिति** ।। हे हरे कुरुकुले जननं यस्य तस्मिन् भीमसेने तद्विषये तमिति यावत् । शुश्रूषुस्तत्कृतसेवानुसारिपरमानुग्रहरूपभजनं कर्तुकामः सन् । 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' (भ.गी.४-११) इति गीतायां 'सेवयामि फलदानेन । न तु गुणभावेन' (गी.भा-४.११) इति तद्भाष्ये चोक्तेः । एकेनैव

रूपेण नालमिति **उभाभ्यां याभ्यां कृष्णनामास्पदाभ्यां** वासिष्ठयादवाभ्यां रूपाभ्यां आसीः आविरासीः अमूभ्यां **तुभ्यं** मूलरूपिणे चेत्येवं **क्षेमदेभ्यः सरसिजविलस-ल्लोचनेभ्यो** युष्मभ्यं नमोऽस्त्विन्वयः । कीदृशाभ्याम् । चितिसुखात्मकवपुषैव क्षत्रविप्रकुले उदिताभ्यां ॥ **बृंहिताभ्यां** ब्रह्मभ्यां गुणबृंहितत्वनिमित्ताद्ब्रह्म-शब्दवाच्याभ्याम् ॥ **निर्भेदाभ्याम्** ॥ परस्परमूलरूपाच्च भेदशून्याभ्याम् । तथापि विशेषबलादेव द्विवचनविषयाभ्याम् ॥ २६ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– याभ्यामिति** ॥ हे वायो कुरुकुलजनने क्षत्रविप्रोदिताभ्यां याभ्यां शुश्रूषुः सन् आसीः । चितिसुखवपुषा बृंहिताभ्यां ब्रह्मभ्यां कृष्णनामास्पदाभ्यां निर्भेदाभ्यां विशेषात् द्विवचनविषयाभ्यां याभ्यां शुश्रुषुः सन् आसीः ताभ्यां अमूभ्यां उभाभ्यां तुभ्यं च इत्येवं क्षेमदेभ्यः सरसिजविलसल्लोचनेभ्यः युष्मभ्यां नमोऽस्तु ।

**विग्रहवाक्यानि– शुश्रुषां** कर्तुमिच्छतीति शुश्रूषुः ॥ **आसीः** 'अस भुवि' लुङ् परस्मैपदं मध्यमपुरुषैकवचनम् ॥ **कुरुकुलजनने** कुरूणां कुलं कुरुकुलम् । कुरुकुले जननं तस्मिन् कुरुकुलजनने ॥ **क्षत्रविप्रोदिताभ्याम्** क्षत्रत्वेन विप्रत्वेन उदितौ क्षत्रविप्रोदितौ । ताभ्यां क्षत्रविप्रोदिताभ्याम् ॥ **चितिसुखवपुषा** चितिश्च सुखं च चितिसुखे चितिसुख एव वपुः चितिसुखवपुः । तेन चितिसुखवपुषा ॥ **कृष्णनामास्पदाभ्याम्** कृष्ण इति नाम कृष्णनाम । कृष्णनाम्नः । आस्पदौ कृष्णनामास्पदौ । ताभ्यां कृष्णनामास्पदाभ्याम् ॥ **निर्भेदाभ्याम्** निर्गतौ भेदौ याभ्यां तौ निर्भेदौ । ताभ्याम् निर्भेदाभ्याम् ॥ **द्विवचनविषयाभ्यां** द्वे च ते वचने च द्विवचने । द्विवचनयोः विषयौ द्विवचनविषयौ ताभ्यां द्विवचनविषयाभ्याम् ॥ **क्षेमदेभ्यः** क्षेमं ददतीति क्षेमदाः । तेभ्यः क्षेमदेभ्यः ॥ **सरसिजविलसल्लोचनेभ्यः** सरसि जायत इति सरसिजं । सरसिजवत् विलसन्ति सरसिजविलसन्ति । विलसन्ति लोचनानि येषां ते सरसिजविलसल्लोचनाः । तेभ्यः ॥ **अस्तु** 'अस भुवि' लोट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ २६ ॥

**गच्छन् सौगन्धिकार्थं पथि स हनुमतः पुच्छमच्छस्य भीमः**
**प्रोद्धर्तुं नाशकत्स त्वमुमुरुवपुषा भीषयामास चेति ।**
**पूर्णज्ञानौजसोस्ते गुरुतम वपुषोः श्रीमदानन्दतीर्थ**
**क्रीडामात्रं तदेतत्प्रमदद सुधियां मोहक द्वेषभाजाम् ॥ २७ ॥**

## कविकर्णामृतम्

प्रियाप्रीत्यर्थं सौगन्धिककुसुममानेतुं गच्छतो मध्ये मार्गे हनुमतः पुच्छमुद्धर्तुमशक्तिं तन्महाकायतो भीतिं च नटयतः श्रीभीमस्य तन्नटनं विदुषां हर्षार्थं द्वेषिणां मोहार्थं चेत्याह– **गच्छन्निति ॥ सौगन्धिकार्थं** सौगन्धिकाहरणार्थं **गच्छन् सः** भीमः ॥ **पथि** मार्गे ॥ **अच्छस्य** स्वच्छस्य **हनुमतः** हनुमदवतारस्य ॥ **पुच्छं** बालम् ॥ **प्रोद्धर्तुं** प्रकर्षेणोन्नमयितु **नाशकत्** अशक्तोऽभूदिति यत् । 'शक्लृ शक्तौ' इत्यस्माद्धातोर्लुङ् । 'लृदित्वात्' अङ् । **उरुवपुषा** महाकायेनोपलक्षितः **सः** हनुमान् **अमुं** श्रीभीमं **भीषयामास चेति** यत् । भीतिं प्रापितवानित्यर्थः । 'ञिभी भये' इत्यस्माद्धातोः 'हेतुमति च' (पा.सू-३.१.२६) इति णिचि, 'भियो हेतुभये षुक्' (पा.सू-७.३.४०) इति षुगागमः । अत एव वपुषा इतीत्थम्भूतलक्षणे तृतीया । न करणे । यदि करणे तृतीया स्यादुरुवपुर्भयस्य कारणं स्यान्न हेतुः प्रयोजकः । तदेतत् **द्वेषभाजां** द्वेषं भजतां **मोहक** भ्रामक ॥ **सुधियां** तत्वज्ञानवतां **प्रमदद** प्रकृष्टानन्दद ॥ **गुरुतम** गुरुश्रेष्ठ ॥ हे **श्रीमदानन्दतीर्थ** ॥ **ते** तव सम्बन्धिनोः ॥ **पूर्णज्ञानौजसोः** पूर्णे सम्पूर्णे ज्ञानौजसी ज्ञानबले ययोस्तयोः **वपुषोः** अवतारयोः ॥ **क्रीडामात्रं** क्रीडैव लीलैव ॥ २७ ॥

## बालबोधिनी

प्रियाप्रीत्यर्थं सौगन्धिककुसुममानेतुं गच्छतो मार्गमध्ये हनुमतः पुच्छमुद्धर्तुमशक्तिं तन्महाकायतो भीतिं च नटयतः श्रीभीमस्य तन्नटनं विदुषां हर्षार्थं द्वेषिणां मोहार्थं चेत्याह– **गच्छन्निति ॥ सौगन्धिकार्थम्** सौगन्धिकायेति सौगन्धिकार्थं सौगन्धिक-

पुष्पाहरणार्थमित्यर्थः ॥ **गच्छन् स** भीमः **पथि** मार्गे **अच्छस्य** स्वच्छस्य **हनुमतो** हनुमदवतारस्य पुच्छं बालम् । **प्रोद्धर्तुं** प्रकर्षेणोन्नमयितुं **नाशकत्** न शक्तोऽभूत् । 'शक्लृ शक्तौ' लुङ् इति । यत् स हनुमान् उरु च वपुश्च तेन समुद्रोल्लङ्घने यादृक् स्थूलशरीरं धृतं तादृशस्थूलशरीरेणेत्यर्थः ॥ **अमुं** भीमं **भीषयामास च** । भीतिं प्रापयामास च । 'ञिभी भये' लिट् । इति च यत् । तदेतत् ॥ **द्वेषभाजां** द्वेषां भजन्तीति द्वेषभाजस्तेषां दैत्यानामित्यर्थः ॥ **मोहक** मोहयतीति मोहक-स्तत्सम्बुद्धिर्मिथ्याज्ञानजनकेत्यर्थः ॥ **सुधियां** शोभना धीर्येषान्ते सुधियस्तेषां तत्त्वज्ञानिनामित्यर्थः ॥ **प्रमदद** प्रकर्षो यो मदः सन्तोषस्तं ददातीति तत्सम्बुद्धिः ॥ **गुरुतम** गुरुश्रेष्ठ ॥ हे **श्रीमदानन्दतीर्थ ते** तव । सम्बन्धिनोः ॥ **पूर्णज्ञानौजसोः** पूर्णे ज्ञानौजसी ज्ञानबले ययोस्ते तथोक्ते तयोः ॥ **वपुषोः** अवतारयोः केवलं **क्रीडामात्रम्** ॥ २७ ॥

## मन्दबोधिनी

द्रौपदीप्रीत्यर्थं सौगन्धिकाकुसुममानेतुं गच्छन्, मध्ये मार्गे हनुमतः पुच्छमुद्धर्तुं अशक्तिम्, तन्महाकायतो भीतिं च प्रदर्शयतः भीमस्य तत्प्रदर्शनं विदुषां हर्षार्थं द्वेषिणां मोहनार्थं चेत्याह– **गच्छन्निति** ॥ **हे श्रीमदानन्दतीर्थ** ॥ सौगन्धिका-पुष्पहरणार्थम् ॥ **गच्छन्** ॥ भीमः । **पथि** ॥ मार्गे ॥ **हनुमतः** ॥ **पुच्छं** बालम् ॥ **प्रोद्धर्तुम्** ॥ उद्धरणं कर्तुं **नाशकत्** ॥ शक्तो नाभूत् । 'शक्लृ शक्तौ' इत्यस्मा-द्धातोर्लुङ् परस्मैपदम् । अशकत् अशकतां अशकन् इति रूपाणि । **सः** हनूमान् ॥ **अमुम्** भीमम् ॥ **उरुवपुषा** ॥ उरु च तत् वपुश्च उरुवपुः तेन उरुवपुषा । महाकायेन न तु विशेषेण ॥ **भीषयामास च** ॥ भयं प्रापयामास च । कथम्भूतस्य हनुमतः ॥ **अच्छस्य** ॥ नैष्ठिकब्रह्मचर्यादिधर्मैः स्वच्छस्य ॥ **हे गुरुतम** ॥ अतिशयेन गुरो ॥ **इति** ॥ उक्तप्रकारेण ॥ **तदेतत्** ॥ पुच्छोद्धरणाशक्तत्वादिकम् ॥ **ते** ॥ तव ॥ **वपुषोः** ॥ अवतारयोः हनुमद्भीमसेनयोः ॥ **क्रीडामात्रम्** ॥ क्रीडैव । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । कथम्भूतयोः वपुषोः ॥ **पूर्ण-**

**ज्ञानौजसोः ॥** ज्ञानं च ओजः बलं च ज्ञानोजसी । पूर्णे ज्ञनोजसी ययोस्तौ तथोक्तौ तयोः । 'ओजो बलं च दीप्तौ च' इति विश्वः । कथम्भूत **श्रीमदानन्द-तीर्थ ॥ सुधियाम् ॥** शोभना धीर्येषां ते सुधियस्तेषां निर्मलबुद्धीनाम् **॥ प्रमदद ॥** आनन्दद । पुनः कथम्भूत । **द्वेषभाजाम्** । द्वेषं भजन्तीति द्वेषभाजः तेषाम् । मिथ्याज्ञानिनाम् । **मोहक** । मोहकर ।

एतत्सर्वं विस्तरमुक्तं वासिष्ठरामायणे–

अष्टाविंशद्वापरे तु कदाचित्स्वेच्छया हरिः ।
गन्धमादनमासाद्य शिश्ये कदलिकावने ॥ १ ॥

तदा द्यूतजिताः पार्था वनवासाय दीक्षिताः ।
वनेषु विचरन्तो वै तीर्थयात्रां प्रचक्रिरे ॥ २ ॥

चरतः सर्वतीर्थानां ते क्रमाद्गन्धमादनम् ।
ययुर्धौम्येन सहिता द्रौपद्या सहिता गिरिम् ॥ ३ ॥

तत्र सौगन्धिकं पुष्पं पाञ्चाली भीममिष्टदम् ।
प्रणयात्प्रार्थयामास जानन्ती तत्पराक्रमम् ॥ ४ ॥

तया स चोदितो वीरो भीमसेनो महाबलः ।
जगाम पुष्पाण्याहर्तुं पञ्चवर्णानि भारतः ॥ ५ ॥

निर्भयः सर्वलोकेषु कृष्णपादाम्बुजाश्रयः ।
गच्छन् सौगन्धिकार्थं स ददृशेऽध्वनि मारुतिम् ॥ ६ ॥

हनुमन्तं महाकायं मार्गमावृत्य संस्थितम् ।
तमपृच्छन्महाभूतं जानमानोऽपि लीलया ॥ ७ ॥

कस्त्वं वानरशार्दूल देहि मार्गं ममाचिरम् ।
इत्युक्तो हनुमान् प्राह नाहं मार्गनिरोधकः ॥ ८ ॥

मत्पुच्छो मार्गमावृत्य वर्तते नरसत्तम ।
अहं रामस्य दासो वै हनुमानिति विश्रुतः ॥ ९ ॥

पूजयन् रघुनाथस्य प्रतिमामिष्टदायिनीम् ।
वसामि भुवि सङ्गायन् यशो रामस्य निर्मलम् ॥ १० ॥

कस्त्वं ब्रूहि नरश्रेष्ठ किमर्थं त्वमिहागतः ।
पुच्छोद्धरणशक्तिर्मे नास्ति वृद्धतमो यतः ॥ ११ ॥

उद्धृत्य पुच्छं याहि त्वं शक्तो यदि नरोत्तम ॥
आञ्जनेयवचः श्रुत्वा कौन्तेयो वाक्यमब्रवीत् ॥ १२ ॥

अहं भरतवंशीयो भीमसेन इति श्रुतः ।
सौगन्धिकानि द्रौपद्यै पुष्पाण्याहर्तुमुद्यतः ॥ १३ ॥

इत्युक्त्वा तं हनुमन्तं पुच्छमुद्धर्तुमुद्यतः ।
न शशाक तदोद्धर्तुं तत्पुच्छं पाण्डुनन्दनः ॥ १४ ॥

प्रयत्नेनापि विप्रेन्द्र ततो विस्मयमागतः ।
हनुमान् भीषयामास भीमसेनं महाबलम् ॥ १५ ॥

उरुणा वपुषा तत्र तदा प्रतिभयेन च ।
एवं भीमेन क्रीडित्वा वायुसूनुर्महामतिः ॥ १६ ॥

पुच्छमुद्धृत्य याहीति तस्य मार्गं प्रदर्शयत् ।
प्रणम्य भीमसेनस्तं प्राह हर्षसमाकुलः ॥ १७ ॥ इति ॥ २७ ॥

## भावप्रदीपिका

ननु भीमस्य कथं मारुतावतारत्वम् । द्रौपद्यर्थं सौगन्धिकं पुष्पमानेतुं गच्छतो भीमस्य मध्ये मार्गं हनूमद्दर्शने सति तत्पुच्छोद्धारणाशक्तत्वात् । हनूमता च भीषितत्वादित्याशङ्क्य समादधत्तल्लीलां वर्णयति– **गच्छन्निति । हे गुरुतम ॥**

**हे श्रीमदानन्दतीर्थ ॥ हे सुधियां प्रमदद ॥** सुष्ठु धीः मतिः येषां ते सुधियः। तेषाम्। परापरतत्वज्ञानामित्यर्थः। 'धीः प्रज्ञाशेमुषी मतिः' इत्यमरः ॥ **प्रमदद** प्रमदं हर्षं ददातीति प्रमददः। तस्य सम्बुद्धिः। 'प्रमदसम्मदौ हर्षे' इति निपातनात्। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः ॥ **द्वेषभाजां** द्वेषिणां **मोहक** मोहयति। वैचित्र्यं प्रापयति इति मोहकः। तस्य सम्बुद्धिः। 'मुह वैचित्य' इत्यस्मात् ण्यन्तात् ण्वुल्। तथा च एतन्नटनं सतां हर्षार्थं असतां मोहार्थमिति भावः ॥ **सौगन्धिकार्थं** सौगन्धिकपुष्पानयनार्थं **गच्छन्** भीमः ॥ **पथि** मार्गे। वर्तमानस्य **अच्छस्य** मिथ्याज्ञानादिदोषरहितस्य ॥ **हनूमतः । पुच्छं प्रोद्धर्तुं** प्रकर्षेणोच्चलितुं **नाशकत्** ॥ अत्र यत्तदोः नित्यसम्बन्धात् तच्छब्दश्रवणाद्य-च्छब्दोऽध्याहार्यः। तथा चायमर्थः। शक्तो नाभूत् इति यत्। 'शक्लृ शक्तौ' लुङ्। लृदित्वादङ्। अथ यच्च **उरुवपुषा** महाकायेनोपलक्षितः स तु हनुमानपि अमुं भीमं **भीषयामास** भयं प्रापितवानिति। 'ञिभी भये' इत्यस्मात् धातोः 'हेतुमति च' (पा.सू-३.१.२६) इति णिचि कृते 'भियो हेतुभये षुक्' (पा.सू-७.३.४०) इति षुगागमे लिटि रूपमेतत्। अत्र उरुवपुषा इति 'इत्थम्भूतलक्षणे तृतीया' (पा.सू-२.३.२१)। न तु करणे। तथात्वे च करणस्य फलोपहितत्व-नियमात्। भीतिरूपफलोत्पादावश्यम्भावापत्तेः। तदेतत् पुच्छोद्धारणाशक्तत्वादि **ते** तव **वपुषोः** अवतारयोः **क्रीडामात्रं** क्रीडैव क्रीडामात्रम्। मात्रं कात्स्न्र्येऽ-वधारणे' इत्यमरः। किमित्येवं कथ्यत इत्यतस्ते रूपे विशिनष्टि **पूर्णेति** ॥ ज्ञानं तत्त्वज्ञानम्। ओजः दीप्तिर्बलं वा ॥ **पूर्णज्ञानौजसोः** पूर्णे ज्ञानौजसी ययोस्ते तयोः। ओजो दीप्तिः बलं वा। पूर्णे ज्ञानौजसी ययोस्ते तथोक्ते तयोः। 'ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारथ' इत्यमरः। अतो भीषणादेर्लीलामात्रत्वकल्पनं युक्तमिति भावः ॥ २७ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

कृष्णवेदव्यासयोर्निर्भेदत्वोक्तिप्रसङ्गाद्रामपरशुरामयोरपि निर्भेदत्वमुपपादयति– **गच्छन्निति** ॥ हे श्रीमदानन्दतीर्थ आनन्दनिधे ॥ **भीमो** दुष्टक्षत्रियभयंकरः

सुप्रसिद्धः परशुरामः **सौगन्धिकार्थम्** सुगन्धपूर्णदेहत्वात्सौगन्धिका सीता । 'गन्धद्वारां दुराधर्षाम्' (श्रीसूक्तम्-९) इति श्रुतेः सैवार्थो यस्य तम् । प्राप्तसीत-मिति यावत् । हनुमतो ज्ञानपूर्णस्य अच्छस्य निर्दोषस्य आनन्दमयस्य पुच्छम् । परब्रह्मभूतमिति यावत् । 'ब्रह्मपुच्छं प्रतिष्ठा' (तै.उ-ब्र.वल्ली-१२) इति श्रुतेः । श्रीरामम् । पथि गच्छन् प्रोद्धर्तुं वशीकर्तुमिति यावत् । नाशकत् । स रामस्तु । उरुवपुषा । बृहदाकारेण पूर्वहरिहरयोर्युद्धे हरिकरधृतेन तदानीं परीक्षणार्थं परशुरामदत्तेन शार्ङ्गनाम्ना धनुषा अमुं परशुरामं भीषयामास चेति । तदेतत्सर्वं पूर्णज्ञानौजसोस्तव गुरुतमवपुषोः रामपरशुरामरूपयोः क्रीडामात्रं न तु वास्तवम् । किमेतेन प्रयोजनमित्यत उक्तम् । हे सुधियां प्रमदद, द्वेषभाजां मोहकेति ॥२७॥

## श्रीनिवासतीर्थीया

**अन्वयः– गच्छन्निति ॥** सौगन्धिकार्थं गच्छन् सः भीमः पथि अच्छस्य हनुमतः, पुच्छं प्रोद्धर्तुं नाशकत् । स तु अमुं उरुवपुषा भीषयामास च । सुधियां प्रमदद द्वेषभाजां मोहक गुरुतम हे श्रीमदानन्दतीर्थ पूर्णज्ञानौजसोः ते तव वपुषोः इति एतत् क्रीडामात्रम् ।

**विग्रहवाक्यानि– अशकत् ॥** 'शक्लृ शक्तौ' लङ् परस्मैपदि प्रथमपुरुषैक-वचनान्तः ॥ **उरुवपुषा** उरु च तत् वपुश्च । तेन उरुवपुषा ॥ **भीषयामास** भीषयाम् आं प्रत्ययान्ताव्ययम् । अस भुवेर्लिट् परस्मैपदं प्रथमपुरुषैकवचनम् । 'भी भये' इति वा ॥ **पूर्णज्ञानौजसोः** ज्ञानं च ओजश्च ज्ञानौजसी । पूर्णे ज्ञानौजसी ययोस्ते पूर्णज्ञानौजसी । तयोः पूर्णज्ञानौजसोः । अतिशयेन गुरुः गुरुतमः । तस्य सम्बुद्धिः । श्रीमांश्चासौ आनन्दतीर्थश्च श्रीमदानन्दतीर्थः । तस्य सम्बुद्धिः ॥ **क्रीडामात्रम्** केवलं क्रीडा क्रीडामात्रम् ॥ **प्रमदद** प्रकर्षेण मदः प्रमदः । प्रमदं ददातीति प्रमददः । तस्य सम्बुद्धिः ॥ **सुधियाम्** शोभना धीर्येषां ते सुधियः । तेषां सुधियाम् ॥ **द्वेषभाजाम्** द्वेषं भजन्त इति द्वेषभाजः । तेषां द्वेषभाजाम् ॥ २७ ॥

**बह्वीः कोटीरटीकः कुटिलकटुमतीनुत्कटाटोपकोपान्**
**द्राक् च त्वं सत्वरत्वाच्छरणद गदया पोथयामासिथारीन् ।**
**उन्मथ्यातथ्यमिथ्यात्ववचनवचनानुत्पथस्थांस्तथान्यान्**
**प्रायच्छः स्वप्रियायै प्रियतमकुसुमं प्राण तस्मै नमस्ते ॥ २८ ॥**

## कविकर्णामृतम्

सौगन्धिकाहरणसमये त्वयाऽनेककोटिराक्षसान् गदायुद्धे निहत्यान्यान्दुर्मार्गवर्तिनस्तर्कैर्न्यकृत्य प्रियायै सौगन्धिककुसुमं प्रादायीति विज्ञापयन् प्रणतिं वितनुते– **बह्वीरिति** ॥ **शरणद** शरणं रक्षकं श्रीविष्णुं ददाति दर्शयति यस्तस्य सम्बुद्धिः शरणद । 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ हे **प्राण** श्रीवायो । यस्त्वं **बह्वीः** अनेकाः **कोटीः** सङ्ख्याः ॥ **कुटिलकटुमतीन्** कुटिला वक्रा कटुः क्रूरा मतिर्बुद्धिर्येषां तान् ॥ **उत्कटाटोपकोपान्** उत्कटौ प्रवृद्धौ आटोपः सम्भ्रमः कोपः क्रोधश्च येषां तान् । 'सम्भ्रमाटोपसंरम्भाः' इति यादवः ॥ **अरीन्** वैरिणः ॥ **द्राक्** शीघ्रम् ॥ **अटीकः** प्रहर्तुमगच्छः । 'टीकृ गतौ' इत्यस्माल्लुङ्[७५] । तथा तेन प्रकारेण **गदया पोथयामासिथ** मारयाञ्चकर्थ ॥ **उत्पथस्थान्** उन्मार्गवर्तिनः ॥ **अतथ्यं** मिथ्याभूतम् । मिथ्यात्वमुच्यते येन तन्मिथ्यात्ववचनम् । विश्वं मिथ्या दृश्यत्वाच्छुक्तिकारजतवदित्यादिकम् । तदेव वचनं भाषितं येषां तान् ।

अयमभिप्रायः । वृश्चिकभयात्पलायमानस्य महासर्पमुखपतनमिव स्वपक्षसाधनपारमार्थ्यानभ्युपगमे वादानधिकारमजानमाना ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनः सर्वशून्यवादिनश्च, 'भवद्भिर्जगन्मिथ्यात्वसाधकं वचनमुक्तम्, तन्मिथ्या सत्यं वा' इति विकल्पे सत्यत्वेऽद्वैतभङ्गप्रसङ्ग इत्यतथ्यमेव वदन्तीति । अन्यान् **सत्वरत्वात्**

---

७५. यद्यपि टीकतेरात्मनेपदत्वात् अटीकिष्ठाः इति स्यात् । तथापि अटीकः इत्याह । अत्र द्वयी गतिः । 'द्युभ्यो लुङि' (पा.सू-१.३.९१)इति द्युतादिषु टीकृधातुरपि पठनीयः । तेन लुङि परस्मैपदत्वे अटीकत् इति रूपम् । अथवा 'सर्वस्मादुभयं पदम्' इति मतानुसारेण परस्मैपदं सङ्गच्छते ।

तूर्णं प्राप्य । 'सत्वरं चपलं तूर्णम्' इत्यमरः । 'कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या'[७६] इति पञ्चमी ॥ **उन्मथ्य** भङ्क्त्वा ॥ **स्वप्रियायै** स्वकलत्राय द्रौपद्यै **प्रियतमकुसुमं** इष्टतमपुष्पं **प्रायच्छः** प्रादाः । प्रपूर्वात् 'दाण् दाने' इत्यस्माद्धातोर्लङि 'पाघ्रा........' (पा.सू.७.३.७८) इत्यादिना यच्छादेशः ॥ **तस्मै ते** तुभ्यं **नमः** ॥ २८ ॥

## बालबोधिनी

सौगन्धिकाहरणसमये त्वयानेककोटिराक्षसान् गदायुद्धे निहत्यान्यान् दुर्मार्गवर्तिनस्तर्कैर्न्यक्कृत्य प्रियायै सौगन्धिकाकुसुमं प्रादायि इति विज्ञापयन् प्रणतिं वितनुते– **बह्वीरिति** ॥ **शरणद** शरणं रक्षकं विष्णुं ददातीति दर्शयतीति शरणदस्तत्सम्बुद्धिः हे शरणद ॥ **हे प्राण** श्रीवायो । यस्त्वं **बह्वीरनेका कोटीः** कोटिसङ्ख्याकाः । कटुः क्रूरा मतिः कटुमतिः कुटिला वक्रा कटुमतिः क्रूरबुद्धिर्येषां ते तथोक्तास्तान् । आटोपः सम्भ्रमः स च कोपः क्रोधः स चाटोपकोपौ उत्कटावभिवृद्धावाटोपकोपौ येषां ते तथोक्तास्तान् । 'सम्भ्रमाटोपसंरम्भा' इति यादवः ॥ **अरीन्** वैरिणो **द्राक्** शीघ्रमटीकः प्रहर्तुमागच्छः । 'टीकृ गतौ' लङ् । तथा तेन प्रकारेण गदया **पोथयामासिथ** मारयाञ्चकर्थ । कुथिपुथिलुथिमथि हिंसासङ्क्लेशनयोर्लिट् । तथा तेन प्रकारेण उत्पथे उन्मार्गे तिष्ठन्तीत्युत्पथस्थाः तानधर्ममार्गनिरतानित्यर्थः ॥ **अतथ्यं** मिथ्याभूतं यन्मिथ्यात्ववचनं मिथ्यात्वमुच्यतेऽनेनेति मिथ्यात्ववचनं विमतं मिथ्या दृश्यत्वात् इत्यादिमिथ्यात्वप्रतिपादकानुमानवाक्यमित्यर्थः । तस्य वचनं भाषणं येषां ते तथोक्तास्तान् । विमतं मिथ्या दृश्यत्वात् इत्यादि परेण यन्मिथ्यात्वसाधकमनुमानमुच्यते तन्मिथ्या सत्यं वेति विकल्पे सत्यत्वेऽद्वैतभङ्गप्रसङ्ग इति मिथ्यात्वमेव तस्याद्वैतवादिनो वदन्तीति हेतोरतथ्यमिथ्यात्ववचनवचनास्त इत्यर्थः । अथवा अतथ्यं असत्यं मिथ्यात्ववचनवचनं येषां

---

७६. पञ्चमीविधाने 'ल्यब्लोपे कर्मण्युपसङ्ख्यानम्' इति जयादित्यपरिगृहीतो वार्तिकपाठः । ल्यब्लोपे कर्मण्यधिकरणे च इति कौमुदिकारः । व्याख्यानगृहीतपाठः कुत्रत्यः इति न ज्ञायते ।

ते तथोक्तास्तानिति । सकलं मिथ्येति भाषणस्यापि सकलमध्यपतित-त्वेन मिथ्यात्वाङ्गीकारादित्यर्थः ॥ **अन्यान्** पूर्वहतेभ्योऽन्यान् दैत्यविशेषानित्यर्थः । द्विवारं भारते सौगन्धिकायात्रायां दैत्यवधः प्रतिपादितः । सत्वरत्वात्तूर्णं प्राप्य 'सत्वरं चपलं तूर्णम्' इत्यमरः । ल्यब्लोपे कर्मण्यधिकरणे च इति पञ्चमी । उन्मथ्य हत्वा स्वप्रियायै स्वभार्यायै द्रौपद्यै च तत् कुसुमं च तत् सौगन्धिक-कुसुममित्यर्थः ॥ **प्रायच्छः** प्रादाः । 'दाण् दाने' लङ् । 'पाघ्राध्मा....' (पा.सू-७.३.७८) इत्यादिना यच्छादेशः ॥ **तस्मै ते** तुभ्यं **नमः** ॥ २८ ॥

## मन्दबोधिनी

सौगन्धिकाहरणसमये त्वया अनेककोटिराक्षसान् गदया युद्धे निहत्य अन्यान् दुर्मार्गवर्तिनः युक्तिभिः पराजित्य, प्रियायै सौगन्धिकाकुसुमं प्रादायीति विज्ञापयन् प्रणमति– **बह्वीरिति** ॥ हे मुख्यप्राण ॥ त्वं दैत्यानामिति शेषः ॥ **बह्वीः कोटीः** ॥ अनेकाः कोटीः । कोटिसङ्ख्याकाः अनेककोटिसङ्ख्याकदैत्यान् प्रतीति यावत् ॥ **द्राक्** झटिति ॥ **अटीकः** ॥ प्रथममागच्छः । 'टीकृ गतौ' इत्यतो लङ् परस्मैपदम् । अटीकः अटीकतं अटीकत इति रूपाणि ॥ **हे शरणद** ॥ 'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयत' इत्याभिधानम् । अथवा शरणं रक्षकं ददातीति शरणदः । विष्णुं दर्शयतीत्यर्थः । तस्य सम्बुद्धिः । 'शरणं गृहरक्षित्रोः' इत्यमरः । त्वं **सत्वरत्वात्** ॥ त्वरया सहितः सत्वरः तस्य भावस्तत्वं तस्मात् । शत्रुवेगापेक्षया अत्यन्तवेगसहितत्वादित्यर्थः ॥ **गदया अरीन्** ॥ तानिति शेषः । बहुकोटिसङ्ख्याकान् द्राक् शीघ्रम् ॥ **पोथयामासिथ** ॥ घातयांचकर्थ च । संहारं कृतवानित्यर्थः । कथम्भूतान् अरीन् ॥ **कुटिलकटुमतीन्** ॥ कुटिला वक्रा । कटुः क्रूरा मतिर्येषां ते तथोक्ताः तान् पुनः कथम्भूतान् ॥ **उत्कटाटोपकोपान्** ॥ उत्कटौ उल्बणौ । अटोपकोपौ आग्रहकोपौ येषां ते तथोक्तास्तान् । तथा **अन्यान्** ॥ मायिदैत्यान् ॥ **उन्मथ्य** ॥ उन्मथनं कृत्वा वाग्युद्धे पराजित्येत्यर्थः ॥ **स्वप्रियायै** द्रौपद्यै । **प्रियतमकुसुमम्** ॥ इष्टतमसौगन्धिकापुष्पम् ॥ **त्वम्** ॥ **प्रायच्छः** ।

प्रादः । 'दाण् दाने' इत्यतो लङ् परस्मैपदम् । अयच्छः अयच्छतं अयच्छत इति रूपाणि ॥ **हे प्राण ॥ तस्मै ते** तुभ्यम् ॥ **नमः** अस्तु । पुनः कथम्भूतान् **अन्यान् ॥ अतथ्यमिथ्यात्ववचनवचनान्** ॥ मिथ्यात्वमुच्यते येन तन्मिथ्यात्ववचनम् । विश्वं मिथ्या दृश्यत्वादित्यादिकम् । अतथ्यस्य मिथ्याभूतस्य मिथ्यात्ववचनस्य वचनं भाषणं येषां ते तथोक्ताः । मिथ्यात्वसाधकं दृश्यत्वादिकं मिथ्येति वदन्त इत्यर्थः तान् ।

अयमभिप्रायः ब्रह्मव्यतिरिक्तमिथ्यात्ववादिभिः भवद्भिः जगन्मिथ्यात्व-साधकं दृश्यत्वादिकमुक्तम् । तत्सत्यं मिथ्या वेति विकल्पिते सत्यत्वे अद्वैतभङ्ग इति मिथ्येति वदन्तीति । पुनः कथम्भूतान् ॥ **उत्पथस्थान्** ॥ पथो वेदमार्गात् उत्क्रान्तः उत्पथः । उत्पथे तिष्ठन्तीति उत्पथस्थाः तान् । दुर्मार्गस्थितानित्यर्थः ॥ २८ ॥

## भावप्रदीपिका

अथ सौगन्धिकपुष्पापनयनप्रतिबन्धकीभूतानेककोटिसङ्ख्याकराक्षसान् कांश्चिद्गदया निहत्य दुर्मार्गवर्तिनोऽन्यान् पाषण्डिनश्च सत्तर्केण तिरस्कृत्य सौगन्धिकपुष्पमाहृत्य प्रियायै दत्तवांस्त्वमिति विज्ञापयन् प्रणमति– **बह्वीरिति** ॥ हे शरणद । शरणं रक्षितारं विष्णुं मोक्षं ददातीति वा । मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयते इत्यभिदानात् दर्शयतीति शरणदः । तस्य सम्बुद्धिः । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'शरणं मोक्षं ददातीति वा । 'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयत' इत्यमरः इत्यभिधानम् ॥ **हे प्राण** सकलजगत्प्रवर्तक यस्त्वं **बह्वीः** ॥ 'वोतो गुणवचनात्' (पा.सू-४.१.४४) इति ङीष् ॥ **कोटीः** अनेककोटिसङ्ख्याकानित्यर्थः । कोटिशब्दस्य नित्यस्त्रीलिङ्गत्वात् न पुल्लिङ्गविशेषणविरोधः ॥ **कुटिलकटुमतीन्** ॥ कुटिला वक्रा, विपरीतविषयेति यावत् । कटुस्तीक्ष्णा, परोपद्रवहेतुरिति यावत् । अकार्यविषया स्वासाध्यफलविषया वा गतिर्येषां ते तथोक्तास्तान् ।

यद्वा कटुना मत्सरेण परोत्कर्षासहेन सहिता मतिः कटुमतिः । कुटिला कटुमतिः येषां ते तथोक्तास्तान् । तामसमतीनित्यर्थः । 'अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी' (भ.गी-अ-१८.श्लो-३२) इति गीतोक्तेः । 'रसे कटुः द्वयोः कार्ये त्रिषु मत्सरतीक्ष्णयोः' इत्यमरः ॥ **उत्कटाटोपकोपान्** ॥ उत्कटौ उल्बणावाटोपकोपौ सम्भ्रमक्रोधौ येषां ते तथोक्तास्तान् ॥ **अरीन्** शत्रून् ॥ **सत्वरत्वात्** त्वरया वेगेन सहितः सत्वरः । तस्य भावः तत्वं तस्मात् ।

यद्वा सत्वरत्वात् अविलम्बितत्वात् । कार्यविक्षेपरहितत्वादित्यर्थः । **द्राक्** शीघ्रम् ॥ **अटीकः** प्रहर्तुमगच्छः । 'टीकृ गत्यां' लङ् । गत्वा गदया **पोथयामासिथ च** ॥ घातयाञ्चकर्थ च । 'पुथि हिंसायां' लिट् । तथाशब्दः समुच्चये ॥ **अतथ्यमिथ्यात्ववचनवचनान्** ॥ अत्राद्यो वचनशब्दः करणसाधनः । द्वितीयस्तु भावसाधनः । उच्यते प्रतिपाद्यते साध्यते वाऽनेनेति वचनम् । 'करणाधिकरणयोश्च' (पा.सू-३.१.११७) इति करणे ल्युट् प्रत्ययः । मिथ्यात्वस्य वचनं मिथ्यात्ववचनम् । मिथ्यात्वसाधकं दृश्यत्वाद्यनुमान-मापाततोऽन्यथा प्रतीयमानश्रुतिवाक्यं चेत्यर्थः । अतथ्यं मिथ्याभूतम् । मिथ्यात्व-वचनमिति वचनं उक्तिः येषां ते तथोक्तास्तान् । 'ल्युट् च' (पा.सू-३.३.११५) इति भावे ल्युट् ॥ **उत्पथस्थान्** मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषत इति न्यायेन पन्थानं वेदमार्गं उत्क्रान्तं उत्पथमित्यर्थः ।

यद्वा उज्झितः सद्भिस्तिरस्कृतः श्रुत्यादिभिर्बाधितो वा पन्थाः उत्पथः । 'ऋक्पूरब्धूः पथामानक्षे' (पा.सू-५.४.७४) इति समासान्तोऽप्रत्ययः । तस्मिन् दुर्मार्गे तिष्ठन्तीति उत्पथस्थाः तान् । सुपिस्थः (पा.सू-३.२.४) इति कप्रत्ययः । अन्यान् तथा नामग्रहणायोग्यान् पाषण्डिनश्च ॥ **उन्मथ्य** सत्तर्केण भङ्गं गमयित्वा इत्यर्थः । अयमत्र भङ्गप्रापणकप्रकारः । अनेककोटिसङ्ख्याकराक्षसवधानन्तरं तत्पक्षीयपाषण्डिदुर्वादिभिः विश्वमिथ्यात्वसाधनाय विमतं मिथ्या दृश्यत्वात्

इत्यादिहेतुप्रयोगे कृते दुर्वादिहृदयविदारणकण्ठीरवायमाणः श्रीभीमसेनः किं मिथ्यात्वसाधनं सत्यं मिथ्या वा । आद्ये अद्वैतभङ्गप्रसङ्गात् । द्वितीय एवाङ्गीकार्ये शशविषाणवदर्थक्रियानर्हत्वप्रसङ्गेन विश्वमिथ्यात्ववत्साधकत्वासम्भवः । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन विश्वमिथ्यात्वसाधनस्य मिथ्यात्वे तत्सत्यत्वसाधनस्य सत्त्वापत्तिश्च । एवं तत्त्वमसीत्याद्यागमवाक्यस्य सत्यत्वेऽपसिद्धान्तात् । मिथ्यात्वेऽङ्गीकार्ये त्वप्रामाण्यप्रसङ्ग इत्याद्यनेकपक्षदूषण-सत्तर्कास्त्रैरुन्मथनं कृतवानिति ॥ **स्वप्रियायै** द्रौपद्यै ॥ **प्रियतमकुसुमं** इष्टतमं सौगन्धिकं पुष्पं **प्रायच्छः** प्रादाः । 'दाण् दाने' लङ् । 'पाघ्राध्मास्थाम्नादाण्-दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' (पा.सू-७.३.७८) इति यच्छादेशः । एवमवतारद्वयेऽनन्यसाध्यव्यापारकारिणे **तस्मै** मुख्यप्राणाय **ते** तुभ्यं श्रीमदानन्दतीर्थाय नमः । तथा चैहिकामुष्मिकसमस्तेष्ट-विघातकासुरनाशकत्वात् पुरुषार्थेप्सुना एतन्नमनमवश्यं कार्यमिति भावः । एतदप्ये-तन्मुख्यप्राणविद्यास्थश्लोकानां पृथग्विद्यात्वस्यापि सम्भवात् । एकविद्यात्वेऽपि देवताप्रशंसामात्रपरत्वेन इतरेतरसङ्गत्यभावो न दोषाय । तथापि सङ्गतिसम्भवे त्यागायोगात् इत्येव क्वचित्सङ्गतिः प्रदर्शितेति ज्ञेयम् ॥ २८ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

कृष्णकृतचरित्रान्तराण्यपि स्तुवन् तं प्रणमति– **बह्वीरिति** ॥ हे प्राण शरणद । कृष्ण । त्वं रैवतपर्वते बलपरीक्षणसमये **बह्वीः कोटीः** बहुकोटिसंख्याकान् **कुटिलकटुमतीन्** ॥ अत एव **उत्कटाटोपकोपान्** ॥ **अतथ्यमिथ्यात्ववचन-वचनान्** ॥ **अतथ्यं** अयथार्थं **मिथ्यात्ववचनं** तव बलवीर्यादीनां मिथ्यात्व-प्रतिपादकं वचनं येषां ते तथोक्तास्तान् । समरे अहमेव समर्थस्त्वं तु बलवीर्यादि-रहित इत्यादिरूक्षावचनं श्रावयत इति यावत् ॥ **उत्पथस्तान्** सन्मार्गमुत्क्रम्य स्थितान् । तथाशब्दो विशेषणसमुच्चये ॥ **अन्यान्** विरोधिनः नीचान् प्रत्यटीकः पुरस्तादगाः । गत्वा च गदया । तदुपलक्षितायुधजातेन तानुन्मथ्य द्राक् शीघ्रमेव

सत्वरत्वाद्धेतोः **पोथयामासिथ** दृढप्रहारं चकर्थ । अनन्तरं च **स्वप्रियायै** रुग्मिण्यै । हे प्रियतम कुसुमं नारदादानीतपारिजातपुष्पं प्रायच्छः । एतादृशाय ते तुभ्यं नमोऽस्त्विवति । नरकासुरसंहरणादिमाहात्म्यपि विज्ञापयति ॥ **बह्वीरिति ॥ हे प्रियतम** शरणद प्राण श्रीकृष्ण । कुटिलकटुमतित्वाद्युपेतान् कोटीः बहुकोटिसङ्ख्याकानरीन् मुरपीठनिशुम्भहयग्रीवादीन् प्रति रणप्राङ्गणे गदायुधे-नाटीकः । गत्वा च तानुन्मथ्य पोथयामासिथ । अनन्तरं च सुकुसुमं जीवद्वयत्वा-त्कुत्सितशोभनबुद्धिं नरकासुरं प्रथमतः स्वयमुन्मथ्य । अथ **गदया** मोक्षप्रदया सत्यभामया **पोथयामासिथ ॥** पोथनं कारयामासिथ । अन्तर्णीतण्यर्थोऽयम् । अनन्तरं च स्वयमेव पोथयामासिथ संहृतवानसीति । अथ **बह्वीः** शतोत्तरषोडश-सहस्रसङ्ख्याकाः अक्षतदेवराजकुमारीः कशेरुप्रमुखाः **स्वप्रियायै** द्वारकायै प्रायच्छः प्रेषयामासिथ ॥ **तस्मै** ते **नमोऽस्त्विवति** ॥

अथ सुरनगरीं गतस्य भगवतस्तत्र कृतम् । चरितमपि विज्ञापयति **बह्वीरिति ॥** बह्वी पूर्णा ई लक्ष्मीर्यस्यासौ बह्वीः । कोटीरेण किरीटेन तदुपलक्षितभूषणजातेन टीक्यते अवगम्यते इति कोटीरटीकः । सर्वाभरणभूषित इति यावत् । यद्वा कोटीरै-र्ज्ञानिमुकुटैर्ब्रह्मादिभिः टीक्यत इति तथोक्तस्त्वं प्रियतमकुसुमोपेतं पारिजात-मुन्मथ्योन्मूलयित्वा अथ कुटिलैरसुरैः **कटुमतीन्** असुरावेशेन दुष्टमतीन् न रीयंत इति मरणरहितान् देवान् पारिजातप्रत्याहरणार्थमागतान् कांश्चित् **गदया** सत्यभामया कांश्चित्स्वयमेव पोथयामासिथ । तथा **स्वप्रियायै** सत्यभामायै उन्मूलितपारिजाततरुं प्रायच्छः । अन्यत्समम् ।

यद्वा हे प्राण । कुटिलकटुमतीनित्यादिद्वितीया षष्ठ्यर्थे । कुटिलकटुमतीना-मुत्कटाटोपकोपानां अतथ्यमिथ्यात्ववचनवचनानां अकारवाच्यस्य तव तथ्याः सत्याः ये ज्ञानानन्दादयो गुणाः तेषां मिथ्यात्वमुच्यतेऽनेनेति अतथ्यमिथ्यात्ववचनं तादृशं वचनं येषां ते तथोक्तास्तेषाम् । अत एवोत्पथस्थानाम् । तस्मादेवान्येषां भगव-त्कुलाद्बहिष्कृतानाम् । अरीणाम् । गुणपूर्णस्य दुःखिजीवाभिन्नतादिप्रतिपादकतया

शत्रुभूतानां कुवादीनां, 'गदव्यक्तायां वाचि' इति धातोर्गदया वाचैव न तु वस्तुवृत्या बह्वीः कोटीः जीवाभिन्नत्वजगदारोपाधिष्ठानत्वजगदुपादानत्वादि-बहुप्रकारान् अटीकः प्राप्तवानसि । समयान्तरोक्ता तव बहुरूपता निष्प्रमाणत्वा-न्नाङ्गीकारार्हेति भावः । अस्तु समयान्तरोक्तार्थस्याप्रामाणिकत्वं गुणपूर्णत्वं तु कुतः सिद्धमित्यतश्चोक्तम् ॥ **बह्वीरिति** ॥ अनन्ताः कोटीः पूर्णानन्दत्वादिना सिद्धोऽ-सीति यावत् । कोटिरग्रे प्रकर्षे चेत्यभिधानात् । अथैवं जीवाभेदादिवादिनां पूर्णानन्दत्वाद्युत्कर्षवादिनां च किं फलमत्राह ॥ **कुटिलकटुमतीनिति** ॥ कुटिलकटुमत्यादीन् दुर्वादिनस्त्वं सत्वरत्वाद्राक् शीघ्रमेव वायोर्गदया **उन्मथ्य** भग्नलिङ्गशरीरान् कृत्वा अन्धे तमसि पातयित्वा तत्र पोथयामासिथ । तथा **स्वप्रियायै** पूर्णानन्दत्वाद्युत्कर्षत्वादिजनितायै **प्रियतमकुसुमम्** ॥ अत्र कुसुमशब्देन स्वर्गादिकमुच्यते । 'पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष उदाहृत' (भाग.ता-४.२.२६) इति वचनात् । तदपेक्षया **प्रियतमं** नित्यपुमर्थं मोक्षं प्रायच्छः **तस्मै** ते **नम** इति ।

यद्वा जघ्ने निघ्नेनेत्यादिश्लोकषट्केन श्रीकृष्णवतारमाहात्म्यमुक्त्वा इदानीं श्रीवेदव्यासावतारमहिमानमनुवर्णयिष्यन् तदवतरणाय पूर्वं देवैः कृतां स्तुतिं मनसि निधाय तदनुसारेण स्वयं स्तौति– **बह्वीरिति** ॥ हे प्राण । न टीकन्ते जानन्ति साकल्येन केऽप्येनमिति अटीकस्त्वम् । स्वानां देवानां या प्रिया सुधा तत्प्राप्त्यर्थं उन्मथ्यम् । क्षीरसमुद्रमिति शेषः । तव प्रियतमानि कुसुमानि यत्र तं प्रियतमकुसुमं कल्पवृक्षं तथा अन्यान् उच्चैः श्रवः प्रभृतीनप्युत्पाद्येति शेषः । अथ हे प्रियतम । कुत्सितानां जरामृत्यादीनां सुष्ठु मा मानं लयो यस्मात् तत्कुसुमं अमृतं चोत्पाद्य बह्वीः कोटीः प्रति । देवानामिति शेषः ।

यद्वा बहुकोटिसंख्याकान् अरीन् न रीयन्ते इत्यमरान् प्रति तदमृतं सत्वरत्वान् द्राक् प्रायच्छः । यथा गतान् कुटिलकटुमत्यादीनसुरान् **गदया** चक्रादिना च पोथयामासिथ । तस्मै ते नम इति ।

वायु पक्षे तु बह्वीः कोटीः कुटिलकटुमत्याद्यरीन् प्रत्यटीकः सत्वरत्वात् द्रागगदया पोथयामासिथ च । तथा कांश्चिदन्यान् । अतथ्यमिथ्यात्ववचनवचनान् । जगतो मिथ्यात्वमुच्यते । अनेनेति मिथ्यात्ववचनं दृश्यत्वाद्यनुमानम् । तदपि किं सत्यं मिथ्या वेति विकल्पिते सत्यत्वाङ्गीकारे दृश्यत्वस्य तत्रैव व्यभिचारात् मिथ्यैवेत्यङ्गीकुर्वन्ति । अतोऽतथ्यस्य मिथ्यात्ववचनस्य वचनं परिभाषणं येषां तान् ।

अथवा आतथ्यमप्रमाणं यन्मिथ्यात्ववचनं दृश्यत्वाद्यनुमानं तस्य वचनं एषां तान् । अत एवोत्पथस्थान् असुरदुर्वादिनः कथायुद्धे उन्मथ्य पराजित्य स्वप्रियायै द्रौपद्यै प्रियतमं सौगन्धिककुसुमं प्रायच्छस्तस्मै ते नम इति ॥ २८ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– बह्वीरिति ॥** हे शरणद वायो यस्त्वं बह्वीः कोटीः अटीकः अनन्तरं कुटिलकटुमतीन् उत्कटाटोपकोपान् अरीन् सत्वरत्वान् द्राक् गदया पोथयामासिथ तथा अतथ्यमिथ्यात्ववचनान् उत्पथस्थान् अन्यान् अरीन् उन्मथ्य स्वप्रियायै प्रितयमकुसुमं प्रायच्छः । हे प्राण तस्मै ते नमः ।

**विग्रहवाक्यानि– अटीकः ॥** 'टीकृ गतौ' लङ् परस्मैपदिमध्यमपुरुषैक-वचनम् ॥ **कुटिलकटुमतीन्** कटुश्च सा मतिश्च कटुमतिः । कुटिला कटुमतिः येषां ते कुटिलकटुमतयः । तान् कुटिलकटुमतीन् ॥ **उत्कटाटोपकोपान्** आटोपश्च कोपश्च आटोपकोपौ । उत्कटौ आटोपकोपौ येषां ते उत्कटाटोपकोपाः । तान् उत्कटाटोपकोपान् ॥ **सत्वरत्वात्** त्वरया सहितः सत्वरः । सत्वरस्य भावः सत्वरत्वम् । तस्मात् सत्वरत्वात् ॥ **शरणद** शरणं ददातीति शरणदः । तस्य सम्बुद्धिः ॥ **पोथयामासिथ** पोथयाम् आं प्रत्ययाव्ययम् । आसिथ 'अस भुवि' लिट् परस्मैपदं मध्यमपुरुषैकवचनम् ॥ **अतथ्यमिथ्यात्ववचनान्** न तथ्यम् अतथ्यम् । मिथ्यात्वस्य वचनं मिथ्यात्ववचनम् । अतथ्यं मिथ्यात्ववचनम् येषां ते मिथ्यात्ववचनाः । तान् अतथ्यमिथ्यात्ववचनान् ॥ **उत्पथस्थान्** उत्पथे

तिष्ठन्तीति उत्पथस्थाः । तान् उत्पथस्थान् ॥ **प्रायच्छः** प्रेत्युपसर्गः अयच्छः 'दाण् दाने' लुङ् परस्मैपदं मध्यमपुरुषैकवचनम् । पाघ्राध्मास्थाम्नादाण्.... (पा.सू-६.३.७८) इत्यादिना सूत्रेण दाणो यच्छादेशः ॥ **प्रियतमकुसुमम्** स्वस्य प्रिया स्वप्रिया । तस्यै स्वप्रियायै अतिशयेन प्रियं प्रियतमं च तत् कुसुमं च प्रियतमकुसुमम् । तत् प्रियतमकुसुमम् ॥ २८ ॥

**देहादुत्क्रामितानामधिपतिरसतामक्रमाद्वक्रबुद्धिः**
**क्रुद्धः क्रोधैकवश्यः *क्रिमिरिव मणिमान् दुष्कृती निष्क्रियार्थम् ।**
**चक्रे भूचक्रमेत्य क्रकचमिव सतां चेतसः कष्टशास्त्रं**
**दुस्तर्कं चक्रपाणेर्गुणगणविरहं जीवतां चाधिकृत्य ॥ २९ ॥**

## कविकर्णामृतम्

पूर्वं भीमसेनेन हतो मणिमान्नाम दैत्यस्तद्वैरनिरासार्थं सङ्करत्वेन जनिं प्राप्य सर्वज्ञसर्वेश्वरसर्वोत्तमत्वाद्यसङ्ख्यकल्याणगुणाकरस्य भगवतः श्रीनारायणस्य सर्वगुणराहित्यं जीवभावं च प्रतिपादयिष्यन्[७७] तद्योग्यश्रुतिन्यायोपेतं कष्टशास्त्रं चकारेति कथयति– **देहादिति** ॥ **देहात्** शरीरात् ॥ **अक्रमात्** युगपत् ॥ **उत्क्रामितानां** गदाघातेनोत्क्रमणं प्रापितानां **असतां** दुष्टानां **अधिपतिः** ॥ **वक्रबुद्धिः** कुटिलबुद्धिः ॥ **क्रुद्धः** कुपितः ॥ **क्रिमिरिव** दुष्टकीट इव ॥ **क्रोधैकवश्यः** कोपपरतन्त्रः ॥ **दुष्कृती** पापी ॥ **मणिमान्** मणिमान्नाम दुष्टाग्रणीः ॥ **निष्क्रियार्थं** स्ववैरनिरासार्थम् ॥ **भूचक्रं** भूमण्डलं **एत्य** गत्वा । चक्रं पाणौ यस्य तस्य । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' (वा)[७८] इति वचनात् पाणिशब्दस्य परनिपातः । श्रीविष्णोर्गुणगणविरहं सत्यसङ्कल्पत्वादि-कल्याणगुणसङ्घैर्विरहं वियोगं, **जीवतां** जीवभावं च **अधिकृत्य** उद्दिश्य । **सतां**

---

७७. एवञ्जातीयकेषु प्रयोगेषु सर्वत्रापीच्छा भविष्यदर्थका । प्रतिपादयितुमिच्छन् कष्टशास्त्रं चकारेत्यर्थः । एवमेव भोक्ष्यमाणो गृहं गतः । भोक्तुमिच्छन् गत इत्यर्थः ।

★ कृमिरिव (पा.)

सज्जीवानां **चेतसः** चित्तस्य **क्रकचमिव** करपत्रमिव स्थितम् । दुष्टाः वेदविरुद्धाः तर्काः यस्मिंस्तत् । कष्टशास्त्रं शोकदायिशास्त्रं **चक्रे** कृतवान् ॥ २९ ॥

## बालबोधिनी

पूर्वं भीमसेनेन हतो मणिमान्नामको दैत्यस्तद्वैरनिरसनार्थं सङ्करत्वेनोत्पन्नः स्वातन्त्र्याद्यखिलसद्गुणाकरस्य श्रीहरेः सर्वगुणराहित्यं प्रतिपादयिष्यन् तद्योग्यश्रुतिन्यायोपेतं कष्टशास्त्रं चकारेत्याह– **देहादिति** ॥ **देहात्** छरीरात् । 'कलेवरं विग्रहकायदेहा' इति हलः ॥ **अक्रमात्** क्रमो न भवतीत्यक्रमस्तस्मा-द्युगपदित्यर्थः ॥ **उत्क्रामितानां** गदाघातादुत्क्रमणं प्रापितानाम् । सन्तो न भवन्तीत्यसन्तस्तेषां दुष्टानामित्यर्थः ॥ **अधिपतिः** ॥ वक्रा कुटिला बुद्धिर्यस्य स तथोक्तः ॥ **क्रुद्धः** कुपितः **कृमिरिव** दुष्टकीट इव । एकं केवलं वश्य एकवश्यः क्रोधस्यैकवश्यः क्रोधपरतन्त्र इत्यर्थः ॥ **दुष्कृती** दुष्कृतं पापमस्यास्तीति दुष्कृती ॥ **मणिमान्** मणिमन्नामको दैत्यः ॥ **निष्क्रियार्थं भूचक्रं** भूमण्डलं तत् **एत्य** आगत्य । चक्रं पाणौ यस्य स तथा तस्य 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ...' (वा)[७८] इति वचनात्पाणिशब्दस्य परनिपातः । श्रीविष्णोर्गुणानां गणः समूहस्तेन विरहो वियोगस्तम् ॥ **जीवतां** जीवस्य भावो जीवता तां जीवैक्यं चेत्यर्थः ॥ **अधिकृत्य** उद्दिश्य **सतां** सज्जीवानां **चेतसः** चित्तस्य **क्रकचमिव** करपत्रमिव स्थितम् ॥ **दुस्तर्कं** दुष्टा वेदविरुद्धास्तर्का युक्तयो यस्मिन्तद्दुस्तर्कम् ॥ **कष्टशास्त्रं** कष्टं च तत् शास्त्रं च क्लेशदायिशास्त्रमित्यर्थः ॥ **चक्रे** कृतवान् कृञो लिट् ॥ २९ ॥

## मन्दबोधिनी

पूर्वं भीमसेनेन हतो मणिमान् दैत्यः तद्द्वेषेण भूमौ सङ्करत्वेन जनिं प्राप्य अनन्तकल्याणगुणाकरस्य भगवतः श्रीनारायणस्य निर्गुणत्वं जीवभावं च

७८. 'वाहिताग्न्यादिषु' पा.सू-२.२.३७.इत्येतत्सूत्रसम्बन्धि वार्तिकमिदम् ।

प्रतिपादकदुःशास्त्रं चकारेत्याह ॥ **देहादिति** ॥ हे मुख्यप्राण ॥ **मणिमान्** ॥ मणिमन्नामकदैत्यः ॥ **निष्क्रियार्थं** प्रतीकारार्थम् । भीमस्य प्रत्यपकारं कर्तुमिति यावत् ॥ **भूचक्रम्** । भूमण्डलम् । **एत्य** । भूमावुत्पद्य । उत्पत्तिं प्राप्येत्यर्थः ॥ **चक्रपाणेः** ॥ चक्रं पाणौ यस्य सः चक्रपाणिः । तस्य विष्णोः ॥ **गुणगण-विरहम्** ॥ गुणगणैः विरहं वियोगम् । निर्गुणत्वमित्यर्थः ॥ **जीवतां** जीवभावम् । जीवैक्यमित्यर्थः **अधिकृत्य** ॥ उद्दिश्य ॥ **सताम्** ॥ सज्जनानाम् ॥ **चेतसः** ॥ हृदयस्य ॥ **क्रकचमिव** ॥ क्रकचनामकशस्त्रमिव ॥ **कष्टशास्त्रम्** ॥ क्लेशकरं दुश्शास्त्रम् ॥ **चक्रे** ॥ चकार । यथा क्रकचं बहुधा काष्ठविदारकं एवं इदं दुश्शास्त्रं सतां मनोविदारकमिति भावः । 'डु कृञ् करणे' इत्यतो लिडात्मनेपदम् । चक्रे चक्राते चक्रिरे इति रूपाणि । कथम्भूतं कष्टशास्त्रम् ॥ **दुस्तर्कम्** ॥ दुष्टाः श्रुत्या बाधिताः । तर्का युक्तयो यस्मिन् तत्तथोक्तम् । कथम्भूतः मणिमान् ॥ **असतां** दुर्जनानाम् । **अधिपतिः** ॥ कथम्भूतानामसताम् ॥ **अक्रमात्** ॥ क्रमं विना । युगपदित्यर्थः ॥ **देहात्** शरीरात् ॥ **उत्क्रामितानाम्** ॥ एकस्मिन्नेव काले भीमसेनेन मृतिं गतानामित्यर्थः । पुनः कथम्भूतः मणिमान् । **वक्रबुद्धिः** ॥ कुटिलबुद्धिः । पुनः कथम्भूतः ॥ **क्रुद्धः** ॥ स्वकायवधेन कोपं प्राप्तः । पुनः कथम्भूतः ॥ **क्रिमिरिव** ॥ **दुष्टजन्तुरिव** ॥ **क्रोधैकवश्यः** ॥ केवलं क्रोधाधीनः । यथा दुष्टकीटो भुजङ्गादिः परकृतोपद्रवमनुसन्दधत् केवलं कोपाधीनः तदपकारार्थं यतते, तद्वयमपीति भावः । पुनः कथम्भूतः ॥ **दुष्कृती** ॥ दुष्टं च तत् कृतं च दुष्कृतं दुष्कर्म तदस्यास्तीति दुष्कृती । दुर्व्यापारवानित्यर्थः ॥ २९ ॥

## भावप्रदीपिका

एवं जगत्समीरणस्य बलकार्योद्दिश्यभगवत्कार्यसम्पादकमवतारद्वयं निरूप्य ज्ञानकार्योद्दिश्यभागवत्कार्यसम्पादकतृतीयावतारव्यापारान्निरूपयितुमुपोद्धाटयति– **देहादिति** ॥ **अक्रमात्** युगपत् । **देहात्** शरीरात् **उत्क्रामितानां** गदाघातेन उत्क्रमणं प्रापितानां **असताम्** ॥ दुष्टानां राक्षसानाम् ॥ **अधिपतिः** ॥ **वक्रबुद्धिः**

कुटिलबुद्धिः । **क्रुद्धः** कुपितः स्वकीयवधेन कोपं प्राप्तः ॥ **क्रिमिरिव** दुष्टकीट इव च **क्रोधैकवश्यः** कोपैकाधीनः । यथा दुष्टकीटो भुजङ्गदष्टः परकृतोपद्रव-मनुसन्दधत् । केवलकोपाधीनस्तदपकारार्थमुद्युङ्क्ते तथेति । 'दोषैकदृक् पुरोभागी' इत्यादि प्रयोगदर्शनात् पूर्वकालैकेति सूत्रे सङ्ख्यार्थस्यैकशब्दस्य ग्रहणादत्र केवलार्थैकशब्दस्य पूर्वनिपाताभावो न दोषाय ॥ **दुष्कृती** दुष्कृतं पापमस्यास्तीति दुष्कृती ।

यद्वा दुष्टं कृतं दुष्कृतं दुष्कर्म तदस्यास्तीति सः । दुर्व्यापारवान् इत्यर्थः ॥ **मणिमान्** राक्षसः ॥ **निष्क्रियार्थं** प्रतिक्रियार्थम् । स्वस्वकीयवधस्य इति शेषः ॥ **भूचक्रं** भूराष्ट्रं भूमण्डलमिति यावत् । 'चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च' इत्यमरः ॥ **एत्य** आगत्य । सङ्करो भूत्वेति यावत् ॥ **चक्रपाणेः** चक्रं पाणौ हस्ते यस्य सः चक्रपाणिः । समानाधिकरणानां बहुव्रीहिरिष्यत इत्यस्य प्रायिकत्व-गमकत्वाच्च व्यधिकरणो बहुव्रीहिः । 'प्रहरणार्थेभ्यः परे निष्ठा सप्तम्याम्' (वा)[७८] इति पाणिशब्दस्य परनिपातः । तस्य विष्णोः । **गुणगणविरहम्** ॥ गुणगणानां ऐश्वर्यादीनां गणः सङ्घातः । सङ्घाते प्रथमे गणः इत्यमरः । तेन विरहो राहित्यं तम् ॥ **जीवतां** जीवभावं च **अधिकृत्य** प्रतिपाद्यत्वेनाङ्गीकृत्य **सतां** जनानां **चेतसः** हृदयस्य । 'चित्तं तु चेतो हृदयं' इत्यमरः ॥ **क्रकचमिव** करपत्रमिव । क्रकचं करपत्रं स्यात्' इत्यमरः । यथा क्रकचाख्येन दारुखण्डेन क्षुरविशेषेण काष्ठं विदार्यते तथा इदं दुःशास्त्रं मोहकत्वेन सज्जनमनोविदारकमिति भावः ॥ **दुस्तर्कम्** ॥ दुष्टाः श्रुत्यादिबाधितार्थास्तर्काः यस्मिन् तत् दुस्तर्कम् । कष्टानां कृच्छ्राणां साधनं शास्त्रं ग्रन्थः तत्कष्टशास्त्रम् । 'निर्देशग्रन्थयोः शास्त्रम्' इत्यमरः । 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानं' (वा-१३१०) इति उत्तरपदलोपी समासः । यद्वा कष्टसाधकत्वात् कष्टं, जीवब्रह्मैक्यं शास्यते उपदिश्यतेऽनेन इति कष्टशास्त्रम् । 'शास अनुशिष्टौ' इत्यस्मात् करणे ष्ट्रन् प्रत्ययः ॥ **चक्रे** कृतवान् । एतत्क्रियाजन्यतमः प्राप्त्याद्यनर्थरूपफलस्य मुख्यतः कर्तृगामित्वात् आत्मनेपदम् । अहो पश्यन्त्वेतस्य धृष्टस्य दौरात्म्यं यत्सदा

वैरहननोद्यतचक्रायुधस्यापि भगवतो नैर्गुण्यादिकं प्रतिपादितवान् इति चक्रपाणिशब्दं प्रयुञ्जानस्य भावः ॥ २९ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवं देवानाममृतदानं दैत्यानां संहरणं च भवत्कृतममृष्यमाणः कलिर्युधे प्रत्यवस्थातुमसमर्थः सन् तव निर्गुणत्वादिप्रतिपादकं दुःशास्त्रं रुद्रादिष्वाविश्य चकारेति विज्ञापयति– **देहादिति** ॥ अक्रमात् युगपत् देहादुत्क्रामितानां त्वया संहृतानामसतां कालनेम्यादीनामधिपतिः कलिः । भूचक्रं भूरथम् । चक्रशब्देन चक्रीरथो लक्ष्यते । शिवमिति यावत् । **एत्य** अन्तराविश्य **मणिमान्** मणिफणः **क्रिमिः** दुष्टजन्तुः सर्प इव क्रोधैकवश्यत्वात्क्रुद्धः सन् चक्रपाणेस्तव निष्क्रियार्थम् । प्रतिक्रियां कर्तुं गुणगुणात्यन्ताभावं जीवतां चाधिकृत्य सतां चेतसः क्रकचमिव विद्यमानं कष्टशास्त्रं चक्रे । तदुक्तम्– 'त्वदाज्ञया तस्य वरोऽब्जजेन दत्तस्स आविश्य शिवं चकार । कदागमान्' (म.भा.ता.नि.अ-१०श्लो-३७) इत्यादि ॥ २९ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– देहादिति** ॥ देहात् उत्क्रामितानां असतां अधिपतिः वक्रबुद्धिः कृद्धः क्रिमिरिव क्रोधवश्यः दुष्कृती मणिमान् निष्क्रियार्थं भूचक्रम् एत्य चक्रपाणे-र्गुणगणविरहं जीवितां चाधिकृत्य सतां चेतसः क्रकचमिव स्थितं दुस्तर्कं कष्टशास्त्रं चक्रे ।

**विग्रहवाक्यानि– उत्क्रामितानाम्** ॥ उत्क्रामणं प्रापिताः उत्क्रामिताः । तेषाम् ॥ **असताम्** न सन्तः असन्तः तेषाम् असताम् ॥ **अक्रमात्** न क्रमः अक्रमः तस्मात् अक्रमात् । वक्रा बुद्धिर्यस्यासौ वक्रबुद्धिः ॥ **क्रोधैकवश्यः** केवलं क्रोधवश्यः क्रोधैकवश्यः ॥ **दुष्कृती** दुष्कृतं अस्यास्तीति दुष्कृती ॥ **चक्रे** 'डु कृञ् करणे' लिट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ **भूचक्रम्** भुवः चक्रं भूचक्रं तत् भूचक्रम् ॥ **कष्टशास्त्रम्** कष्टं च तत् शास्त्रं च कष्टशास्त्रम् । तत् कष्टशास्त्रम् ॥

**दुस्तर्कम्** दुष्टाः तर्काः यस्मिन् तत् दुस्तर्कम् ॥ **चक्रपाणेः** चक्रं पाणौ यस्यासौ चक्रपाणिः । तस्य चक्रपाणेः ॥ **गुणगणविरहम्** गुणानां गणः गुणगणः । गुणगणस्य विरहः । तं गुणगणविरहम् ॥ **जीवताम्** जीवस्य भावो जीवता तां जीवताम् ॥ २९ ॥

**तद्दुष्प्रेक्षानुसारात्कतिपयकुनरैरादृतोऽन्यैर्विसृष्टो**
**ब्रह्माहं निर्गुणोऽहं वितथमिदमिति ह्येष पाषण्डवादः ।**
**तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाण-**
**ज्वालामालाधरोऽग्निः[७९] पवन विजयते तेऽवतारस्तृतीयः ॥ ३० ॥**

## कविकर्णामृतम्

कष्टशास्त्रं चक्र इत्युक्तम् । तत्र किं प्रतिपाद्यम्? कैरङ्गीकृतम्? कैर्नाङ्गीकृतम्? इत्याशङ्कायां तत्सर्वं स्पष्टमाचक्षाणः श्रीवायोस्तृतीयावतारविजयमाह– **तद्दुष्प्रेक्षानुसारादिति** ॥ **ब्रह्माहं** न जीवः । जीवभावस्याविद्यामूलत्वात् । अविद्यानिवृत्तौ ब्रह्मैव निर्गुणोऽहं कर्तृत्वभोक्तृत्वादिगुणरहितोऽहम् । इदं परिदृश्यमानं जगत् **वितथं** मिथ्या इत्येष पाषण्डवादः[८०] पाषण्डप्रलापः । 'सत्य

---

७९. मालाधराग्निः इत्यपि पाठः ।

८०. पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते । षण्डयन्ति तु तं यस्मात् पाषण्डस्तेन कीर्तिताः इति ।

पाषण्डाचरणं च पाद्मे निरूपितं–

रुद्रवचनम् (पार्वतीं प्रति)

येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाजगद्वन्द्यात् ते वै पाषण्डिनस्तथा ।
कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः ।
ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः ॥

आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा,' (वि.त.नि.उदा.श्रुतिः) 'आत्मा हि परमस्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः,' (वि.त.नि. उदा.श्रुतिः) 'सत्यं च जगदीदृशम्' (म.भा.ता.नि-१.६८) इत्यादिश्रुति-विरोधात्पाषण्डवादत्वमवसेयम् । ननु 'योऽसावसौ पुरुषः सोऽहमस्मि,' (ईशा.उ.मन्त्र-१५) 'एकमेवाद्वितीयं ब्रह्म,' (छां.उ-६.२.१) 'नेह नानाऽस्ति किञ्चन' (बृ.उ.शारीरब्राह्मण.६.२०) । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ.उ.शारीरब्राह्मण.६.२०) इत्याद्यनेकान्यैक्यवाक्यानि सन्ति । तेषां का गतिरिति चेदुच्यते । सोऽहमस्मीत्यादिकमन्तर्याम्यैक्याभिप्रायम् ।

अन्तर्यामिणमीशेशामपेक्ष्याहं त्वमित्यपि ।
सर्वशब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु ॥ इति ॥

'एकमेवाद्वितीयं ब्रह्म'(छां.उ-६.२.१) इत्यादिकस्य तु समाभ्यधिक-राहित्यादिविषयतया सावकाशत्वम् । नेहनानेत्यादिनिन्दनार्थवादस्य तु स्वगतभेद-विषयत्वेन सावकाशत्वम् । अन्यथेहेति विशेषणवैयर्थ्यात् ॥ **कतिपयकुनरैः**

---

**अवैदिकक्रियोपेतास्ते वै पाषण्डिनो मताः । श्रुतिस्मृत्युक्तमाचारं यस्तु नाऽचरति द्विजः ।**

**स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः । समस्तयज्ञभोक्तारं विष्णुं ब्रह्मण्य-दैवतम् । उदस्य चान्यदेवेभ्यो जुहोति च ददाति च । स पाषण्डीति विज्ञेयः स्वतन्त्रो वाऽन्यकर्मसु । स्वातन्त्र्यात् क्रियते यैस्तु कर्म वेदोदितं महत् । विना वै भगवत्प्रीत्या ते वै पाषण्डिनः स्मृताः । यस्तु नारायणं देवं ब्रह्मरुद्रादि-दैवतैः । समत्वेनैव जानाति स पाषण्डी भवेद् द्विजः । विष्णुवैष्णवगोभूमि-देवादिषु विशेषतः । अश्वत्थतुलसीतीर्थक्षेत्रादिषु महागुरौ । लक्ष्मीसरस्वती-गङ्गायमुनासु वरानने । स्मृताः पाषण्डिनस्तेऽपि ये न सेवापरायणाः । रुद्रा-क्षेन्द्राक्षभद्राक्षस्फुटिकाक्षादिधारिणः । जटिला भस्मलिप्ताङ्गास्ते वै पाषण्डिनः प्रिये । किमत्र बहुनोक्तेन ब्राह्मणा ये ह्यवैष्णवाः । असदाचरणाश्चेत् स्युस्तदा पाषण्डिनः स्मृताः । एतद्भोजनपानादिकर्मभिर्वैष्णवै र्जनाः । पाषण्डिनस्तथा स्युर्वै जटाभस्मादिधारिणः । (उत्तरखण्ड.अ-४२)**

कैश्चित्तमोयोग्यैः कुत्सितजनैः ॥ **तद्दुष्प्रेक्षानुसारात्** ॥ तस्य सङ्करस्य दुष्प्रेक्षा दुष्प्रज्ञा । तस्याः अनुसारः अनुसरणं तस्मात् ॥ **आदृतः** अङ्गीकृतः ॥ **अन्यैः** मुक्तियोग्यैः **सुजनैः** विसृष्टः त्यक्तः । पाषण्डवादत्वादिति भावः ॥ **तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाणज्वालामालाधरोऽग्निः** ॥ युक्तिवदवभासमानाः न तु युक्तयः । तस्य सङ्करस्य युक्त्याभासाः । तेषां जालं समूहः । तस्य प्रसरः प्रसारः । स एव विषतरुः विषवृक्षः । तस्य उद्दाहः उत्कृष्टदहनम् । तस्मिन् दक्षाणि समर्थानि प्रमाणानि श्रुतिवाक्यानि । तान्येव ज्वालामालाः ज्वालापरम्पराः । ताः धारयति यः सोऽग्निः ॥ **हे पवन** ॥ **ते तृतीयः** तार्तीयकः ॥ **अवतारः** मध्वावतारः **विजयते** सर्वोत्कृष्टत्वेन वर्तते ॥ ३० ॥

## बालबोधिनी

कष्टशास्त्रं कृतवानित्युक्तम् । तत्र किं प्रतिपाद्यं कैरङ्गीकृतं कैर्नाङ्गीकृतमित्याशङ्कायां तत्सर्वं स्पष्टमाचक्षाणः श्रीवायोस्तृतीयावतारविजयमाह– **तदिति** ॥ **ब्रह्म** परब्रह्म । अहं न जीवो जीवभावस्याविद्यामूलत्वात् । अविद्यानिवृत्तौ सत्यां ब्रह्मात्मताज्ञानेन ब्रह्मैव जीव इति तस्य शास्त्रे प्रतिपादनात् ॥ **निर्गुणः** न विद्यन्ते गुणाः कर्तृत्वभोक्तृत्वलक्षणधर्मा यस्य स अहं निर्गुणो निर्धर्मक इत्यर्थः ॥ **अहं** कर्ताऽहं भोक्तेत्यादिप्रत्यक्षसिद्धकर्तृत्वभोक्तृत्वादि धर्माणामविद्याकल्पितत्वाङ्गीकाराद्ब्रह्मज्ञानेनाविद्यानिवृत्तौ निर्धर्मकब्रह्मैव जीवो भवतीति तच्छास्त्रे प्रतिपादनात् ॥ **इदं** परिदृश्यमानं जगत् **वितथम्** असत्यम् ॥ इति **एष पाषण्डवादः** पाषण्डो वेदविरुद्धो यो वादः पाषण्डवादः प्रलापः । 'सत्य आत्मा सत्यो जीवः । (वि.त.नि.उदा.श्रुतिः) 'सत्यं भिदा सत्यं भिदा सत्यं भिदा । (वि.त.नि.उदा.श्रुतिः) 'सत्यः सो अस्य महिमा' । (वि.त.नि.उदा.श्रुतिः) 'सत्यं तु जगदीदृशम्' (वि.त.नि.उदा.श्रुतिः) इत्यादिश्रुतिस्मृतिविरुद्धत्वात्पाषण्डवादत्वं तच्छास्त्रस्यावधेयम् । कतिपया ये कुनराः कुत्सितनरास्तैः कैश्चित्तमोयोग्यजनैरित्यर्थः ॥ **तद्दुष्प्रेक्षानुसारात्** तस्य सङ्करस्य दुष्प्रेक्षा तस्या अनुसारोऽनुसरणं

तस्मात् ॥ **आद्दतोऽङ्गीकृतः** ॥ **अन्यैर्मुक्तियोग्यजनैः विसृष्टः** परित्यक्तः पाषण्ड-वादत्वादिति भावः ॥ **तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाणज्वाला-मालाधराऽग्निः** ॥ युक्तिवदवभासमाना युक्त्याभासाः तस्य सङ्करस्य युक्त्याभासा-स्तद्युक्त्याभासास्तेषां जालं समूहस्तस्य प्रसरो विस्तारः । स एव विषतरुर्विषवृक्ष-स्तस्य उद्दाह उत्कृष्टदहनं तस्मिन्दक्षाणि समर्थानि यानि प्रमाणानि श्रुत्यादि-वाक्यानि तान्येव ज्वालामाला ज्वालानां परम्परास्ता धारयतीति तथोक्तः । स चासावग्निश्च । हे **पवन ते** तव **तृतीयः** तृतीयकः **अवतारः** मध्वावतारो **विजयते** सर्वोत्कृष्टतया वर्तते । 'जी जये' लट् ॥ ३० ॥

## मन्दबोधिनी

कष्टशास्त्रं चक्र इत्युक्तम् । तत्र किं प्रतिपाद्यम्? तत्कैरङ्गीकृतम्? कैर्नाङ्गीकृत-मित्याशङ्कायां तत्सर्वं स्पष्टमाचक्षाणः, वायोस्तृतीयावतारविजयमाह– **तद्दुष्प्रेक्षेति** ॥ हे मुख्यप्राण ॥ **अहं ब्रह्म** ॥ चैतन्यरूपेण ब्रह्मस्वरूपः ॥ **अहं निर्गुणः** ॥ स्वाभाविककर्तृत्वभोक्तृत्वादिगुणशून्यः ॥ **इदम्** ॥ विश्वम् ॥ **वितथम्** ॥ मिथ्या इति । एवं प्रकारः ॥ **एषः** प्रस्तुतः ॥ **पाषण्डवादः** ॥ पाषण्डानां प्रलापः । कष्टशास्त्रप्रतिपाद्य इति शेषः । कथम्भूतः पाषण्डवादः ॥ **कतिपयकुनरैः** ॥ कतिपयाश्च ते कुनराश्च तैः दुर्जनैः ॥ **तद्दुष्प्रेक्षानुसारात्** ॥ तस्य सङ्करस्य । दुष्प्रेक्षा बुद्धिः । तस्या अनुसारात् । अनुसरणात् ॥ **आद्दतः** ॥ आदरेण अङ्गीकृतः । पुनः कथम्भूतः पाषण्डवादः ॥ **अन्यैः** तदन्यैः ॥ **सज्जनैः** ॥ **विसृष्टः** ॥ नायं पुरुषार्थसाधनं इत्युक्त इत्यर्थः । यद्वा कतिपयकुनरैः बौद्धादिकुनरैः । आद्दतः ॥ **अन्यैः** तार्किकादिकुजनैः ॥ **विसृष्टः** ॥ त्यक्तः । **हे पवन** ॥ पुनातीति पवनः तस्य सम्बुद्धिः । हे मुख्यप्राण ॥ **ते** ॥ तव ॥ **तृतीयावतारः** ॥ पूर्णज्ञानाख्य-तृतीयावतारः ॥ **अग्निः** ॥ लुप्तोपममेतत् । अग्निरिव । दावाग्निरिव ॥ **विजयते** ॥ सर्वोत्कृष्टो वर्तते । कथम्भूतः अवतारः ॥ **तद्युक्त्याभासजालप्रसरविषतरू-द्दाहदक्षप्रमाणज्वालामालाधरोऽग्निः** ॥ तस्य सङ्करस्य । युक्त्याभासाः युक्ति-

वदवभासमानाः । न तु युक्तयः । कुयुक्तय इति यावत् । तेषां जालं समूहः । तस्य प्रसरः । प्रसरणम् । स एव विषतरुः विषवृक्षः । तस्य उद्दाहः अत्यन्त-भस्मीकरणम् । तस्मिन् दक्षाणि समर्थानि च तानि प्रत्यक्षादिप्रमाणानि च तान्येव ज्वालामालाः ज्वालासमूहाः ताः धरतीति तथोक्तः । तादृशः अग्निः । अग्निस्थानीय इत्यर्थः ॥ ३० ॥

## भावप्रदीपिका

सङ्करो भूत्वा कष्टशास्त्रं चक्रे इत्युक्तम् । तत्र प्रतिपाद्यं तत्कैरङ्गीकृतं, कैर्नाङ्गीकृतमित्यपेक्षायां तत्सर्वं निरूपयन् मुख्यप्राणतृतीयावतारविजयं विज्ञापयति– **तद्दुष्प्रेक्षेति ॥ ब्रह्माहं** जीवः । जीवभावस्याविद्यकत्वात् । अविद्यानिवृत्तौ सत्यां शुद्धं ब्रह्मैवाहमित्यर्थः ॥ **निर्गुणोऽहं** कर्तृत्वभोक्तृत्वादिधर्मरहितोऽहम् । कर्तृत्वादेरप्याविद्यकत्वादिति भावः ॥ **इदं** परिदृश्यमानं प्रत्यक्षादिप्रमाणसिद्ध-मम्बरादिकं **वितथं** मिथ्या स्वरूपेणात्यन्तासदित्यर्थः । एवं प्रकारकः ॥ **एषः** प्रस्तुतः **पाषण्डवादः** ॥ हि अव्यवस्थितप्रळापः प्रसिद्धः । 'बहुलिङ्गस्तु पाषण्डः स्यात्' इत्यमरः । सर्वप्रत्यक्षानुमानागमविरुद्धत्वात् तदसिद्धत्वाच्च । तच्च ब्रह्म-मीमांसायां प्रतिपादितम् । विस्तरभयान्नेहोच्यते ॥ **कतिपयकुनरैः** कुत्सिताः नराः कुनराः । 'कुगतिप्रादयः' (पा.सू-२.१.९८) इति समासः । कतिपयाश्च ते कुनराश्च तैः तमोयोग्यैरित्यर्थः ॥ **तद्दुष्प्रेक्षानुसारात्** तस्य सङ्करस्य दुष्प्रेक्षा बाधितार्थविषयोपलब्धिः । 'प्रेक्षोपलब्धिः चित्संवित् प्रतिप्रज्ञप्तिचेतनाः' इत्यमरः । तस्या अनुसारः अनुसरणं तस्मात् ॥ **आदृतः** आदरेण अङ्गीकृतः ॥ **अन्यैः** भिन्नैः मुक्तियोग्यैः **विसृष्टः** तिरस्कृतः । पाषण्डप्रलापत्वादिति भावः ॥ **हे पवन** ॥ पुनातीति पवनः तस्य सम्बुद्धिः ॥ **ते** तव ॥ **तृतीयः** त्रयाणां पूरणः मध्वा-ख्योऽवतारः **अग्निरिव** 'अन्तरेणापि वतिमतिदेशो हि गम्यते' (व्या.महा.भाष्य. अ-१,पाद-२) इत्युक्तेः ॥ **विजयते** उत्कृष्टो वर्तते । विशेषतो दुर्वादिनोऽभिभवं प्रापयतीति वा । तदुक्तं 'जयेर्जयाभिभवयोः आद्येऽर्थेऽसावकर्मकः । उत्कर्षप्राप्ति-

राद्योऽर्थो द्वितीयेऽर्थे सकर्मकः' (माधवीयधातुवृत्त्युदाहृतदेववचनम्) इति । 'विपराभ्यां जेः' (पा.सू-१.३.१८) इत्यात्मनेपदम् । ऋग्भिः षड्भिः वायुरेव पवमानाभिधायकः । 'स्तूयतेऽङ्गनेतृत्वात् अग्निरित्यभिधीयते' इति वचनात् । अङ्गानि नयति प्रेरयतीत्यग्निः ॥ **ते तृतीयः अवतारः** विजयते इति वा । तेन 'बळित्था' इत्यादि सूक्तस्य अग्निसूक्तत्वात् न वायुसूक्तत्वमिति निरस्तम् । लोकप्रसिद्धाग्निसाम्यं दर्शयन्तं विशिनष्टि **तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्ष-प्रमाणज्वालामालाधरोऽग्निः** ॥ तस्य सङ्करस्य युक्त्याभासयुक्तिरूपा ये दुस्तर्काः तेषां जालं समूहः । तस्य प्रसरः प्रसर्पणम् । 'प्रसरः प्रसर्पणम्' इत्यमरः । एषः विषतरुः विषवृक्षः इव । तस्य उद्दाहः उत्कृष्टं दहनं भस्मीकरणं तस्मिन्दक्षानि समर्थानि यानि प्रमाणानि प्रत्यक्षादीनि तानि ज्वाला इव तासां मालानां पङ्क्तीनां धरः । धरतीति धरः धर्ता इत्यर्थः । 'नन्दिग्रहिपचादिभ्यो...' (पा.सू-३.१.१३४) इति अच् प्रत्ययः । द्वितीयान्तेन मालाशब्देन विग्रहोक्तौ तु कर्मण्यण् प्रत्यये धार इति स्यात् । लोके भिन्नयोरपि वाय्वग्न्योः सान्निध्ये तृणादिदहनसामर्थ्यं दृश्यते । एकस्योभयरूपत्वे तत्किमु वक्तव्यमिति विशब्दं प्रयुञ्जानस्येति भावः ॥ ३० ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एतद्दुःशास्त्रप्रचयप्रकारमुक्त्वा तदुन्मूलनाय बादरायणत्वेनावतीर्णोऽसीति विज्ञापयति– **तद्दुष्प्रेक्षानुसारादिति** ॥ हे कतिपय । केन सुखेन ततत्वात्कतिः । तनोतेरौणादिको डि प्रत्ययः । ज्ञानरूपत्वात्पयः । 'अयपयगतौ' इति धातोः । यद्वा पालकत्वात्पः । यः प्रकाशरूपः । 'यः प्रकाशरूप इति' भागवत-तात्पर्योक्तेः । पावनात्पवन श्रीहरे । ब्रह्माण्डमित्यादिरेष पाषण्डवादः तस्य काले दुष्प्रज्ञानुसारात् कुनरैरादृतः । अन्यैः सर्वथाऽसुरावेशशून्यत्वाद्रुद्रादिप्रपञ्चविलक्षणै-र्ब्रह्मादिमात्रैर्विसृष्टो हेयत्वेन परित्यक्तः । एवं तद्दुःश्शास्त्रे लोके प्रचयं प्राप्ते तदुन्मूलनाय गृहीतस्ते तृतीयो व्यासावतारस्तद्युक्त्याभासजालप्रसरा एव विषतरवस्तेषा-

मुद्दाहे दक्षाः याः प्रमाणाख्यज्वालामालास्तद्धरः सन् अग्निरिव विजयते । वायु-तृतीयावतारश्रीमदानन्दतीर्थोपास्यत्वाद्व्यासावतारस्य तृतीयत्वम् ॥ ३० ॥

## श्रीनिवासतीर्थीया

**अन्वयः– तद्दुष्प्रेक्षेति ॥** अहं ब्रह्म अहं निर्गुणः इदं वितथम् । इति एषः पाषण्डवादः । तद्दुष्प्रेक्षानुसारात् कतिपयकुनरैः आदृतः अन्यैर्विसृष्टः हि । इति हेतोः हे पवन तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाणज्वालामालाधरः, । अग्निः ते तृतीयः अवतारः विजयते ।

**विग्रहवाक्यानि– तद्दुष्प्रेक्षानुसारात् ॥** दुष्टा च सा प्रेक्षा च दुष्प्रेक्षा । तस्य दुष्प्रेक्षा तद्दुष्प्रेक्षा । तद्दुष्प्रेक्षायाः अनुसारः । तस्मात् तद्दुष्प्रेक्षानुसारात् ॥ **कतिपयकुनरैः** कुत्सिताश्च ते नराश्च कुनराः । कतिपयाश्च ते कुनराश्च कतिपयकुनराः । तैः ॥ **निर्गुणः** न विद्यते गुणाः यस्यासौ निर्गुणः ॥ **तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाणज्वालामालाधरः** युक्तिलक्षणरहिताः युक्तिवदाभासमानाः युक्त्याभासाः तस्य युक्त्याभासाः तद्युक्त्याभासाः । तद्युक्त्याभासानां जालं तद्युक्त्याभासजालम् । जालस्य प्रसरः । प्रसर एव विषतरुः । उत्कृष्टश्चासौ दाहश्च उद्दाहः । विषतरोः उद्दाहः । उद्दाहे दक्षाणि उद्दाहदक्षाणि । दक्षाणि च तानि प्रमाणानि उद्दाहदक्षप्रमाणानि । ज्वालानां मालाः ज्वालामालाः । प्रमाणान्येव ज्वालामालाः । ज्वालामालाः धरतीति ज्वालामालाधरः ॥ **विजयते** वीत्युपसर्गः 'जि जय' आत्मनेपदम् प्रथमपुरुषैकवचनम् ॥ ३० ॥

**आक्रोशन्तो निराशा भयभरविवशस्वाशयाः छिन्नदर्पा**
**वाशन्तो देशनाशस्त्विति बत कुधियां नाशमाशा दशाऽशु ।**
**धावन्तोऽश्लीलशीला वितथशपथशापाशिवाः शान्तशौर्या**
**स्त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते ॥ ३१ ॥**

## कविकर्णामृतम्

मायावादिनो मध्वाचार्यतत्त्वविद्याव्याख्याने प्रवर्तमाने सति सिंहनादे प्रवर्तमाने जम्बुका इव कष्टां दशां प्रापुरिति विज्ञापयति– **आक्रोशन्त इति** ॥ हे श्रीमदाचार्यवर्य ॥ **त्वद्व्याख्यासिंहनादे** तव व्याख्यानरूपसिंहध्वनौ श्रूयमाणे सति ॥ **ते** त्वया पराजिताः **मायिगोमायवः** मायावादिमृगधूर्तकाः । 'गोमायु-मृगधूर्तकः' इत्यमरः । **सपदि** तदानीं व्याख्यानसमये । **आक्रोशन्तः** क उपायः का गतिः किं शरणमिति परस्परमाह्वानं कुर्वाणाः ॥ **निराशाः** निर्गतविजया-काङ्क्षाः ॥ **भयभरविवशस्वाशयाः** भयभरेण साध्वससमृद्ध्या विवशाः परवशाः स्वाशयः स्वाभिप्रायः येषां ते ॥ **छिन्नदर्पाः** गलितगर्वाः ॥ **कुधियां** कुत्सितबुद्धीनां **देशनाशः** स्थानभ्रंशः ॥ **बत** हाहेति ॥ **नाशं** मृतिम् ॥ **वाशन्तः** रुवन्तः[८१] । 'तिरश्चां वाशितं रुतम्' इत्यमरः । **आशादश** दश आशाः दश दिशः ॥ **आशु** शीघ्रं **धावन्तः** गच्छन्तः ॥ **अश्लीलशीलाः** ग्राम्यस्वभावाः । 'ग्राम्ये त्वश्लीलम्' इत्यमरः ॥ **वितथशपथशापाशिवाः** वितथौ व्यर्थौ शपथशापौ[८२] प्रतिज्ञोपालम्भौ येषाम् । ते च ते अशिवाः अमङ्गलाः ॥ **शान्तशौर्याः** नष्टशौर्यगुणाः सन्तो **ददृशिरे** दृष्टाः ॥ ३१ ॥

## बालबोधिनी

मायावादिनो मध्वाचार्यस्य तत्वविद्याव्याख्याने प्रवर्तमाने सति सिंहनादे

---

८१. **कुधियां नाशं देशनाश इति वाशन्त इति । मध्वाचार्यप्रवचनेन कुधियामेव नाशः समजनि । न सज्जनलोकस्य । परन्तु कुधियः स्वनाशमेव देशनाश इति भ्रमन्तो ववाशिरे । यद्यपि सिंहनादेन जम्बुका एव पलायिताः । स्वयं वना-द्भ्रंशिता जम्बुका मेनिरे वनमेव नष्टमिति । तदुक्तम्- तत्रानन्तस्वान्तवेदान्ति-सिंहे मुख्यव्याख्यानिस्वने जृम्भमाणे । सद्यो माद्यद्वादिदन्तीन्द्रभीमे भेजे क्षोभो मायिगोमायुयूथैः (सु.म.वि-१२.१) इति । आक्रन्दं मे हन्त शृण्वन्तु सोऽयं हाहा मायावाद उत्सादमेति (सु.म.वि-१२.७) इति च ।**

८२. शपथाक्रोशयोः शापः इति दण्डनाथः ।

प्रवर्तमाने जम्बुका इव कष्टां दशां प्रापुरिति विज्ञापयति– **आक्रोशन्त इति** ॥ हे मध्व (आचार्येषु गुरुषु वर्यः श्रेष्ठ आचार्यवर्यः श्रीमान् कान्तिमान् आचार्यवर्य-स्तत्सम्बुद्धिः ।) **त्वद्व्याख्यासिंहनादे** तव व्याख्या त्वद्व्याख्या सैव सिंहनादः सिंहध्वनिस्तस्मिन् श्रूयमाणे सति ते त्वया पराजिता मायिनो मायावादिनो गोमायव इव मायिगोमायवः **सपदि** तदानीं व्याख्यानसमय इत्यर्थः ॥ **आक्रोशन्तः** क उपायः का गतिः किं शरणमिति परस्परमाह्वानं कुर्वाणाः ॥ **निराशाः** निर्गता आशा वादे विजयाकाङ्क्षा येभ्यस्ते निराशाः ॥ **भयभरविवशःस्वाशयाः** भयस्य भरः समृद्धिस्तेन विवशः परवशः स्वाशयः स्वाभिप्रायो येषां ते तथोक्ताः ॥ **छिन्नदर्पाः** छिन्नो विगतो दर्पो वयं वादकुशला इति गर्वो येषां ते तथोक्ताः । कुत्सिता धीर्येषां ते कुधियस्तेषाम् ॥ **देशनाशः** स्थानभ्रंशः ॥ **बत** हाहा इति ॥ **नाशं** मृतिम् ॥ **वाशन्तः** 'तिरश्चां वाषितं रुतम्' इत्यमरः । विस्वरेण ध्वनिं कुर्वन्तो भाषमाणा अस्मदीयानां नाशेन देशो नष्ट इति विकत्थनं कुर्वन्तः ॥ **आशादश** दशसङ्ख्याका दिशः ॥ **आशु** शीघ्रम् ॥ **धावन्तः** पलायनं कुर्वन्तः ॥ **अश्लीलशीलाः** अश्लीलं ग्राम्यं शीलं येषां ते तथोक्ताः कुत्सितशीला इति यावत् ॥ **वितथशपथशापाशिवाः** वितथौ मिथ्याभूतौ शपथशापौ येषां ते वितथशपथशापास्ते च ते अशिवाश्च । यद्वा वितथौ मिथ्याभूतौ शपथशापौ ताभ्यामशिवाः । शान्तं नष्टं शौर्यं येषां ते तथा सन्तो **ददृशिरे** ॥ जनैर्दृष्टाः । 'दृशिर् प्रेक्षणे' लिट् ॥ ३१ ॥

## मन्दबोधिनी

मायावादिनो मध्वाचार्यस्य व्याख्यासिंहनादे प्रवर्तमाने सति जम्बुक इव कष्टां दशां प्रापुरिति विज्ञापयति– **आक्रोशन्त इति** ॥ हे भगवन् ॥ **त्वद्व्याख्या-सिंहनादे** ॥ तव व्याख्या त्वद्व्याख्या । सैव सिंहनादः तस्मिन् प्रवर्तमाने सतीति शेषः ॥ **ते** त्वया पराजिताः ॥ **मायिगोमायवः** ॥ मायावादिजम्बुकाः ॥ **सपदि** ॥ तदानीम् । शान्तशौर्याः । शान्तं शौर्यं येषां ते शान्तशौर्याः सन्त इत्यर्थः ॥

**ददृशिरे ॥** दृष्टाः । जनैरिति शेषः । 'दृशिर् प्रेक्षणे' इत्यस्माद्धातोः कर्मणि लिडात्मनेपदम् । ददृशे ददृशाते ददृशिर इति रूपाणि । कथम्भूताः मायिगोमायवः ॥ **आक्रोशन्तः** ॥ अस्माकं कः उपायः । का गतिः को वा रक्षक इति परस्परं आक्रोशं कुर्वन्तः इत्यर्थः । पुनः किं प्रकाराः ॥ **निराशाः** ॥ निर्गतविषयाभिलाषाः । 'आशोदिगभिलाषयोः' इत्यभिधानम् । पुनः कीदृग्विधाः **भयभरविवशस्वाशयाः** ॥ भयस्य भरः अतिशयः तेन विवशः परवशः स्वाशयः स्वाभिप्रायः येषां ते तथा । भयेन व्याकुलबुद्धय इत्यर्थः । 'छन्दोऽभिप्राय आशय' इत्यमरः । पुनः कीदृशाः ॥ **छिन्नदर्पाः** ॥ छिन्नः दर्पो येषां ते तथोक्ताः । खण्डिताहङ्काराः । पुनः कीदृग्विधाः ॥ **कुधियाम्** ॥ अस्माकमिति शेषः । बलवद्विरोधस्य कृतत्वात् कुत्सितबुद्धीनामेवास्माकम् ॥ **देशनाशः** ॥ स्थानभ्रंशः । प्राप्त इति हेतोः । प्राप्तनाशं प्रति ॥ **वाशन्तः** ॥ रुदन्तः । तिर्यग्जन्तुशब्दवत् शब्दं कुर्वन्तः इत्यर्थः । 'तिरश्चां वाशितं रुतम्' इत्यमरः । अस्माकं कुत्राप्यवस्थानाभावान्मरणमेव प्राप्तमिति विलापं कुर्वन्त इति भावः ॥ **बत** ॥ खेदे । पुनः कथम्भूताः ॥ **दश आशाः** । दिशः प्रति ॥ **आशु** ॥ शीघ्रम् ॥ **धावन्तः** ॥ पुनः कथम्भूताः । **अश्लीलशीलाः** ॥ अश्लीलं शीलं येषां ते अश्लीलशीलाः अश्लाघ्यस्वभावाः । सर्वनिन्दितव्यापारान् कुर्वन्त इत्यर्थः । पुनः कथम्भूताः । **वितथशपथशापाशिवाः** ॥ वितथः व्यर्थः । शपथः स्वपक्षस्थापनपरपक्षनिराकरणरूपप्रतिज्ञा येषां ते वितथशपथाः । शापाशिवाः महतां शापप्रदानेन अशिवाः । अमङ्गलभूताः । वितथशपथाश्च ते शापाशिवाश्च ते तथोक्ताः । षण्ढप्रतिज्ञाः । महतां निन्दया तद्द्रोहिणश्चेत्यर्थः ॥ ३१ ॥

## भावप्रदीपिका

एवं सामान्येन निरूपितं विजयं विशदयन् विज्ञापयति– **आक्रोशन्त इति** ॥ हे गुरो **त्वद्व्याख्यासिंहनादे** ॥ तव व्याख्यानम् । सिंहनाद इव सिंहध्वनिरिव, तस्मिन् । श्रूयमाणे सतीति शेषः ॥ **सपदि** तदानीम् । त्वद्व्याख्याश्रवणसमये

एवेत्यर्थः । भवद्विजयप्रकटीभावात् पूर्वं ये येऽसद्वादं प्रवर्तितवन्तः ते मायि-गोमायवः मृगधूर्तका इव । 'गोमायुर्मृगधूर्तकः' इत्यमरः । शान्तशौर्याः शान्तं शौर्यं येषां ते शान्तशौर्याः । 'वादान्तशान्त' इत्यादिना निपातः । ददृशिरे दृष्टाः । जनैरिति शेषः । 'दृशिर् प्रेक्षणे' इत्यस्मात् कर्मणि लिट् । नष्टवीर्यत्वमेव विशदयं-स्तान् विशिनष्टि **आक्रोशन्त इति** ॥ आ समन्तात् सम्यग्वा क्रोशः कुत्राव-स्थातव्यम्? को वा रक्षकः इति परस्परं आह्वयन्त इत्यर्थः । निराशाः त्वद्विजयप्रकटीभावेन निर्गतविजयेच्छा इत्यर्थः । अत एव **भयभरविवशस्वाशयाः** भयस्य भरेण अतिशयेन । विवशो व्याकुलः स्वाशयः स्वाभिप्रायो येषां ते तथोक्ताः । 'अभिप्रायश्छन्द आशयः' इत्यमरः । अत एव **छिन्नदर्पाः** छिन्नः खण्डितः दर्पो गर्वो येषां ते तथोक्ताः । बत खिन्ना सन्तः । खेदेनेति वा । 'खेदानुकम्पा सन्तोष विस्मयामन्त्रणे बत' इत्यमरः । तुशब्दोऽवधारणे ॥ **कुधियां** कुत्सितबुद्धीनां एव **नाशं** देशनाशं इति वाशन्तः । पापिनां देशे विहारेण देशो नष्ट इति प्रलपन्त इत्यर्थः । इति शब्देन कर्मताया उक्तत्वात् । प्रातिपादिकार्थमात्रव्यवस्थापनेन प्रथमा । 'वाशृ शब्दे' कुत्सायां इत्यतो लट् । शत्रादेशः । अथवा दैवादिकात् वाशृशब्द इत्यतः कर्तरि 'क्विप् च' (पा.सू-३.२.७६) इति क्विप् । वाशृयन्त इति वाशाः । वाश इवाचरन्ति वाशन्ति इति वाशन्तः । 'क्विब्वाचार' इति क्विबन्तत्वेन सुब्धातोः लिट् । तिर्यञ्च इव शब्दयन्तः इति भावः ।

यद्वा वाशन्तः गोमायुवत् शब्दयन्तः इत्यर्थः । तिरश्चां वाशितं रुतं' इत्यमरः ॥ **दशाशाः** दशदिशः ॥ **आशु** शीघ्रम् ॥ **धावन्तः अश्लीलशीलाः** ॥ अश्लीलं असभ्यं शीलं स्वभावो येषां ते तथोक्ताः । 'निष्ठुरं परुषं ग्राम्यमश्लीलं' इत्यमरः । 'शीलं स्वभावे सद्वृत्ते' इति च ॥ **वितथशपथशापाशिवाः** वितथौ व्यर्थौ शपथ-शापौ प्रतिज्ञोपालम्भौ येषां ते तथोक्ताः । वितथशपथशापाश्च तेऽशिवाश्च अमङ्गलाश्च । बहुळोक्तेः विशेषणसमासः । अथवा निष्फलाभ्यां प्रतिज्ञोपालम्भाभ्यां अमङ्गलाः नष्टभाग्याः इत्यर्थः । यद्वा ताभ्यां अशिवा शिवविरोधिनः । अनेन अस्माकं वृथा वरो दत्तः इत्यस्मदिष्टदेवताशतरुद्रार्चनं वृथा कृतमिति द्रोहं कुर्वन्तः

इत्यर्थः । ताभ्यां अशिवं अमङ्गलं आत्यन्तिकदुःखसुखविच्छेदविशिष्टतमः प्राप्तिः येषामिति वा । 'नाभावान्यविरोधेषु' इति सूत्रात् ॥ ३१ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवं कलिकृतकुशास्त्रनिराकरणानन्तरं कलिना तत्पक्षिभिश्चाचरितकर्मविज्ञापना-व्याजेन श्रीव्यासं स्तौति– **आक्रोशन्त इति ॥** कुधियामस्माकमधिष्ठितदेश एव प्राप्त इति प्रसक्तं स्वनाशं प्रति वाशन्तः । आशु आशाः दश प्रति धावन्तः । अश्लीलशीलाः । अश्लाघ्यस्वभावाः । वितथशपथाः । महतां शापेनाशिवाश्च । मायिनः कल्यादयस्त एव गोमायवस्त्वद्व्याख्यासिंहनादे श्रूयमाणे सति सपदि एवंविधाः सन्तो ददृशिरे । यद्वा सदसतामुभयेषामपि कलिमतानुप्रवेशित्वातच्छास्त्रे निराकृते तदुभयेषामपि प्रवृत्तिः कीदृशी जातेत्यतस्तत्प्रकारं विज्ञापयति– **आक्रोशन्त इति ॥** हे अ । बादरायण । 'अआअंअः पुराणर्षिः' (एकाक्षर-कोषः) इति वचनात् । श्लीलशीलाः सच्चेतनाः प्राक् कलिमलकलुषास्त्वद्व्याख्या-सिंहनादे श्रूयमाणे सति । त्वदुदितसच्छास्त्रे अभ्यस्यमान इति यावत् । कुधियां कुत्सितशास्त्रे धीर्येषां तेषां कलिकृतशास्त्रनिविष्टानामस्माकं देशनाशो वैकुण्ठादिप्राप्यस्थानभ्रंशः प्राप्ते बतेति वाशन्तः प्रलयन्तः अतीवजातानुतापा इति यावत् । अनन्तरं च । आक्रोशन्तः । हरिरेव सर्वोत्तम इति वाग्विसर्गं कुर्वन्तः । निराशाः विषयेष्वभिलाषरहिताः । सांसारिकभयभरस्य विवशोऽनधीनः स्वाशयः शोभममन्तःकरणं येषां ते । विप्रियमित्यादिवद्विवशशब्दः । छिन्नदर्पाः । दर्पादिदोषहीनाः । वितथौ विशेषेण सत्यभूतौ शपथशापौ येषां ते । शापानु-ग्रहसामर्थ्यवन्त इति यावत् । आ सम्यक् शिवाः मङ्गलरूपाश्चेति वितथशपथशापा-शिवाः नाशं । शं सुखरूपं न भवतीति नेति परमसुखरूपं मोक्षं धावन्तो ददृशिरे । मायिगोमायवस्तु शान्तशौर्यादिरूपाः आशु दशाशाः धावन्तो ददृशिर इति ॥ ३१ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– आक्रोशन्त इति ॥** हे आनन्दतीर्थ त्वद्व्याख्यासिंहनादे श्रूयमाणे सति ते मायिगोमायवः सपदि आक्रोशन्तः निराशाः भयभरविवश-स्वाशयाः छिन्नदर्णाः कुधियां नः देशनाशः बत इति नाशं वाशन्तः दश आशाः प्रति आशु धावन्तः अश्लीलशीलाः वितथशपथशापाशिवाः शान्त-शौर्याः सन्तः जनैः ददृशिरे ।

**विग्रहवाक्यानि– निराशाः ॥** निर्गता आशा येभ्यः ते निराशाः ॥ **भयभर-विवशस्वाशयाः** भयस्य भरः भयभरः भयभेरण विवशः भयभरविवशः । स्वेषा-माशयः स्वाशयः । भयभ्रविवशः स्वाशयो येषां ते भयभरविवशस्वाशयाः ॥ **छिन्नदर्पाः** छिन्नो दर्पो येषां ते छिन्नदर्पाः । **देशनाशः** देशस्य नाशः देशनाशः ॥ **कुधियाम्** कत्सिता धीः येषां ते कुधियः । तेषां कुधियाम् ॥ **अश्लीलशीलाः** अश्लीलं शीलं येषां ते अश्लीलशीलाः ॥ **वितथशपथशापाशिवाः** शपथश्च शापश्च शपथशापौ । वितथौ च तौ शपथशापौ च वितथशपथशापौ । शापाभ्याम् अशिवाः वितथशपथशापाशिवाः ॥ **शान्तशौर्याः** शान्तं शौर्यं येषां ते शान्तशौर्याः । तव व्याख्या त्वद्व्याख्या त्वद्व्याख्यैव सिंहनादः त्वद्व्याख्यासिंह-नादः । तस्मिन् ॥ **ददृशिरे** 'दृशिर् प्रेक्षणे' लिडात्मनेपदं प्रथमपुरुषबहुवचनम् ॥ **मायिगोमायवः** मायिन एव गोमायवः मायिगोमायवः ॥ ३१ ॥

**त्रिष्वप्येवावतारेष्वरिभिरपघृणं हिंसितो निर्विकारः**
**सर्वज्ञः सर्वशक्तिः सकलगुणगणापूर्णरूपप्रगल्भः ।**
**स्वच्छः स्वच्छन्दमृत्युः सुखयसि सुजनं देव किं चित्रमत्र**
**त्राता यस्य त्रिधामा जगदुत वशगं किङ्कराः शङ्कराद्याः ॥ ३२ ॥**

## कविकर्णामृतम्

अवतारत्रये विकारहेतौ सत्यपि निर्विकारत्वादिगुणाढ्यत्वं विज्ञापयन् शर्वादि-

सर्वसुरसेव्यत्वेन स्तौति– **त्रिष्विति** ॥ त्रिषु अवतारेषु हनुमदादिप्रादुर्भावेषु ॥ **अरिभिः** शत्रुभिः । अपगता घृणा यस्मिन् कर्मणि तत् । हिंसितः प्रहृतोऽपि निर्विकारः विकाररहित एव ॥ **सर्वज्ञः** सर्वार्थवित् ॥ **सर्वशक्तिः** सर्वेषु कार्येषु शक्तिः सामर्थ्यं यस्य स सर्वशक्तिः ॥ **सकलगुणगणापूर्णरूपप्रगल्भः** समस्त-ज्ञानानन्दादिगुणसमूहाः । तैः आपूर्णरूपम् परिपूर्णस्वरूपम् । तेन प्रगल्भः प्रौढः ॥ **स्वच्छः** पापादिलेपरहितः । अत एव **स्वच्छन्दमृत्युः** स्वेच्छामृतिः ॥ **हे देव** श्रीमुख्यप्राण । एतादृशस्त्वं भक्तजनं सुखयसि आनन्दयसीति यत् अत्र अस्मिन् सुखदाने किं चित्रं किमाश्चर्यम्? 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । आश्चर्यं नास्तीत्यर्थः । तथाहि यस्य तव त्रीणि अनन्तासनवैकुण्ठक्षीरार्णवरूपाणि धामानि स्थानानि यस्य सः **त्रिधामा** विष्णुः **त्राता** रक्षकः ॥ **उत** किञ्च ॥ **जगत्** विष्टपं **वशगं** वशवर्ति । **शङ्कराद्याः** शर्वाद्याः सर्वे **किङ्कराः** सेवकाः ॥

'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् ।
बलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः ॥' (म.भा.ता.नि.अ-२,श्लो-१५७)

## बालबोधिनी

अवतारत्रये विकारहेतौ सत्यपि निर्विकारत्वादिगुणाढ्यत्वं विज्ञापयन् शर्वादि-सर्वसुरसेव्यत्वेन स्तौति– **त्रिष्विति** ॥ **त्रिषु अवतारेषु** त्रिषु अवतारा हनुमदादय-स्तेषु ॥ **अरिभिः** रावणदुर्योधनसङ्करादिशत्रुभिः ॥ **यः** अपगता घृणा यथा भवति तथापघृणं हिंनसनक्रियाविशेषणमेतत् ॥ **हिंसितोऽपि** प्रहृतोऽपि निर्गतो विकारो यस्मात्स **निर्विकारः सर्वज्ञः** सर्ववित्, सर्वेषु कार्येषु शक्तिः सामर्थ्यं यस्य स **सर्वशक्तिः** ॥ सकलाः समस्ता ये गुणा बलज्ञानानन्दादिधर्मास्तेषां गुणाः समूहा-स्तैरापूर्णं परिपूर्णं यद्रूपं स्वरूपं तेन प्रगल्भः प्रौढः ॥ **स्वच्छः** पापादिलेपरहितः । अत एव **स्वच्छन्दमृत्युः** स्वस्य छन्द इच्छा तेन मृत्युर्यस्य स तथोक्तः । हे देव मुख्यप्राण । एतादृशस्त्वं **सुजनं** भक्तजनम् **सुखयसि** आनन्दयसीति यत् । अत्रास्मिन् सुखदाने **किं चित्रं** किमाश्चर्यम् आश्चर्यं नास्तीत्यर्थः । तथाहि यस्य

तव त्रीणि वैकुण्ठानन्तासनश्वेतद्वीपरूपाणि धामानि स्थानानि यस्य स त्रिधामा विष्णुस्त्राता रक्षकः । उत किञ्च जगत् स्थिरचरात्मकं समस्तं **वशगं** वशावर्ती-त्यर्थः ॥ **शङ्कराद्याः** शङ्कर आद्यः येषां ते शङ्कराद्याः सर्वे देवाः । **किङ्कराः** सेवकाः ॥ ३२ ॥

## मन्दबोधिनी

अवतारत्रयेऽपि विकारहेतौ सत्यपि निर्विकारत्वादिगुणस्त्वमिति विज्ञापयन् शर्वादिसर्वसुरवर्यसेव्यत्वेन स्तौति– **त्रिष्विति** ॥ हे मुख्यप्राण त्वम् ॥ **त्रिषु** ॥ हनुमदाद्यवतारेषु ॥ **अरिभिः** ॥ वारणादिभिः ॥ **अपघृणम्** अपघृणमिति क्रियाविशेणम् । अपगता घृणा कृपा यस्यां क्रियायां यथा भवति तथा ॥ **हिंसितोऽपि** ॥ शस्त्रादिभिः प्रहतोऽपि ॥ **निर्विकारः** ॥ निर्गताः विकारा यस्मात्सः निर्विकारः । दुःखादिविकारशून्यः । हनुमान् रावणेन मुष्टिना हतोऽपि विकारित्वं न प्राप । मध्वाचार्योऽपि गण्डवाटादिभिः गलनिष्पेषणादिके कृतेऽपि विकारं न प्रापेति तु मध्वविजये स्पष्टम् ॥ **सर्वज्ञः** ॥ भगवदितरत्र आलोचने सर्वार्थज्ञानवान् ॥ **सर्वशक्तिः** ॥ सर्वकार्येषु पूर्णशक्तिमान् ॥ **सकलगुणगणा-पूर्णरूपप्रगल्भः** ॥ सकलगुणगणैः आपूर्णानि रूपाणि हनुमदादिरूपाणि यस्य स तथोक्तः । स चासौ प्रगल्भः महासमर्थश्चेति विशेषणसमासः ॥ **स्वच्छः** ॥ पापादिलेपरहितः ॥ **स्वच्छन्दमृत्युः** ॥ स्वेच्छानुसारी मृत्युः मरणं यस्य स तथोक्तः ॥ **हे देव** ॥ एतादृशस्त्वम् ॥ **सुजनम्** ॥ भक्तजनम् ॥ **सुखयसि** ॥ आनन्दयसि । तत्त्वोपदेष्टृत्वादिति भावः ॥ **अत्र** एतस्मिन् सुखदानविषये ॥ **किं चित्रं** किमाश्चर्यम् । न किमपीत्यर्थः । 'आलोख्याश्चर्ययोश्चित्रम्' इत्यमरः । यस्य तव ॥ **त्रिधामा** ॥ त्रिणि धामानि स्थानानि श्वेतद्वीपानन्तासनवैकुण्ठाख्यानि यस्यासौ तथोक्तः विष्णुः ॥ **त्राता** ॥ रक्षकः ॥ **जगदुत** । जगच्च । तव **वशगम्** वशवर्ति ॥ **शङ्कराद्याः किङ्कराः** सेवकाः । अतो नाश्चर्यमिति भावः । तदुक्तम्– 'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् । मरुतस्तु हरिः साक्षात् न हरेर्बलमन्यतः' (म.भा.ता.नि.अ-२,श्लो-१५७) इति ॥ ३२ ॥

# भावप्रदीपिका

एवं विजयं निरूप्याधुना अवतारत्रयेऽपि विकारहेतौ सत्यपि निर्विकारादि-गुणगणार्णवं विज्ञापयन् भगवदेकनियम्यत्वेन जगन्नियामकत्वेन जगद्गुरुरुद्रादि-सुरवरनिकरसेव्यत्वेन स्तौति– **त्रिष्विति** ।। **हे देव** । द्योतनादिगुणविशिष्ट । **त्रिषु** हनुमदाद्येषु अवतारेषु । **अरिभिः** शत्रुभिः । **अपघृणं** अपगता घृणा दया यस्यां क्रियायां तद्यथा भवति तथा । **हिंसितः** शस्त्रादिभिः प्रहतोऽपि निर्विकारः एव । निर्गताः विकाराः दुःखादयो यस्मात्स तथोक्तः । वैरिप्रेरितप्रहरणादिना अस्य किञ्चिदपि दुःखादि नाभूदित्यर्थः । **सर्वज्ञः** आलोचने सदा भगवदितरसर्वपदार्था-शेषविशेषप्रमावानित्यर्थः । सर्वं पूर्णं भगवन्तं जानातीति सर्वज्ञः । आलोचनेऽपि शारदा रुद्राद्यविज्ञातेश्वरगुणवत्वे सति यावद्रमाविज्ञातेश्वरस्वरूपज्ञ इत्यर्थः ।। **सर्वशक्तिः** सर्वाः सर्वकार्यसाधिकाः परिपूर्णाः शारदादिशक्त्युत्कृष्टाः, श्रीहरि-शक्त्यपकृष्टाः शक्तयः सामर्थ्यानि यस्य स तथोक्तः । वैरिहननादिकार्यसमर्था शक्तिरायुधविशेषो यस्येति वा ।। **सकलगुणगणापूर्णरूपप्रगल्भः** गुणशब्देनात्र शुभकर्म उच्यते । 'शब्दाद्या इन्द्रियाद्याश्च सत्वाद्यानि शुभानि च । प्रधानानि च गुणा निरुच्यन्ते निरुक्तिगैः' इति वचनात् । सकलाः समस्ताः ये गुणा परमेश्वरादिमात्रापकृष्टा ज्ञानानन्दादयः । तेषां गणेन समूहेन । आसमन्तात् सम्यग्वा पूर्णं । व्याप्तं यद्रूपं तेन **प्रगल्भः** प्रौढः ।। **स्वच्छः** पापादिलेपरहितः । अत एव **स्वच्छन्दमृत्युः** स्वच्छन्दः स्ववशः मृत्युरन्तको यस्य स तथोक्तः । अभिप्रायवशौ छन्दौ इत्यमरः । एवं विशिष्टस्त्वं **सुजनं** शोभनं जनं **सुखयसि** सुखं प्रापयसि । तत्त्वोपदेष्टृत्वादिना इति शेषः । अत्रैवेतस्मिन् सुजनसुखदान-विषये । सप्तम्यन्तादेतच्छब्दात् त्रल् प्रत्यये कृते अत्रे इति रूपम् ।। **किं चित्रम्** किमाश्चर्यम् । न किमपीत्यर्थः । 'विस्मयोऽद्भुतमाश्चर्यं चित्रम्' इत्यमरः कथं न चित्रमित्यत आह **यस्येति** ।। यस्य तव । धामानि स्थानानि श्वेतद्वीपानन्तासन-वैकुण्ठाख्यानि यस्य स **त्रिधामा** ।।

अथवा त्रिषु लोकेषु धाम स्वरूपं तेजो वा यस्य स तथोक्तः । त्रिलोकव्यापि-स्वरूपपराक्रमवानित्यर्थः । 'तेजः स्वरूपं गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानात् । तथा च न केवलं विष्णुः सूर्यादिवत् प्रकाशेनैव लोके व्यापकः । अपि तु स्वरूपेणापि । 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' 'द्यावा पृथिव्योरिदमन्तरिक्षं हि व्याप्तं त्वयैकेन दिशश्च सर्वा' इत्यादिप्रमाणादिति भावः । एवंविधो विष्णुः त्राता पालयिता । उतशब्दोऽप्यर्थे । जगच्च । वशं गच्छति प्राप्नोति इति वशगं, 'अन्येभ्योऽपि दृश्यते' (पा.सू-३.२.७५) इति गमेर्डः ॥ **शङ्कराद्याः** रुद्राद्या देवाश्च **किङ्कराः** सेवकाः । 'प्राणस्य तद्वशे सर्वे प्राणः परवशे स्थितः । न परः किञ्चिदाश्रित्य वर्तते परमो यतः' (ब्र.सू.भा.उ.श्रु-२-४-११) इति । 'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् बलं तस्य हरिः साक्षात् न हरेर्बलमन्यतः' इति । अथेदं विश्वं पवमान ते वशे इत्यादिप्रमाणादिति भावः ॥ ३२ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

शत्रुकृतहिंसया तव न किंचिदुपद्रवः सार्वज्ञादिमहामहिमत्वादिति भावेन स्तौति– **त्रिष्विति ॥** त्रिष्वपि युगेषु कृतेष्वतारेषु हिरण्याक्षादिभिररिभिरपघृणं हिंसितोऽपि त्वं निर्विकार एवासीः । तत्रोपपादकमाह **सर्वज्ञ इत्यादिना ॥** यस्त्वं सर्वज्ञः सर्वशक्तिः सकलगुणगणैरापूर्णरूपं प्रगल्भः प्रौढश्चेति तथोक्तः । स्वच्छो निर्दोषः स्वच्छन्दः स्वेच्छाधीनो मृतेरुद्गतत्वान्मृत्युश्च । यद्वा स्वेच्छाधीनमृत्युदेवतः । यश्च त्वं सुजनं मोक्षे सुखयसि । यस्य तव त्राता मा न विद्यते । तवैव सर्वपाल-कत्वात् । त्रिधा क्षराक्षरजडभेदेन विद्यमानं जगद्यस्य वशगम् । शङ्कराद्याश्च किङ्कराः । यद्वा यश्च त्वं त्रिधामा वैकुण्ठादित्रिस्थानस्त्राता सर्वपालकश्च । जगच्च यस्य वशगम् । शङ्करस्याप्याद्याः ऋजवश्च किङ्कराः अत्र एतादृशमहामहिमोपेते त्वयि हे देव एतन्निर्विकारत्वं किं चित्रमिति ॥ ३२ ॥

## श्रीनिवासतीर्थीया

**अन्वयः— त्रिष्वपीति** ॥ हे देव त्रिषु अवतारेषु अरिभिः अपघृणं यथा भवति तथा हिंसितोऽपि निर्विकारः सर्वज्ञः सर्वशक्तिः सकलगुणगणा-पूर्णरूपप्रगल्भः स्वच्छः स्वच्छन्दमृत्युः त्वं सुजनं सुखयसि अत्र चित्रं, किं तथा हि यस्य च त्रिधामा विष्णुः त्राता उत तव, जगत् वशगं शङ्कराद्याः देवाः तव किङ्कराः ।

**विग्रहवाक्यानि— अपघृणम्** ॥ अपगता घृणा यथा भवति तथा । क्रिया-विशेषणाव्ययम् ॥ **निर्विकारः** न विद्यते विकारो यस्य स निर्विकारः ॥ **सर्वज्ञः** सर्वं जानातीति सर्वज्ञः ॥ **सर्वशक्तिः** सर्वस्मिन् शक्तिः यस्य सः सर्वशक्तिः ॥ **सकलगुणगणापूर्णरूपप्रगल्भः** सकलाश्च ते गुणाश्च सकलगुणाः सकलगुणानां गणाः सकलगुणगणाः । आ सम्यक् पूर्णं च तत् रूपं च सकलगुणगणापूर्ण-रूपम् । आपूर्णरूपेण प्रगल्भः । आपूर्णरूपप्रगल्भः ॥ **स्वच्छन्दमृत्युः** स्वच्छन्दो मृत्युः यस्य सः स्वच्छन्दमृत्युः ॥ **सुखयसि** 'सुखधातुः' लट् परस्मैपदं मध्यमपुरुषैकवचनम् ॥ **सुजनं** शोभनश्चासौ जनश्च सुजनः । तं सुजनम् ॥ **त्रिधामा** त्रीणि धामानि यस्यासौ त्रिधामा ॥ **वशगम्** वशे तिष्ठतीति वशगम् ॥ **शङ्कराद्याः** शङ्करः एव आद्यो येषां ते शङ्कराद्याः ॥ ३२ ॥

**उद्यन्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारा-**
**पूरासेकोपशान्तासुखसुजनमनोलोचनापीयमानम् ।**
**सन्द्रक्ष्ये सुन्दरं सन्दुहदिह महदानन्दमानन्दतीर्थ**
**श्रीमद्वक्त्रेन्दुबिम्बं दुरितनुदुदितं नित्यदाऽहं कदा नु ॥ ३३ ॥**

## कविकर्णामृतम्

मुख्यप्राणमुखावलोकनस्य सकलपुरुषार्थहेतुत्वात् तत्कदा भविष्यतीत्याकाङ्क्षति—**उद्यन्मन्दस्मितेति** ॥ **हे नित्यद** नित्यं वृद्धिक्षयरहितं श्रीविष्णुं भक्तजनेभ्यो ददाति

दर्शयति यस्तस्य सम्बुद्धिः हे नित्यद । 'वृद्धिक्षयौ न तु परस्य सदातनस्य' (म.भा.ता.अ-१.श्लो-१२) इति हि वृद्धिक्षयराहित्यं श्रीविष्णोरुक्तम् ॥ **श्रीमदानन्दतीर्थ** ॥ तव सम्बन्धि **उद्यन्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारा-पूरासेकोपशान्तसुखसुजनमनोलोचनापीयमानम्** उद्गच्छन्मृदुहसित शोभा-कोमलम् ॥ **मधु** क्षौद्रम् । तद्वन्मधुराः मनोहराः ॥ **आलापाः** आभाषणानि । 'स्यादाभाषणमालापः' इत्यमरः । त एव **पीयूषाणि** ॥ तेषां धाराः परम्पराः । तासां **पूरः** निकरः । तेन **आसेकः** अभिषेचनम् । तेन **उपशान्तं** प्रणष्टं **असुखं** येषां तेषां **सुजनानां** सज्जनानां **मनोलोचनैः आपीयमानं** आसमन्तादनुभूय-मानम् ॥ **सुन्दरं** मनोहरम् । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्' इत्यमरः ॥ **इह** एषु सेवाप्रवृत्तास्मदादिजनेषु ॥ **महदानन्दं** भूरिसुखं नित्यं **सन्दुहत्** ददत् । **दुरितनुत्** पापनुत् ॥ **उदितं** प्रसन्नम् । एतादृशं **श्रीमद्वक्त्रेन्दुबिम्बं** शोभाव-न्मुखचन्द्रमण्डलं अहं **कदानु** कदा वा **सन्द्रक्ष्ये** आलोकयिष्ये । 'अर्तिश्रु-दृशिभ्यश्चेति वक्तव्यम्' (वा-७२६) इति सम्पूर्वाद्दृशेरात्मनेपदम् ॥ ३३ ॥

## बालबोधिनी

मुख्यप्राणमुखावलोकनस्य सकलपुरुषार्थहेतुत्वात् कदा भविष्यतीत्याकाङ्क्षति– **उद्यदिति** ॥ **हे नित्यद** नित्यं वृद्धिक्षयरहितं विष्णुं भक्तेभ्यो ददातीति नित्यदस्तत्सम्बुद्धिः हे नित्यद । श्रीमदानन्दतीर्थ तव सम्बन्धि ॥ **उद्य-न्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारापूरासेकोपशान्तसुखसुजन-मनोलोचनापीयमानम्** ॥ उद्यदुत्पद्यमानं यन्मन्दस्मितं मन्दहासस्तस्य श्रीः शोभा तया मृदु कोमलं तत् । मधुवत् क्षौद्रवन्मधुरा मनोहरा ये आलापा आभाषणानि । 'स्यादाभाषणमालाप' इत्यमरः । त एव पीयूषाण्यमृतानि तेषां धाराः परम्परा-स्तासां पूरो निकरस्तेनासेकोऽभिषेचनं तेनोपशान्तं प्रणष्टमसुखं सुखविरुद्धं येषां ते तथोक्तास्तं च ते सुजनाश्च तेषां मनांसि लोचनानि च तैरापीयमानम् आ समन्तादत्यादरेणेति वा । आपीयमानं अनुभूयमानप्रेमपूर्वकं परिदृश्यमानमित्यर्थः ॥

**सुन्दरं** मनोहरं 'सुन्दरं रुचिरं चारु' इत्यमरः ॥ **इह** सेवकजनेषु **महदानन्दं** महांश्चासावानन्दश्च तम् । भूरि सुखमित्यर्थः ॥ **सन्दुहत्** ॥ दुरितानि नुदति नाशयतीति **दुरितनुत्** ॥ नित्यदेति वा पदच्छेदः सर्वदेत्यर्थः ॥ **उदितं** प्रसन्न-मेतादृशं श्रीमत् कान्तिमत् । यद्वक्त्रं तदेवेन्दुबिम्बमिव चन्द्रमण्डलमिव तत् ॥ **अहं कदानु** कस्मिन् काले वा सन्द्रक्ष्ये आलोकयिष्ये 'दृशिर् प्रेक्षणे' लृट्

॥ ३३ ॥

## मन्दबोधिनी

श्रीमुख्यप्राणमुखावलोकनस्य सर्वपुरुषार्थहेतुत्वात् तत्कदा भविष्यतीत्याकाङ्क्षति– **उद्यन्मन्देति** ॥ **हे श्रीमदानन्दतीर्थ** ॥ अहं तव **श्रीमद्वक्त्रेन्दुबिम्बम्** श्रीमद्वक्त्रमेव इन्दुबिम्बं चन्द्रमण्डलम् । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः ॥ **कदा नु** ॥ कस्मिन् काले ॥ **सन्द्रक्ष्ये** ॥ आलोकयिष्ये । 'दृशिर् प्रेक्षणे' इत्यतो लृडात्मने-पदम् । द्रक्ष्ये द्रक्ष्यावहे द्रक्ष्यामहे इति रूपाणि । कथम्भूत आनन्दतीर्थ ॥ **नित्यद** ॥ नित्यपुरुषार्थो मोक्षः । तं ददातीति नित्यदः । तस्य सम्बुद्धिः । 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' (म.भा.ता.नि-अ-१,श्लो-७८) इत्युक्तेः । कथम्भूतं श्रीमद्वक्त्रेन्दुबिम्बमित्याकाङ्क्षायां तद्विशिनष्टि **उद्यन्मन्देति** ॥ **उद्य-न्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारापूरासेकोपशान्तसुखसुजनमनोलोचना-पीयमानम्** ॥ उद्यन्मन्देत्यारभ्य आपीयमानमित्यन्तमेकं पदम् । उद्यच्च तत् मन्दस्मितं मन्दहासश्च तस्य श्रीः कान्तिः, तथा मृदुः कोमलः श्राव्य इति यावत् । मधुवत् मधुरः । स्वादुप्रियो वा । 'स्वादु प्रियौ तु मधुरौ' इत्यमरः । उद्य-न्मन्दस्मितश्रीमृदुश्चासौ मधुमधुरश्चासौ आलापः आभाषणं च । स एव पीयूषं अमृतम् । तस्य धारा परम्परा । तस्याः पूरः प्रवाहः । तेन आसेकः अभिषेकः तद्वाक्यश्रवणरूपः । तेन उपशान्तं नष्टं असुखं दुःखं येषां ते ते च ते सुजनाः सज्जनाश्च तेषां मनांसि च लोचनानि च मनोलोचनानि तैः । आ सम्यक् पीयमानं मनसा सादरं चिन्त्यमानम् । लोचनाभ्यामालोक्यमानं इति यावत् । पुनः कीदृशम्

वक्त्रेन्दुबिम्बम् ॥ **सुन्दरम्** । मनोहरम् । पुनः कथम्भूतम् ॥ **महत्** ॥ पूज्यम् । पुनः कीदृशम् ॥ **इह सज्जनेषु** ॥ **आनन्दं** सुखम् ॥ **सन्दुहत्** सम्पूरयत् । 'दुह पूरणे' इति धातोः । पुनः कीदृशम् ॥ **दुरितनुत्** । दुरितं दुष्कृतं नुदति दूरीकरोतीति दुरितनुत् । पुनः कथम्भूतम् ॥ **उदितं** विशेषानुक्तेः सर्वदा प्रसन्नमित्यर्थः ॥ ३३ ॥

## भावप्रदीपिका

अधुना प्रसन्नश्रीमद्भगवत्पादाचार्यमुखावलोकनस्यैहिकामुष्मिक सर्वपुरुषार्थसाधकत्वात्कदा तन्मम भविष्यतीत्याकाङ्क्षते– **उद्यन्मन्देति** ॥ हे आनन्दतीर्थ परमपुरुषार्थसाधनशास्त्रप्रवर्तक हे नित्यद 'धर्मार्थकामास्सर्वेऽपि न नित्या मोक्ष एव हि । नित्यस्तस्मात्तदर्थोऽयं यतेत मतिमान्नरः' इति वचनात् नित्यः । 'त्यब्नेर्ध्रुव इति' (वा-४९८७) निशब्दात् सदातनेऽर्थे त्यप् प्रत्ययः । 'ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु' इत्यमरः तं नित्यं वृद्धिक्षयरहितं विष्णुं ददाति दर्शयतीति नित्यदः । तस्य सम्बुद्धिः । 'वृद्धिक्षयौ न तु परस्य सदातनस्य' (म.भा.ता.नि-१-१२) इति वचनात् । अहं तव **श्रीमद्वक्त्रेन्दुबिम्बं** श्रीमन्नित्यकान्ति तद्वक्त्रं मुखम् । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । तदिन्दुबिम्बमिव चन्द्रमण्डलमिव 'बिम्बोऽस्त्रीमण्डलं त्रिषु' इत्यमरः । नुशब्दो वाशब्दार्थः । 'नुपृच्छायां विकल्पे च' इत्यमरः ॥ **कदानु** कस्मिन् काले वा ॥ **सन्द्रक्ष्ये** आलोकयिष्येत्यन्वयः । 'दृशिर् प्रेक्षणे' लृट् 'दृशेश्चेति वक्तव्यम्' इति वचनात्सम्पूर्वात् दृशेरात्मनेपदम् । कथमेतद्वक्त्रस्यामृतकरमण्डलसाम्यमित्यत उक्तम् ॥ **उद्यन्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारापूरासेकोपशान्तसुखसुजनमनोलोचनापीयमानम्** ॥ उद्यत् उदयं प्राप्नुवत् । यन्मन्दस्मितं ईषद्धसितम् । मन्दशब्दविशेषणात् स्मितशब्दोऽत्र हासमात्रपरः । विशिष्टपराणां शब्दानां विशेषणपदसमवधाने सति विशेषणमात्रपरत्वस्य गजबृंहितमित्यादौ निश्चितत्वात् । तस्य श्रीः शोभा । उद्यती या स्मितश्रीः इति वा । तया मृदुः

कोमलः सुश्रवण इत्यर्थः । 'मधु क्षौद्रमिव मधुरः स्वादुः प्रियो वा । स्वादुः प्रियौ तु मधुरौ' इत्यमरः । उपमानानि सामान्यवचनैरिति समासः । एवं विशिष्टो य आलापः आभाषणम् । 'स्यादाभाषणमालापः' इत्यमरः । स पीयूषममृतमिव । 'पीयूषममृतं सुधा' इत्यमरः । अस्य धारायाः पूरेण आसेकः आसेचनं सम्यक् सेचनम् । आ समन्तात् गम्यत्वादप्रयोगः । प्रगत आचार्यः प्राचार्य इति यथा । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं धारणादिकम्' । (अनु.व्या-३.३.५५) इति ॥ **असुखं** दुःखम् ।

यद्वा 'अनित्यत्वादसुखत्वान्न धर्माद्याः परं सुखम् । मोक्ष एव परानन्दः संसारे परिवर्तताम्' (वि.त.नि.उ.भारतवचनम्) इति वचनान्निर्विशेषणशब्दस्य मुख्यार्थाभिधायित्वात्सुखशब्दोऽत्र मोक्षवचनः । तद्विरोध्यसुखमज्ञानं मिथ्याज्ञानादि येषां ते तथोक्ताः । उक्तं हि । 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम्' (ब्र.सू.(३.३.४३)उदाहृतब्रह्मतर्कवचनम्) इति च । सुजनाः शोभनजनाश्च नष्टामङ्गळत्वात् । मुक्तियोग्यजनाश्चेति वा । तेषां मनांसि लोचने च मनोलोचनम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (पा.सू-२.४.२) इत्येकवद्भावः । तेन आ सम्यग्विषयान्तरपरित्यागेन पीयमानं मनसा सादरं चिन्त्यमानं लोचनाभ्यामालोक्यमानमित्यर्थः ॥ **इह** सज्जनेषु ॥ **आनन्दं सन्दुहत्** सम्पूरयत् । इहेत्युक्ते दुष्टानां दुःखं मध्यमानामुभयं च सम्पूरयदिति द्रष्टव्यम् । महत् पूज्यम् ।

यद्वा महतां सज्जनानां आनन्दो महदानन्दः तद्योग्यसुखमित्यर्थः । महांश्चासा-वानन्दश्चेति सामानाधिकरण्येन विग्रहे तु 'आङ्महतःसमानाधिकरण्यजातीययोः' (पा.सू-६.३.४६) इति आत्वं स्यात् । अथवा महांश्चासावानन्दश्चेति महानन्दः अखण्डित तद्योग्यस्वरूपसुखमित्यर्थः । नाचात्रात्वं स्यादिति वाच्यम् । स्थान्या-देशोक्तिव्यत्यासेन द्वन्द्वेऽल्पाच्कस्य परनिपातेन च महत्तत्वाद्विकुर्वाणादित्यादि-प्रयोगबलेन चैतत्सूत्रानित्यत्वस्य ज्ञापितत्वात्सुन्दरं मनोहरं, दुरितं दुष्कृतं नुदति

दूरीकरोति इति दुरितनुत् । 'नुद प्रेरणे' इत्यस्मात्कर्तरि क्विप् । दुरितस्य नुदे नुत्तये विनिवृत्तये । उदितमित्येकपदत्वेन योज्यम् । केचित्तु सर्वदेत्यर्थे नित्यदेति छान्दसो निपातः ॥ **आनन्दतीर्थश्रीमद्वक्त्रेन्दुबिम्बम्** आनन्दतीर्थस्य श्रीमद्वक्त्रेन्दुबिम्बं **कदानु** कस्मिन् वा समये **नित्यदा** निरन्तरं **सन्द्रक्ष्ये** अवलोकयिष्य इत्यर्थ इत्याहुः । तथा चास्य सज्जनाल्हादकत्वदुष्टदुःखत्वाद्युक्तं तदौपम्यमिति भावः ॥ ३३ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं तदपरोक्षज्ञानं प्रार्थयते–**उद्यदिति** ॥ हे नित्यदा नित्यपुमर्थमोक्षप्रद । श्रीमदानन्दतीर्थ । बादरायण । उद्यन्मन्दस्मितश्रिया मृदुर्मधुनोऽपि मधुरो य आलापो भाषणं स एव पीयूषं तस्य धारायाः पूरेण प्रवाहेण । सेकोऽभिषेकस्तेनोपशान्ता सुखाः ये सुजनास्तेषां मनोभिर्लोचनैश्चापीयमानम् । सुन्दरं महतामानन्दं सन्दुहत् । दुरितनुत् । उदितं नित्योदितं ते श्रीमद्वक्त्रेन्दुबिम्बं अहं कदानु कदा वा सन्द्रक्ष्ये ॥ ३३ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– उद्यदिति** ॥ अहं उद्यन्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारापूरासेकोपशान्तासुखसुजनमनोलोचनापीयमानम् सुन्दरम् इह दुरितनुत् नित्यदा उदितं आनन्दतीर्थश्रीमद्वक्त्रेन्दुबिम्बं कदा सन्द्रक्ष्ये ।

**विग्रहवाक्यानि– उद्यन्मन्दस्मितश्रीमृदुमधुमधुरालापपीयूषधारापूरासेकोपशान्तासुखसुजनमनोलोचनापीयमानम्** ॥ मन्दश्चासौ स्मितश्च मन्दस्मितः । उद्यँश्चासौ मन्दस्मितश्च उद्यन्मन्दस्मितः । स्मितस्य श्रीः स्मितश्रीः । स्मितश्रिया मृदु च तत् मधु च मृदुमधु । मधुवत् मधुराः मधुमधुराः । मधुमधुराश्च ते आलापाश्च मधुरालापाः । आलापा एव पीयूषाणि । आलापपीयूषाणां धाराः पीयूषधाराः । धाराणां पूरः धारापूरः । धारापूरेण आसेकः धारापूरासेकः ।

आसेकेन उपशान्तम् । आसेकोपशान्तम् । न सुखं असुखं येषां ते उपशान्तासुखाः । उपशान्तासुखाश्च ते सुजनाश्च उपशान्तासुखसुजनाः । मनांसि च लोचनानि च मनोलोचनानि । सुजनानां मनोलोचनानि सुजनमनोलोचनानि । मनोलोचनैः अपीयमानं मनोलोचनापीयमानम् । तत् उद्यमन्दस्मितश्रीमृदुमधुमधुरालापपीयष धारापूरासेकोपशान्तासुखजनमनोलोचनापीयमानम् ॥ **सन्द्रक्ष्ये** समित्युपसर्गः 'दृशिर् प्रेक्षणे' लडात्मने पदि मध्यमपुरुषैकवचनान्तः । सम्यक् दुहतीति सन्दुहत् । तत् सन्दुहत् ॥ **महानन्दम्** महाँश्चासौ आनन्दश्च महानन्दः । तं महानन्दम् ॥ **श्रीमद्वक्त्रेन्दुबिम्बम्** श्रीमच्च तत् वक्त्रं च श्रीमद्वक्त्रम् । आनन्दतीर्थानां श्रीमद्वक्त्रं इन्दुबिम्बमिव श्रीमद्वक्त्रेन्दुबिम्बम् । तत् श्रीमद्वक्त्रेन्दुबिम्बम् ॥ **दुरितनुत्** दुरितं नुदतीति दुरितनुत् । तत् दुरितनुत् ॥ **नित्यदा** अव्ययमेतत् ॥ ३३ ॥

**प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्ता-**
**नत्युच्चां रोचयन्तीं श्रुतिचितवचनां श्रावकांश्चोद्यचुञ्चून् ।**
**व्याख्यामुत्खातदुःखां चिरमुचितमहाचार्य चिन्तारतांस्ते**
**चित्रां सच्छास्त्रकर्तश्चरणपरिचराञ्छ्रावयास्मांश्च किञ्चित् ॥ ३४ ॥**

## कविकर्णामृतम्

सच्छास्त्रसन्दर्भतत्त्वं तद्योग्यश्रोतृभ्यो व्याकुर्वाणान् श्रीमदानन्दतीर्थाचार्यान् कृतार्थबुद्ध्या तद्व्याख्यानं शुश्रूषुः प्रार्थयते– **प्राचीनेति** ॥ **सच्छास्त्रकर्ता** सच्छास्त्राणि ऋगादयश्चत्वारो वेदाः पञ्चरात्रं भारतं मूलरामायणं च । यथोक्तं स्कान्दे–

'ऋग्यजुः सामथर्वाणो भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तद्धि शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्' इति ।

तेषां कर्ता व्याकर्ता । तस्य सम्बुद्धिः । हे सच्छास्त्रकर्तः । अथवैतदनुसारिणां भाष्यादिसच्छास्त्राणां कर्तः प्रणेतः ॥ **उचितमहाचार्य** योग्यपूज्यगुरो ॥ **प्राचीनाचीर्णपुण्योच्चयचतुरतराचारुतश्चारुचित्तान्** ॥ प्राचीनं प्राक् । 'विभाषाऽञ्चेरदिक्स्त्रियाम्' (पा.सू-५.४.८) इति विभाषाखप्रत्ययः । तत्र पूर्वजन्मस्वित्यर्थः । आचीर्णानि आचरितानि पुण्यानि । तेषां उच्चयः समूहः । तेन चतुरतराः पटुतराः । आचाराः सत्सम्प्रदायाचरणानि । तेभ्यः । 'पञ्चम्यास्तसिल्' (पा.सू-५.३.७) इति तसिल्प्रत्ययः । चारुणि निर्दोषाणि चित्तानि चैतांसि येषां तान् । 'चित्तं तु चेतो हृदयम्' इत्यमरः ॥ **चोद्यचुञ्चून्** चोद्यैः प्रश्नैः प्रसिद्धाः चोद्यचुञ्चवः तान् । 'तेन वित्तः' (पा.सू-५.२.२६) इत्यादिना चुञ्चप् ॥ **श्रावकान्** श्रोतॄन् प्रति । प्रतिशब्दोऽत्राध्याहर्तव्यः । अन्यथा 'रुच्यर्थानां प्रीयमाणः' (पा.सू-१.४.३३) इति सम्प्रदानसंज्ञायां चतुर्थी स्यात् ॥ **चिरं** अत्यर्थं **रोचयन्तीं** आनन्दयन्तीम् । श्रुतौ चितानि विद्यमानानि वचनानि वाक्यानि यस्यां ताम् ॥ **अत्युच्चां** अत्युत्कृष्टाम् ॥ **उत्खातदुःखाम्** उत्खातानि उन्मूलितानि दुःखानि यया ताम् ॥ **चित्रां** विविधश्रुतिस्मृतीतिहासपुराणाद्युपन्यासेनाऽश्चर्यरूपां **व्याख्यां** व्याख्यानम् ॥ **ते** तव **चिन्तारतान्** ध्याननिरतान् ॥ **चरणपरिचरान्** श्रीपादपरिचारकान् **अस्माकं किञ्चित्** ॥ यावद्ग्रहणयोग्यं तावदित्यर्थः ॥ **श्रावय** श्रुतिपथं प्रापय ॥ ३४ ॥

## बालबोधिनी

सच्छास्त्रसन्दर्भतत्वं तद्योग्यश्रोतृभ्यो व्याकुर्वणाच्छ्रीमदानन्दतीर्थाचार्यान् कृतार्थबुद्ध्या तद्व्याख्यानं शुश्रूषुः प्रार्थयते– **प्राचीनेति** ॥ **सच्छास्त्रकर्ता** सद् निर्दुष्टं यच्छास्त्रं भाष्यादि तस्य कर्ता प्रणेता तत्सम्बुद्धिः । उचितो योग्यो यो महाचार्यः पूज्याचार्यस्तस्य सम्बुद्धिः ॥ **प्राचीनाचीर्णपुण्योच्चयचतुरतराचारुतश्चारुचित्तान्** ॥ प्राचीनेषु पूर्वतनेषु जन्मस्वाचीर्णान्याचरितानि यानि पुण्यानि तेषामुच्चयः समूहस्तेन चतुरतराः पटुतरा ये आचाराः सत्सम्प्रदायाचरणानि तेभ्य इति आचारतः । इति

'पञ्चम्यास्तसिल्' (पा.सू-५.३.७) इति तसिल्प्रत्ययः। चारुणि निर्दोषाणि चित्तानि येषां ते तथोक्तास्तान्॥ **चोद्यचुञ्चून्** चोद्यैः प्रश्नैः चुञ्चवः प्रसिद्धास्तान् 'तेन वित्त' (पा.सू-५.२.२६) इत्यादिना चुञ्चुप्॥ **श्रावकान्** श्रोतॄन् प्रति। प्रतिशब्दोऽध्याहार्यः। अन्यथा 'रुच्यर्थानाम्' इति चतुर्थी स्यात्। **चिरम्** अत्यर्थं **रोचयन्तीं** आनन्दयन्तीं रुचिं प्रापयन्तीमिति वा। श्रुतौ चितानि विद्यमानानि वचनानि वाक्यानि यस्याः सा तथा तामत्युच्चामत्युत्कृष्टाम्। उत्खातान्युन्मूलितानि दुःखानि यया सा तथा ताम्॥ **चित्रां** विविधश्रुतिस्मृतीतिहासपुराणाद्युपन्यासे-नाश्चर्यां **व्याख्यां** व्याख्यानम्॥ **ते** तव **चिन्तारतान्** ध्याने नितरामासक्तान्॥ **चरणपरिचरान्** चरणौ परिचरन्ति सेवन्त इति चरणपरिचरास्तान् **अस्मान्** किञ्चित्स्वल्पं यावती योग्यता तावदित्यर्थः॥ **श्रावय** कर्णपथं प्रापय। 'श्रु श्रवणे' णिजन्ताल्लोट्॥ ३४॥

## मन्दबोधिनी

सच्छास्त्रं सच्छिष्येभ्यो व्याकुर्वाणान् श्रीमदानन्दतीर्थाचार्यान् तद्व्याख्यानशुश्रूषुः प्रार्थयते– **प्राचीनेति**॥ हे **महाचार्य** महान् पूज्यश्चासौ आचार्यश्च तस्य सम्बुद्धिः। हे मुख्यप्राण। **ते**। तव। **चिन्तारतान्**। ध्यानासक्तान्। तव **चरण-परिचरान्** चरणौ पादौ परिचरन्तीति चरणपरिचराः पादसेवकाः तान्। अस्मान् प्रत्यपि त्वं **व्याख्याम्**॥ त्वद्व्याख्यानम्॥ **किञ्चित्**॥ ईषत् यावच्छ्रवणयोग्यं तावदित्यर्थः॥ **चिरम्**॥ बहुकालम्। **श्रावय**। श्रवणमार्गं प्रापय। 'श्रु श्रवण' इति धातोर्लोट् परस्मैपदम्। श्रावय–श्रावयतात् श्रावयतं श्रावयत इति रूपाणि। कथम्भूत महाचार्य॥ **सच्छास्त्रकर्तः**॥ सन्ति च तानि शास्त्राणि च सच्छास्त्राणि ऋगादीनि। तेषां कर्ता व्याकर्ता उपक्रमादिभिः सम्यग्व्याख्यातेत्यर्थः। तस्य सम्बुद्धिः। 'ऋग्यजुस्समाथर्वाश्च भारतं पञ्चरात्रकम्। मूलरामायणं चैव शास्त्र-मित्यभिधीयत' इत्युक्तेः।

यद्वा सच्छास्त्राणां ब्रह्मसूत्रभाष्याणां कर्ता प्रणेता। पुनः कथम्भूत। **उचित**॥

वेदव्याख्यानकरणयोग्य । कथम्भूतां व्याख्याम् । **उत्खातदुःखाम्** ॥ उत्खातानि उन्मूलानि दुःखानि यया सा ताम् । सम्प्रदायार्थज्ञानेन श्रोतृदुःखापहामित्यर्थः । पुनः कथम्भूताम् ॥ **चित्राम्** । विविधश्रुतिस्मृतिपुराणाद्युपन्यासैः आश्चर्यरूपाम् । पुनः कथम्भूताम् । **अत्युच्चाम्** ॥ अत्युत्कृष्टाम् । अत्युच्चध्वनियुक्तामिति वा । पुनः कथम्भूताम् ॥ **श्रावकान्** ॥ **प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्ताम्** ॥ प्राचीनेषु पूर्वजन्मसु । आचीर्णानि सम्यगनुष्ठितानि । पुण्यानि च तेषां उच्चयः समूहः तेन चतुरतरः पटुतरश्चासावाचारश्च तस्मात् गुरुसम्प्रदायप्राप्ताचारादिति यावत् । चारु निर्मलं चित्तं येषां ते तान् । पुनः कथम्भूतान् श्रुतिभिः चितानि युक्तानि वचनानि वाक्यानि येषां ते तान् । स्वोक्तार्थे प्रतिवाक्यं श्रुतिसंवादं कुर्वाणानित्यर्थः । पुनः कथम्भूतान् श्रावकान् ॥ **चोद्यचञ्चून्** ॥ चोद्यैः प्रश्नैः चुञ्चून् प्रसिद्धान् बहुविधं सकलशङ्काकर्तृत्वेन प्रसिद्धानित्यर्थः ॥ ३४ ॥

## भावप्रदीपिका

एवं दिग्विजयेन सदा सन्निग्रहकृतः श्रीमद्भगवत्पादाचार्यस्य व्याख्यानमेकदा श्रुतमपि पुनः पुनः श्रोतुकामः श्रवणावृत्तेः कर्तव्यतां प्रदर्शयन् कविस्तं प्रार्थयते– **प्राचीनेति** ॥ हे **उचित** तत्त्वोपदेशकरणयोग्य ॥ **महाचार्य** महाश्चासावाचार्यश्चेति महाचार्यः । तस्य सम्बुद्धिः । यद्वा उचिताः तत्वोपदेशादियोग्याः ये महान्तः पूज्याः रुद्रादयः तेषामाचार्यः आचारादिग्राहकः इत्यर्थः । 'आङ् महतः समानाधिकरणजातीययोः' (पा.सू-६.३.४६) इति योगविभागात् वा इष्टसिद्धिः । हे सच्छास्त्रकर्तः सतामपौरुषेयत्वादिनाऽप्रामाण्यकारणदोषरहितानां शास्त्राणां ऋग्वेदादीनां कर्ता व्याकर्ता तदनुसारिणां सच्छास्त्राणां श्रीमद्भाष्यादीनां कर्ता प्रणेता वा तस्य सम्बुद्धिः । 'ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते' (क.लक्षण-९) । यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोऽन्यग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् (ब्र.सू.भा-१.१.३) इति वचनात् । अस्मांश्च पूर्वश्लोकोक्तसुजनसमुच्चयार्थश्चकारः ॥ **चिरं** बहुकाल-

पर्यन्तम् ॥ **व्याख्यां** व्याख्यानम् ॥ **किञ्चित्** श्रावय । श्रवणमार्गं प्रापयेत्यर्थः । मुख्यतस्त्वद्व्याख्यानश्रवणे रुद्रादीनामेव सुराणामधिकारात् । किञ्चिदस्मद्योग्यतानुसारेण त्वद्व्याख्यानं श्रावयेति किञ्चित्पदं प्रयुञ्जानस्येति भावः । ण्यन्तत्वात् शृग्रहदृशामिति द्विकर्मता ।

ननु त्वद्व्याख्याश्रवणेऽधिकाराभावात् कथं तदाशास्यत इत्यतोऽधिकारप्रयोजकम् विज्ञापयन् आत्मानं विशिनष्टि ॥ **प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतश्चारुचित्ताम्** ॥ प्राचीनेषु प्राग्भवेषु जन्मसु । आ सम्यक् निष्कामतया चीर्णानि अनुष्ठितानि अथवा प्राग्जन्मभवानि । प्राचीनानि आचीर्णानि यानि पुण्यानि गङ्गादितीर्थसेवादीनि । तेषामुच्चयेन उत्कृष्टसमूहेन । चतुरतराः पटुतराः । सत्सम्प्रदायानुसारिणो ये आचाराः आचरणानि । तेभ्यः 'पञ्चम्यास्तसिल्' (पा.सू-५.३.७) चारु निर्मलं चित्तं येषां ते तथोक्तास्तान् । 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति महाभारत वचनात् ॥ **ते** तव ॥ **चिन्तारतान्** ध्याननिरतान् ॥ **चरणपरिचरान्** चरणोपासकान् । अतोऽधिकारोऽस्तीति भावः । किमिति तद्व्याख्याश्रवणमाशास्यत इत्यतस्तां विशिनष्टि **अत्युच्चाम्** ॥ अत्युत्कृष्टां, अत्युत्कृष्टभगवत्स्वरूपप्रतिपादकत्वात् । उच्चध्वनियुक्तामिति वा । तादृशव्याख्याया सर्वश्रोतृश्रवणयोग्यत्वादिति भावः । अत एव **श्रावकान्** ॥ 'ण्वुल् तृचौ' (पा.सू-३.१.१३३) इति ण्वुल् प्रत्ययः । अथवा श्रावयन्तीति श्रावकास्तान् व्याख्यातॄन् श्रोतॄनिति शेषः ॥ **रोचयन्तीं** रुचिं स्पृहामुत्पादयन्तीम् । अभिषङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः । रुचेर्ण्यन्तत्वेन द्वितीयोपपत्तिः ॥ **चित्रां** विविधश्रुतिस्मृतीतिहासपुराणन्यायोपन्यासेनाश्चर्यरूपम् । उत्खातदुःखा उत्खातं उन्मूलितं दुःखं यया सा तथोक्ता ताम् । सैव व्याख्या या श्रोतृसुखवहेति भाति इति भावः । व्याख्यामहत्वं सिद्धम् । श्रोतॄन्विशिनष्टि ॥ **चोद्यचुञ्चून्** चोद्यैः प्रश्नैः वित्ताः प्रसिद्धाः चोद्यचुञ्चवः तान् । 'तेन वित्तश्चुञ्चुप्चणपौ' (पा.सू-५.२.२६) इति

चुश्रुप् प्रत्ययः। चुटू इत्यस्यानित्यत्वात् चकारस्य इत्संज्ञा। ननु शङ्कापिशाच्याः सर्वैः कर्तुं शक्यत्वात् नैतन्महत्वप्रयोजकमित्यतस्तान्विशिनष्टि ॥ **श्रुतिचितवचनान्** श्रुतिभिः चितानि युक्तानि वचनानि येषां ते तथोक्तास्तान्। उपलक्षणमेतत्। प्रत्यक्षानुमानागमोचितवचनात् साक्षात्परतत्वनिर्णयसाधनत्वाच्छ्रुतेः। स्वशब्देन ग्रहणम्। तथा चेयं श्रुत्याद्यनुसारिवचनोपक्षेपकत्वात् श्रोतृमनोहरत्वाच्च महत्वमिति भावः। श्रुतिचितवचनामिति क्वचित्पाठः। तत्र श्रुतिचितानि वचनानि यस्यां सा तथोक्ता। तामित्यर्थः ॥ ३४ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं श्रीमद्वेदव्यासमुखारविन्दात् साक्षादुपदेशमेव प्रार्थयते– **प्राचीनेति ॥** हे उचित यथावस्थितवेदाद्यर्थव्याख्याने इति शेषः। महाचार्य सच्छास्त्रकर्तः। श्रीबादरायण। प्राचीनजन्मसु आचीर्णपुण्योच्चयेन चतुरतरो य आचारः। कर्माङ्गत्वेन शुद्धिदस्तस्माद्धेतोश्चारुचित्तान् शुद्धान्तःकरणान् श्रुतिवाक्यैः सम्बद्धवचनान् चोद्यचञ्चून् प्रश्ननिपुणान् श्रावकान् सुमन्तुपैलशेषादीन् रोचयन्तीम्। तत्तत्कृतचोद्यपरिहरणेन तेषां रुचिमुत्पादयन्ती। उत्खातदुःखाम्। श्रोतृसंसारदुःखविध्वंसिनीं अत्युच्चां त्वन्मुखारविन्दजनितां व्याख्यां चिरं ते चिन्तारतान् ध्यानपरान् चरणपरिचरानस्मानपि किञ्चिच्छ्रावयेत्यन्वयः ॥ ३४ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– प्राचीनेति ॥** हे सच्छास्त्रकर्तः उचितमहाचार्य त्वं प्राचीनाचीर्ण-पुण्योच्चयचतुरतराचारतः चारुचित्तान् चोद्यचञ्चून् श्रावकान् चिरं ते चिन्तारतान् ते चरणपरिचरान् अस्मान् अत्युच्छां रोचयन्तीं श्रुतिचितवचनां उत्खातदुःखां चित्रां व्याख्यां श्रावय।

**विग्रहवाक्यानि– प्राचीनाचीर्णपुण्योच्चयचतुरतराचारतः ॥** प्राचीनेषु आचीर्णानि प्राचीनाचीर्णानि। आचीर्णानि च तानि पुण्यानि च आचीर्णपुण्याणि। पुण्यानां

उच्चयः पुण्योच्चयः । अत्यन्तं चतुरः चतुरतरः । पुण्योच्चयेन चतुरतरः पुण्योच्चय-चतुरतरः । चतुरतरश्चासौ आचारश्च चतुरतराचारः । तस्मात् । तसिल् प्रत्ययान्तादव्ययः ॥ **चारुचित्तान्** चारु चित्तं येषां ते चारुचित्ताः । तान् चारु-चित्तान् ॥ **अत्युच्चाम्** अत्यन्तं उच्चा अत्युच्चा । ताम् अत्युच्चाम् । **श्रुतिचित-वचनाम्** श्रुतिभिश्चितानि श्रुतिचितानि । श्रुतिचितानि वचनानि यस्याः सा श्रुतिचितवचना । तां श्रुतिचितवचनाम् ॥ **श्रावकान्** श्रवणे रताः श्रावकाः । तान् श्रावकान् ॥ **चोद्यचुञ्चून्** चोद्येन चुञ्चवः चोद्यचुञ्चवः । तान् चोद्यचुञ्चून् ॥ **उत्खातदुःखाम्** उत्थातानि दुःखानि यया सा उत्खातदुःखा । ताम् उत्खात-दुःखाम् ॥ **उचितमहाचार्य** उचितश्चासौ महाचार्यश्च उचितमहाचार्यः । तस्य सम्बुद्धिः उचितमहाचार्य ॥ **चिन्तारतान्** चिन्तायां रताः चिन्तारताः तांश्चिन्ता-रतान् ॥ **सच्छास्त्रकर्तः** सन्ति च तानि शास्त्राणि च सच्छास्त्राणि । सच्छास्त्राणां कर्ता सच्छास्त्रकर्ता । तस्य सम्बुद्धिः सच्छास्त्रकर्तः ॥ **चरणपरिचरान्** चरणयोः परिचराः चरणपरिचराः । तान् चरणपरिचरान् ॥ **श्रावय** 'श्रु श्रवणे' णिजन्तात् लोट् परस्मैपदमध्यमपुरुषैकवचनम् ॥ ३४ ॥

**पीठे रत्नोपक्लृप्ते रुचिररुचिमणिज्योतिषा सन्निषण्णं**
**ब्रह्माणं भाविनं त्वां ज्वलति निजपदे वैदिकाद्या हि विद्याः ।**
**सेवन्ते मूर्तिमत्यः सुचरितचरितं भाति गन्धर्वगीतं**
**प्रत्येकं देवसंसत्स्वपि तव भगवन्नर्तितद्योवधूषु ॥ ३५ ॥**

## कविकर्णामृतम्

मूर्तिमत्सर्ववैदिकविद्यासेव्यत्वेन स्तुवंस्तव चरितं तत्र देवसभासु गन्धर्वगणैः सादरं गीयत इति विज्ञापयति– **पीठ इति** ॥ **हे सुचरित** शोभनचरित्र ॥ **निजपदे** आत्मीयपदे ॥ **रुचिररुचिमणिज्योतिषा** रुचिराः मनोहराः रुचयो दीप्तयो येषां तेषां मणीनां माणिक्यानां ज्योतिषा प्रभया ज्वलति प्रकाशमाने ॥ **रत्नोपक्लृप्ते** रत्नैः उत्कृष्टमणिभिः उपक्लृप्ते निर्मिते पीठे सिंहासने **सन्निषण्णम्** समासीनम् ।

निपूर्वात्सीदतेः 'गत्यर्थाकर्मक–' (पा.सू-३.४.७२) इत्यादिना कर्तरि निष्ठा । 'रदाभ्याम्–' (पा.सू-८.२.४२) इत्यादिना निष्ठानत्वम् ॥ **भाविनं** भविष्यन्तं **ब्रह्माणं त्वां** भवन्तम् ॥ **वैदिकाद्याः** वैदिकाः वेदसम्बन्धिन्यः आद्याः आदिभूताः यासां ताः आद्यग्रहणेन तान्त्रिका गृह्यन्ते । विद्याः तत्त्वविद्याः ॥ **मूर्तिमत्यः** सशरीराः सत्यः **सेवन्ते** भजन्ते हि । अपि च **हे भगवन्** समग्रज्ञानवैराग्यादि-सम्पन्न ॥ **नर्तितद्योवधूषु** नर्तिताः नृत्यमारभमाणाः द्योवध्वः स्वर्गस्त्रियः यासां तासु । 'आदिकर्मणि क्तः कर्तरि च' (पा.सू-३.४.७१) इत्यादिना कर्तरि क्तः ॥ **देवसंसत्सु** देवानां संसदः सभाः तासु ॥ **प्रत्येकम्** एकस्मिन्नेकस्मिन् प्रत्येकम् । वीप्सायामव्ययीभावः । तत्र तत्र सर्वत्रेत्यर्थः ॥ **गन्धर्वगीतं** गन्धर्वैः देवगायनैः गीतं नियतश्रुतिस्वरमण्डलैः प्रबन्धेषु गीयमानमित्यर्थः ॥ **तव चरितं** महिमा **भाति** शोभते ॥ ३५ ॥

## बालबोधिनी

मूर्तिमत्सर्वविद्यासेव्यत्वेन स्तुवंस्तव चरितं तत्र तत्र देवसभासु गन्धर्वगणैः सदा गीयत इति विज्ञापयति– **पीठ इति** ॥ **सुचरित** सु शोभनं चरितं चरित्रं यस्य स सुचरितस्तत्सम्बुद्धिः ॥ **निजम्** आत्मीयं यत्पदं सत्यलोकाख्यं स्थानं तस्मिन् ॥ **रुचिररुचिमणिज्योतिषा** रुचिरा रूचयो दीप्तयो येषां ते तथोक्ता-स्तादृशा ये मणयस्तेषां ज्योतिः प्रभा तेन ज्वलति प्रकाशमाने ॥ **रत्नोपक्लृप्ते** रत्नैरुपक्लृप्तं निर्मितं तस्मिन् **पीठे** सिंहासने **सन्निषण्णम्** सम्यक् सीदति तिष्ठतीति सन्निषण्णस्तम् । निपूर्वात्सीदतेः 'गत्यर्था' इत्यादिना कर्तरि क्तः । 'रदाभ्याम्' इति सूत्रेण तस्य च नकारः ॥ **भाविनं** भविष्यतीति भावी तम् ॥ **ब्रह्माणं त्वाम्** ॥ **वैदिकाद्याः** वेदानां सम्बन्धिन्यो वैदिकाः । वैदिकाः आद्या यासां तास्तथोक्ताः । आद्यशब्देन तान्त्रिका गृह्यन्ते ॥ **विद्याः** तत्त्वविद्याः ॥ **मूर्तिमत्यः** मूर्तिः शरीरमासामस्तीति मूर्तिमत्यः सत्यः । 'मूर्तिः काठिन्यदेहयोः' इति यादवः ॥ **सेवन्ते** भजन्ते हि । अपि च **हे भगवन्** पूर्णषड्गुण ॥ **नर्तितद्योवधूषु** द्योः

स्वर्गस्य वध्वोऽप्सरस इत्यर्थः नर्तिता नृत्यमारभमाणा द्योवध्वो यासां तास्तथोक्ता-स्तासु । 'आदि कर्मणि क्तः कर्तरि च' इति कर्तरि क्तः ॥ **देवसंसत्सु** देवानां संसदः सभास्तासु ॥ **प्रत्येकम्** एकस्मिन्नेकस्मिन् प्रत्येकम् । वीप्सायामव्ययीभावः तत्र तत्र सर्वत्रेत्यर्थः ॥ **गन्धर्वैः** देवगायकैः ॥ **गीतं** नियतश्रुतिस्वरमण्डलैः प्रबन्धेषु गीयमानमित्यर्थः ॥ **ते** तव **चरितं** महिमा **भाति** शोभते ॥ 'भा दीप्तौ' लट्

॥ ३५ ॥

## मन्दबोधिनी

मूर्तिमत्सर्ववैदिकविद्यासेव्यत्वेन स्तुवंस्तव चरितं तत्र तत्र देवसभासु गन्धर्वगणैः सादरं गीयत इति विज्ञापयति– **पीठेति** ॥ **हे भगवन् वैदिकाद्याः** वैदिकविद्याः वेदविद्याः, आद्याः यासां ताः ॥ **विद्याः** पौरुषेयविद्याः विद्याभिमानिदेवतेति यावत् ॥ **त्वां सेवन्ते** भजन्ते । 'भज सेवायाम्' इत्यतो लडात्मनेपदम् ॥ **मूर्तिमत्यः** ॥ मूर्तयः शरीराणि आसां सन्तीति मूर्तिमत्यः । शरीरसहिताः । कथम्भूतं त्वाम् ॥ **निजपदे** निजस्थाने ॥ **पीठे** सिंहासने ॥ **सन्निषण्णम्** समासीनम् । 'विष्टरः पीठमासनम्' इत्यभिधानम् । कथम्भूते पीठे ॥ **रत्नोपक्लृप्ते** । रत्नैः उपक्लृप्ते निर्मिते । रत्नखचित इत्यर्थः । पुनः कथम्भूते पीठे ॥ **रुचिर-रुचिमणिज्योतिषा** रुचिराः मनोहराः रुचयो दीप्तयो येषां ते रुचिररुचयः । ते च ते मणयः माणिक्यानि च तेषां ज्योतिषा प्रभया ॥ **ज्वलति** देदीप्यमाने । पुनः कथम्भूतं **त्वाम् ब्रह्माणं** ब्रह्मस्वरूपम् ॥ **हे सुचरित** मुख्यप्राण ॥ **तव** ते **चरितं** चरित्रम् ॥ **भाति** शोभते । 'भा दीप्तौ' इत्यतो लट् । कथम्भूतं चरितम् ॥ **देवसभासु** देवसभास्वपि ॥ **प्रत्येकम्** इति क्रियाविशेषणम् । तत्र तत्र गन्धर्वैर्देवगायकैः गीतं गीयमानम् । कथम्भूतासु सभासु । **नर्तितद्योवधूषु** दिवः सम्बन्धिन्यः वध्वः द्योवध्वः । स्वर्गस्त्रियः । नर्तिताः नृत्यं कुर्वाणाः द्योवध्वः यासु ताः तथोक्ताः तासु ॥ ३५ ॥

## भावप्रदीपिका

कथमेतस्योचितमहाचार्यत्वादिकमित्यतस्तत्स्वरूपं निरूपयन् स्तौति– **पीठे इति** ॥ हे भगवन्ननादिप्रवृद्धश्रीहर्येकाधीनपूर्णज्ञानादिसम्पन्न । हे **सुचरित** शोभनचरित्र ॥ **मूर्तिमत्यः** प्रशस्ता मूर्तिः कायो यासां ताः । 'मूर्तिः काठिण्य-काययोः' इत्यमरः । वैदिकाद्याः पौरुषेयापौरुषेयलक्षणा विद्याः ॥ **रत्नोपक्लृप्ते** रत्नैः वज्रादिभिर्निर्मिते ॥ **रुचिररुचिमणिज्योतिषा रुचिरा** मनोरमा ॥ **रुचिर्दीप्तिर्येषां** मणीनां माणिक्यादीनाम् ॥ **ज्योतिषा** तेजसा ॥ **ज्वलति** प्रकाशमाने ॥ **निजपदे** स्वीयस्थाने वायुपदे । **पीठे** आसने । अधिकरणे सप्तमी ॥ **सन्निषण्णं** समासीनम् । सन्निपूर्वात् सदेर्गत्यर्थाकर्मकेत्यादिना कर्तरि क्तप्रत्ययः ॥ **भाविनं** भविष्यन्तम् ॥ **ब्रह्माणं** चतुर्मुखं **त्वाम्** ॥ **सेवन्ते** स्तवनादिना परिचर्यां कुर्वन्तीत्यर्थः ॥ **गन्धर्वगीतम्** गन्धर्वैः गीतम् । गीयमानम् । कर्मणि क्तः ॥ **तव** मुख्य-प्राणस्य ॥ **चरितं** चरित्रम् ॥ **नर्तितद्योवधूषु** द्यौः सुरलोकः । द्योदिवौ द्वे स्त्रियाम्' इत्यमरः । तत्सम्बन्धिन्यो वध्वः स्त्रियः । 'वधूर्जाया स्नुषा स्त्री वा' इत्यमरः । नर्तिताः नर्तनमारभमाणाः नृत्ताः वा । द्योवध्वस्स्वर्गस्त्रियो यासु ताः तासु । 'नृती गात्रविक्षेपे' इत्यस्माद्बहुळमेतन्निदर्शनमिति स्वार्थे ण्यन्तात् कर्मणि क्तः । निष्ठायां सेटि णिलोपः । अत्र देवैरिति शेषः । नर्तिताः नर्तितुं प्रयोजिताः । द्योर्वध्वो यासु ताः नर्तितद्योवध्वः तासु । अण्यतान्नृत्यतेः क्तप्रत्ययविधौ तु 'स्वीदितो निष्ठायाम्' इति इण् निषेधात् नृत्ता इति स्यात् । एकस्यांमेकस्यां प्रत्येकम् । वीप्सायामव्ययीभावः । अपिशब्दः सम्भावनायां समुच्चये वा । गर्हासमुच्चयप्रश्नशङ्का-सम्भावनास्वपि इत्यमरः ॥ **देवसंसत्सु** सम्भावितासु ब्रह्मरुद्रादिदेवसभास्वपि । न केवलं भूलोकादिष्वित्यर्थः । सभासमितिसंसदः इत्यमरः ॥ **भाति** प्रकाशते । हि यस्मात् तस्मात् । एतस्य भाविचतुर्मुखत्वेन मूर्तिमत्सकलविद्याभिमानि-देवतासेव्यत्वात् ब्रह्मादिसुरवरसभासङ्कीर्त्यमानयशस्करत्वाच्च युक्तमुचितमहाचार्यत्वादिकमिति भावः ॥ ३५ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

विद्यादेवता सेवितत्वादिना पुनः स्तौति– **पीठेति ॥ हे सुचरित ॥ भगवन्** रत्नोपक्लृप्ते अत एव रुचिररुचिमणिज्योतिषाज्वलति निजपदे निजस्थानभूते पीठे सन्निषण्णम् । यद्वा निजपदे बदरिकाश्रमे मेरौ वा एतादृशे पीठे सन्निषण्णं ब्रह्माणं गुणपूर्णं ब्रह्मभिः वेदैरण्यत इति वेदवेद्यं वा । भाविनं सर्वत्र व्याप्तम् । जगदुत्पादकं वा त्वां वैदिकाद्याः विद्याः मूर्तिमत्यः । तदभिमानिदेवता इति यावत् सेवन्ते । तव चरितं च नर्तितद्योवधूषु । नर्तनं कुर्वन्त्यो द्योवध्वोप्सरसो यासु तासुदेव-संसत्सु अपिशब्देन ऋष्यादिसभासु च प्रत्येकं गन्धर्वगीतं सत् भातीत्यन्वयः ॥३५॥

## श्रीनिवासतीर्थीया

**अन्वयः– पीठ इति ॥** हे सुचरित निजपदे रुचिररुचिमणिज्योतिषा ज्वलति रत्नोपक्लृप्ते पीठे सन्निषण्णं भाविनं ब्रह्माणं त्वां वैदिकाद्याः विद्याः मूर्तिमत्यः सत्यः सेवन्ते हि हे भगवन् नर्तितद्योवधूषु देवसंसत्स्वपि प्रत्येकं देवगन्धर्वगीतं तव चरितं भाति ।

**विग्रहवाक्यानि– रत्नोपक्लृप्ते ॥** रत्नैः उपक्लृप्तं रत्नोपक्लृप्तम् । तस्मिन् रत्नोपक्लृप्ते ॥ **रुचिररुचिमणिज्योतिषा** रुचिरा रुचिः येषां ते रुचिररुचयः । रुचिररुचयश्च ते मणयश्च रुचिररुचिमणयः । मणीनां ज्योतिः मणिज्योतिः । तेन रुचिररुचिमणिज्योतिषा ॥ **सन्निषण्णम्** सम्यक् निषण्णः सन्निषण्णः । तम् । **निजपदे** निजं च तत् पदं च निजपदं । तस्मिन् निजपदे ॥ **वैदिकाद्याः** वेद-सम्बन्धिन्यो वैदिकाः । वैदिकाः आद्याः यासां ताः वैदिकाद्याः ॥ **सेवन्ते** 'सेव सेवायां' लडात्मने पदं प्रथमपुरुषबहुवचनम् ॥ **सुचरित** शोभनं चरितं यस्यासौ सुचरितः । तस्य सम्बुद्धिः ॥ **देवगन्धर्वगीतम्** देवगन्धर्वैः गीतं देवगन्धर्वगीतम् ॥ **देवसंसत्सु** देवानां संसदः देवसंसदः । तासु देवसंसत्सु । **नर्तितद्योवधूषु** नर्तितुमारब्धाः नर्तिताः द्योवध्वः यासु ताः नर्तितद्योवध्वः । तासु नर्तितद्योवधूषु ॥ ३५ ॥

**सानुक्रोशैरजस्रं जनिमृतिनिरयाद्यूर्मिमालाविलेऽस्मिन्**
**संसाराब्धौ निमग्नाञ्छरणमशरणानिच्छतो वीक्ष्य जन्तून् ।**
**युष्माभिः प्रार्थितः सन् जलनिधिशयनः सत्यवत्यां महर्षे**
**र्व्यक्तश्चिन्मात्रमूर्तिर्न खलु भगवतः प्राकृतो जातु देहः ॥ ३६ ॥**

## कविकर्णामृतम्

ज्ञानदानपात्राराहित्यात् संसारसमुद्रे निमज्जतो जन्तून् वीक्ष्य कृपया ज्ञानदानेन तानुद्धर्तुं भवद्भिर्विज्ञापितो भगवान् व्यासरूपेणाविरासीदिति विज्ञापयति– **सानुक्रोशैरिति ॥ जनिमृतिनिरयाद्यूर्मिमालाविले** जनिर्जननम् । मृतिर्मरणम् । निरयो नरकः । ते आदयो येषां तान्येव ऊर्मयः । तासां मालाः पङ्क्तयः । ताभिः आविले कलुषिते ॥ **अस्मिन्** परिदृश्यमाने ॥ **संसाराब्धौ** संसारसमुद्रे ॥ **अजस्रं** अनवरतम् ॥ **निमग्नान्** निपतितान् ॥ **अशरणनान्** अरक्षकान् । 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ **शरणं** रक्षकं **इच्छतः** आकाङ्क्षतः । **जन्तून्** प्राणिनः । **वीक्ष्य** आलोक्य ॥ **अनुक्रोशः** कृपा । तेन सह वर्तन्त इति सानुक्रोशैः 'तेन सह' (पा.सू-२.२.२८) इत्यादिना बहुव्रीहिः ॥ **युष्माभिः प्रार्थितः** याचितः ॥ **जलनिधिशयनः** श्रीनारायणः ॥ **सत्यवत्यां** सत्यवतीदेव्याम् ॥ **महर्षेः** पराशरात् ॥ **चिन्मात्रमूर्तिः** केवलज्ञानदेहः सन् **व्यक्तः** आविर्भूतः । यदुक्तम्– 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः । किमात्मको भगवान् । ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः ।' (ब्र.सू.भा-२.२.४१)

'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः ॥' (अनु.व्या-२.२.२८०)

'बुद्धिमान्मनोवानङ्गप्रत्यङ्गवान्' इति ॥ **भगवतः** श्रीनारायणस्य देहः ॥ **जातु** कदाचित् । 'कदाचिज्जातु' इत्यमरः ॥ **प्राकृतः** प्रकृतिसम्बन्धी निश्चेतनात्मकशरीरगुणो **न खलु** न भवति हि । तदुक्तम्– 'निश्चेतनात्मकशरीरगुणैश्च हीनः' (म.भा.ता.नि-१.११) इति ॥ ३६ ॥

## बालबोधिनी

ज्ञानदानपात्रराहित्यात्संसारसमुद्रे निमज्जतो जन्तून् वीक्ष्य कृपया ज्ञानदानेन तानुद्धर्तुं भवद्भिर्विज्ञापितो भगवान् व्यासरूपेणाविरासीदिति विज्ञापयति– **सानुक्रोशैरिति** ॥ **जनिमृतिनिरयाद्यूर्मिमालाविले** जनिर्जन्म सा च मृतिर्मरणं सा च निरयो नरकः स च ते आदयो येषां तानि तथोक्तानि तान्येवोर्मयस्तासां मालाः । पङ्क्तयस्ताभिराविले कलुषिते ॥ **अस्मिन्** अनुभूयमाने **संसाराब्धौ** संसाराख्यसमुद्रे ॥ **अजस्रं** अनवरतम् ॥ **निमग्नान्** निपतितान् ॥ **अशरणनान्** न विद्यते शरणं रक्षको येषां ते तथा तान् । शरणं रक्षकं 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ **इच्छतः** आकाङ्क्षतः ॥ **जन्तून्** मनुष्यादिसज्जीवान् ॥ **वीक्ष्य** अवलोक्य ॥ **सानुक्रोशैः** ॥ अनुक्रोशेन कृपया सह वर्तन्त इति सानुक्रोशाः तैः । 'तेन सह' (पा.सू-२.२.२८) इत्यादिना बहुव्रीहिः । **युष्माभिः प्रार्थितः** अवतारार्थं याचितः ॥ **जलनिधिशयनः** ॥ जलानां निधिराश्रयः समुद्रस्तस्मिन् शेत इति तथोक्तः श्रीविष्णुः ॥ **सत्यवत्यां** सत्यवतीदेव्याम् ॥ **महर्षेः** महांश्चासौ ऋषिश्च तस्मात् पराशरादित्यर्थः ॥ **चिन्मात्रमूर्तिः** केवला चिज्ज्ञानं चिन्मात्रं तन्मूर्तिः शरीरं यस्य स तथा सन् ॥ **व्यक्तः** आविर्भूतः ॥ **भगवतः** पूर्णषड्गुणस्य विष्णोर्देहः ॥ **जातु** कदाचित् । प्रकृतेर्विकारः **प्राकृतः** जडात्मक इत्यर्थः ॥ **न खलु** भवति ॥ ३६ ॥

## मन्दबोधिनी

ज्ञानलक्षणसंसारसमुद्रतरणपात्राभावात् संसारसमुद्रे निमज्जतो जन्तून्वीक्ष्य कृपया ज्ञानलक्षणोपेतेन तानुद्धर्तुं भवद्भिर्विज्ञापितो भगवान् व्यासरूपेण आविरासीदिति विज्ञापयति– **सानुक्रोशैरिति** ॥ **जलनिधिशयनः** ॥ जलनिधौ समुद्रे शयनं योगनिद्रा यस्य स तथोक्तः । नारायणः ॥ **महर्षेः** महान् पूज्यश्चासौ ऋषिः त्रिकालज्ञश्च तस्मात् पराशरात् ॥ **सत्यवत्यां** तन्नामकायाम् ॥ **चिन्मात्रमूर्तिः** । चिदेव मात्रं चिन्मात्रम् । चिन्मात्रा मूर्तिर्यस्य स तथा केवलज्ञानदेहः सन् ।

**व्यक्तः** ॥ आविर्भूतः । अभवत् ॥ **भगवतः** वेदव्यासस्य देहः ॥ **प्राकृतः** प्रकृतिजन्यः ॥ **जातु** कदाचित् ॥ **न खलु** नैव । कथम्भूतः सन् ॥ **युष्माभिः** बहुवचनमाद्यर्थे । त्वदादिभिः देवैः ॥ **प्रार्थितः सन्** । कथम्भूतैर्युष्माभिः ॥ **सानुक्रोशैः** ॥ अनुक्रोशः दया निरुपाधिका परदुःखप्रहाणेच्छा । तया सहिताः तैः । किं कृत्वा ॥ **अस्मिन्** परिदृश्यमाने ॥ **संसाराब्धौ** संसारसमुद्रे ॥ **अजस्रम्** अनवरतम् ॥ **निमग्नान्** परतत्वज्ञानशून्यानिति यावत् ॥ **जन्तून्** सज्जनान् ॥ **वीक्ष्य** अवलोक्य । कथम्भूते संसाराब्धौ ॥ **जनिमृतिनिरयाद्यूर्मिमालाविले** ॥ जनिः उत्पत्तिः । 'जनिरुत्पत्तिरुद्भव' इत्यमरः । मृतिर्मरणम् । निरयो नरकः । एते आदयो येषां क्षुत्पिपासादीनाम् । ते तथोक्ताः । ते च ते ऊर्मयः तरङ्गश्च' । 'भङ्गस्तरङ्गऊर्मिर्वा' इत्यमरः । तेषां माला पङ्क्तयः ताभिः आविले कलुषे । 'कलुषोऽनच्छ आविल' इत्यभिधानम् । कथम्भूतान् जन्तून् ॥ **अशरणान्** ॥ न विद्यते शरणं रक्षकः येषां ते अशरणाः तान् रक्षकरहितान् । पुनः कथम्भूतान् ॥ **शरणम्** ॥ रक्षकम् ॥ **इच्छतः** ॥ अपेक्षमाणान् ॥ ३६ ॥

## भावप्रदीपिका

नन्वेवंविधस्य जगत्समीरणस्य भूमाववतरणं किमर्थमित्यतस्तत्र निमित्तं विवक्षुः तदुपोद्धातरूपेण तदाराध्य भगवत्प्रादुर्भावं सहेतुकं तावन्निरूपयति– **सानुक्रोशैरिति** ॥ **अजस्रं** निरन्तरम् । **जनिमृतिनिरयाद्यूर्मिमालाविले** ॥ जनिरुत्पत्तिः । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । मृतिः मरणम् । देहापेक्षयैवैतदिति । 'जीवो नित्यो धातुरस्य त्वनित्यः' इति वचनात् । निरयः दुर्गतिः । 'निरयो दुर्गतिस्त्रियाम्' इत्यमरः । निरोरेफादेशस्यासिद्धत्वादुपसर्गस्यायतौ इति न लत्वम् । एते आदयः प्रथमा एषां ते तथोक्ताः । क्षुत्पिपासा शोकमोहरागद्वेषाः ऊर्मयस्तरङ्गा इव तद्वत् पुनः पुनः परावर्तमाना इत्यर्थः । 'भङ्गस्तरङ्गऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । गर्भभवजन्मविपरिणामवृध्यवक्षयविनाशा इति वा षडूर्मयः । जायते अस्ति

विपरिणमते वर्धते अपक्षीयते विनश्यतीति षट् भावविकाराः इत्युक्तेः । पूर्वमतद्गुण-संविज्ञानबहुव्रीहिः । अनन्तरं तद्गुणसंविज्ञानः इति बोध्यम् । तेषां मालाभि । परम्पराभिः आविलः कलुषः तस्मिन् ॥ **अस्मिन्** अनुभूयमाने ॥ **संसाराब्धौ** संसारोऽब्धिरिव तस्मिन् । संसारसमुद्रे **निमग्नान्** नितरां मज्जनं प्राप्तान् । स्वहिताहितप्राप्तिपरिहारोपायाज्ञानित्यर्थः ॥ **अशरणान्** अनाथान् अकारवाच्यं ब्रह्मैव शरणं रक्षकं येषां ते अशरणाः तानिति वा । 'अ इति ब्रह्म' (ऐ.उ. २.३.८) इति श्रुतेः । तद्व्यतिरिक्तपालकरहितान् तत्पाल्यान् मुक्तियोग्यानित्यर्थः ॥ **शरणं** रक्षकं मोक्षं चेच्छतः अपेक्षमाणान् ॥ **जन्तून्** जननवतः प्राणिनः ॥ **वीक्ष्य** अवलोक्य **सानुक्रोशैः** ॥ अनुक्रोशेन दयया निरुपाधिपरदुःखप्रहाणेच्छया सहितैः **युष्माभिः त्वं** च ब्रह्मादयश्च यूयं तैः । त्यदादीनि सर्वैर्नित्यमिति युष्मदः शेषः । अथवा 'अर्धर्चाः पुंसि च' (पा.सू-२.४.३१) इति बहुवचनमाद्यर्थे । ब्रह्मादिभिर्देवैरित्यर्थः ॥ **प्रार्थितः** स्तुत्यादिना कृतप्रार्थनः ॥ **जलनिधिशयनः** जलनिधौ समुद्रे शयनं योगनिद्रा यस्य स तथोक्तः । नारायणः । 'यमन्तःसमुद्रे कवयो वयन्ति'(महा.ना.अ-१,मं-३)इत्यादिश्रुतेः ॥ **महर्षे** भगवद्विषयककर्मानुष्ठानादिना महान् पूज्यः । य ऋषिः कालत्रयज्ञः । तस्मात्पराशरात् ॥ **सत्यवत्यां** सत्यं निर्दोषपरिपूर्णज्ञानानन्दस्वरूपं मुक्तामुक्तनियामकं वा ब्रह्म यस्याः पुत्रत्वेनास्तीति सत्यवती । 'सच्छब्द उत्तमं ब्रूयादानन्दयतीति वै वदेत् । येति ज्ञानं समुद्दिष्टं पूर्णानन्ददृशिस्ततः' (भाग.ता.१०.३.२७) इति वचनात् । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तान्येतानि त्रीण्यक्षराणि स ति यमिति तद्यत् सत् तदमृतं अथ यत् ती तन्मर्त्यम् । अथ यत् ती यन्मर्त्यं अथ यद्वयं तेनोभे यच्छति' (छां.उ-८.५.३) इति छान्दोग्योपनिषदि च । सत्यं ऋतं अप्रियवर्जितं यथार्थकथनं सत्यो धर्मो वास्याः अस्तीति वा । 'सत्यभूतं हितं प्रोक्तं सत्यो धर्म उदाहृतः' इत्यभिधानम् । तस्यां **चिन्मात्रमूर्तिः** चिदेव चिन्मात्रम् । मूर्तिः शरीरम् । यस्य स तथोक्तः । केवलज्ञानदेहः सन्नुत्पत्त्यादिदोषरहित एव सन् **व्यक्तः** आविर्भूतः । न तु प्राकृतदेहः सन् उत्पन्न इत्यर्थः । अत्र व्यक्त

इत्येतद्विधेयविशेषणस्यैव क्रियागर्भितत्वान्न क्रियान्तरापेक्षा । उपलक्षणमेतत् । आनन्दादिमात्रमूर्तिरित्यपि द्रष्टव्यम् । अत्राविर्भूतस्य भगवतः निर्वाह्यं कार्यं, सत्सिद्धान्तोपदेशादिकमुद्देश्यमिति चिन्मात्रग्रहणम् । नत्वन्यकल्याणगुण-व्यवच्छेदार्थः । अपि तु जडशरीरव्यावृत्तिबोधनार्थमिति । अत एवाग्रेतनपद्ये गुणगणनिलय इति वक्ष्यति । अथवा चिन्मात्रं चिदयोगव्यवच्छिन्नं नियत चित्सम्बन्धवदित्यर्थः । अत्र युष्माभिः प्रार्थित इत्यादिना लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् । वेदार्थाज्ञमधिकारवर्जितं च स्त्रियादिकम् ॥ **अवेक्ष्य** प्रार्थयामासुर्देवेशं पुरुषोत्तमम् । इत्याद्यागमप्रसिद्धां कथां सूचयति । भगवान् पराशरात्सत्यवत्यामुत्पन्न इत्येव किं न स्यादित्येतत्प्रतिषेधति **न खलु इति ॥** खलु अवधारणे 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । किमात्मको भगवान् ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः इति बुद्धिमनोङ्गप्रत्यङ्गवतां भगवतो लक्षयामहे । बुद्धिमान् मनोवानङगप्रत्यङ्गवानिति । 'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः विष्णुः परमोऽक्षरः' (अनु.व्या-२.२.२८०)। इत्यादि परमाक्षर इत्यादिश्रुत्या ।

> स सर्वभूतप्रकृतेर्विकारान् गुणांश्च दोषांश्च स मुने व्यतीतः ।
> अतीतसर्वावरणोऽखिलात्मा तेनाश्रुतं यद्भुवनान्तराळे ॥
>
> स सर्वकर्मप्रभवोऽगुणात्मको यस्मिन् सदा तिष्ठति शक्तिवर्गः ।
>
> समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतवर्गः ।
> इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
>
> तेजोमहैश्वर्यमहावबोधसद्वीर्यसौख्यादिगुणैकराशिः ।
> परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥

इत्यादि विष्णुपुराणे षष्ठेंऽशे मैत्रेयं प्रति भगवच्छब्दनिर्वचनावसरे पराशरवचनं प्रमितमिति नात्र कश्चित्क्षुद्रोपद्रव इति भावः ॥ ३६ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं तदवतारकथां विज्ञापयति– **सानुक्रोशैरिति** ॥ संसाराब्धौ निमग्नान् अशरणान् संरक्षकरहितान् । अत एव शरणमीक्षमाणान् जन्तून् वीक्ष्य सानुक्रोशैः । नष्टधर्मज्ञानलोककृपालुभिरिति यावत् । युष्माभिर्युष्मत्सरूपैः भवत्प्रतिबिम्बैरिति यावत् । अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति न्यायात् । दृष्टं हि सिंहो माणवक इत्यादौ । एवं विधैर्ब्रह्मादिभिः प्रार्थितः सन् जलनिधिशयनो भवान् महर्षेः पराशरात्सत्यवत्यां चिन्मात्रमूर्तित्वादभिव्यक्त एव न देवदत्तादिवज्जातः । तस्यैवोपपादनम् । न खलु भगवतस्तव प्राकृतो देहो जातु सम्भवतीति । न हि प्रतिबिम्बस्य स्वातन्त्र्येण क्रियेति द्योतनाय युष्माभिरिति निर्देशः ॥ ३६ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– सानुक्रोशैरिति** ॥ जनिमृतिनिरयाद्यूर्मिमालाविले अस्मिन् संसाराब्धौ निमग्नान् अशरणान् शरणमिच्छतः जन्तून् वीक्ष्य जलनिधिशयनः हरिः युष्माभिः प्रार्थितः सन् महर्षेः सकाशात् सत्यवत्यां चिन्मात्रमूर्तिः व्यक्तोऽभूत् । तथा भगवतो देहः जातु प्राकृतो न खलु ।

**विग्रहवाक्यानि– सानुक्रोशैः** ॥ अनुक्रोशेन सहिताः सानुक्रोशाः । तैः सानुक्रोशैः ॥ **जनिमृतिनिरयाद्यूर्मिमालाविले** जनिश्च मृतिश्च निरयश्च जनिमृतिनिरयाः । निरया एव आदयः येषां ते निरयादयः । निरयादय एव ऊर्मयः निरयाद्यूर्मयः । निरयाद्यूर्मिणां मालाः ऊर्मिमालाः मालानाम् आविलः मालाविलः । तस्मिन् जनिमृतिनिरयाद्यूर्मिमालाविले । **संसाराब्धौ** संसार एव अब्धिः संसाराब्धिः । तस्मिन् संसाराब्धौ ॥ **निमग्नान्** नितरां मग्नाः निमग्नाः । तान् निमग्नान् ॥ **अशरणान्** न विद्यते शरणं येषां ते अशरणाः तान् । अशरणान् ॥ **जलनिधिशयनः** जलनिधौ शेत इति जलनिधिशयनः ॥ **महर्षेः** महाँश्चासौ ऋषिश्च महर्षिः । तस्मात् महर्षेः ॥ **चिन्मात्रमूर्तेः** चिन्मात्रा मूर्तिः यस्य स चिन्मात्रमूर्तिः तस्य चिन्मात्रमूर्तेः ॥ **प्राकृतः** प्रकृतेः सम्बन्धी प्राकृतः ॥ ३६ ॥

इत्येतद्विधेयविशेषणस्यैव क्रियागर्भितत्वान्न क्रियान्तरापेक्षा । उपलक्षणमेतत् । आनन्दादिमात्रमूर्तिरित्यपि द्रष्टव्यम् । अत्राविर्भूतस्य भगवतः निर्वाह्यं कार्यं, सत्सिद्धान्तोपदेशादिकमुद्देश्यमिति चिन्मात्रग्रहणम् । नत्वन्यकल्याणगुण-व्यवच्छेदार्थः । अपि तु जडशरीरव्यावृत्तिबोधनार्थमिति । अत एवाग्रेतनपद्ये गुणगणनिलय इति वक्ष्यति । अथवा चिन्मात्रं चिदयोगव्यवच्छिन्नं नियत चित्सम्बन्धवदित्यर्थः । अत्र युष्माभिः प्रार्थित इत्यादिना लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् । वेदार्थाज्ञमधिकारवर्जितं च स्त्रियादिकम् ॥ **अवेक्ष्य** प्रार्थयामासुर्देवेशं पुरुषोत्तमम् । इत्याद्यागमप्रसिद्धां कथां सूचयति । भगवान् पराशरात्सत्यवत्यामुत्पन्न इत्येव किं न स्यादित्येतत्प्रतिषेधति **न खलु इति** ॥ खलु अवधारणे 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । किमात्मको भगवान् ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः इति बुद्धिमनोङ्गप्रत्यङ्गवतां भगवतो लक्षयामहे । बुद्धिमान् मनोवानङ्गप्रत्यङ्गवानिति । 'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः । ज्ञानज्ञानः सुखसुखः विष्णुः परमोऽक्षरः' (अनु.व्या-२.२.२८०)। इत्यादि परमाक्षर इत्यादिश्रुत्या ।

स सर्वभूतप्रकृतेर्विकारान् गुणांश्च दोषांश्च स मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनाश्रुतं यद्भुवनान्तराळे ॥

स सर्वकर्मप्रभवोऽगुणात्मको यस्मिन् सदा तिष्ठति शक्तिवर्गः ।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतवर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥

तेजोमहैश्वर्यमहावबोधसद्वीर्यसौख्यादिगुणैकराशिः ।
परः परागां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥

इत्यादि विष्णुपुराणे षष्ठेंऽशे मैत्रेयं प्रति भगवच्छब्दनिर्वचनावसरे पराशरवचनं प्रमितमिति नात्र कश्चित्क्षुद्रोपद्रव इति भावः ॥ ३६ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

इदानीं तदवतारकथां विज्ञापयति– **सानुक्रोशैरिति** ।। संसाराब्धौ निमग्नान् अशरणान् संरक्षकरहितान् । अत एव शरणमीक्षमाणान् जन्तून् वीक्ष्य सानुक्रोशैः । नष्टधर्मज्ञानलोककृपालुभिरिति यावत् । युष्माभिर्युष्मत्सरूपैः भवत्प्रतिबिम्बैरिति यावत् । अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति न्यायात् । दृष्टं हि सिंहो माणवक इत्यादौ । एवं विधैर्ब्रह्मादिभिः प्रार्थितः सन् जलनिधिशयनो भवान् महर्षेः पराशरात्सत्यवत्यां चिन्मात्रमूर्तित्वादभिव्यक्त एव न देवदत्तादिवज्जातः । तस्यैवोपपादनम् । न खलु भगवतस्तव प्राकृतो देहो जातु सम्भवतीति । न हि प्रतिबिम्बस्य स्वातन्त्र्येण क्रियेति द्योतनाय युष्माभिरिति निर्देशः ।। ३६ ।।

## श्रीनिवासतीर्थीया

**अन्वयः– सानुक्रोशैरिति** ।। जनिमृतिनिरयाद्यूर्मिमालाविले अस्मिन् संसाराब्धौ निमग्नान् अशरणान् शरणमिच्छतः जन्तून् वीक्ष्य जलनिधिशयनः हरिः युष्माभिः प्रार्थितः सन् महर्षेः सकाशात् सत्यवत्यां चिन्मात्रमूर्तिः व्यक्तोऽभूत् । तथा भगवतो देहः जातु प्राकृतो न खलु ।

**विग्रहवाक्यानि– सानुक्रोशैः** ।। अनुक्रोशेन सहिताः सानुक्रोशाः । तैः सानुक्रोशैः ।। **जनिमृतिनिरयाद्यूर्मिमालाविले** जनिश्च मृतिश्च निरयश्च जनिमृतिनिरयाः । निरया एव आदयः येषां ते निरयादयः । निरयादय एव ऊर्मयः निरयाद्यूर्मयः । निरयाद्यूर्मिणां मालाः ऊर्मिमालाः मालानाम् आविलः मालाविलः । तस्मिन् जनिमृतिनिरयाद्यूर्मिमालाविले । **संसाराब्धौ** संसार एव अब्धिः संसाराब्धिः । तस्मिन् संसाराब्धौ ।। **निमग्नान्** नितरां मग्नाः निमग्नाः । तान् निमग्नान् ।। **अशरणान्** न विद्यते शरणं येषां ते अशरणाः तान् । अशरणान् ।। **जलनिधिशयनः** जलनिधौ शेत इति जलनिधिशयनः ।। **महर्षेः** महाँश्चासौ ऋषिश्च महर्षिः । तस्मात् महर्षेः ।। **चिन्मात्रमूर्तेः** चिन्मात्रा मूर्तिः यस्य स चिन्मात्रमूर्तिः तस्य चिन्मात्रमूर्तेः ।। **प्राकृतः** प्रकृतेः सम्बन्धी प्राकृतः ।। ३६ ।।

**अस्तव्यस्तं समस्तश्रुतिगतमधमैरत्नपूगं यथान्धै-**
**रर्थं लोकोपकृत्यै गुणगणनिलयः सूत्रयामास कृत्स्नम् ।**
**योऽसौ व्यासाभिधानस्तमहमहरहर्भक्तितस्त्वत्प्रसादात्**
**सद्यो विद्योपलब्ध्यै गुरुतममगुरुं देवदेवं नमामि ॥ ३७ ॥**

## कविकर्णामृतम्

व्यासत्वेनावतीर्णो भगवान् किमकरोदित्याकाङ्क्षायां व्यासावतारप्रयोजनाभिधान-पूर्वकं तं प्रणमति– **अस्तव्यस्तमिति** ॥ **गुणगणनिलयः** गुणाः ज्ञानानन्दादयः । तेषां गणः समूहः । तस्य निलयः निवासः ॥ **व्यासाभिधानः** श्रीवेदव्यास-नामकः । योऽसौ प्रकृतत्वेन वर्णितो भगवान् ॥ **अधमैः** अज्ञैः ॥ **अन्धैः यथा** । 'इव वद्वा यथाशब्दा उपमाने प्रकीर्तिताः' ॥ **अस्तव्यस्तम्** अन्यथा प्रतिपादितम् । रत्नपूगपक्षे तरतमाभावेन प्रोतम् ॥ **समस्तश्रुतिगतम्** सर्ववेदस्थितम् । अन्यत्र प्रसिद्धतया सकलजनश्रुतिपथगतम् । **कृत्स्नं** समस्तं अर्थम् ॥ **रत्नपूगं** रत्नसमूह-मिव ॥ **लोकोपकृत्यै** लोकोपकाराय । लोकप्रसाधनाय च ॥ **सूत्रयामास** 'ॐ अथातो ब्रह्मजिज्ञासा ॐ' इत्यादिसूत्रेषु प्रतिपादयामास । अन्यत्र तन्तुप्रोतं चकारेत्यर्थः । अहं तत्प्रसादात् तस्योत्तमप्रसादात् ॥ **सद्योविद्योपलब्ध्यै** अबिलम्बेन ज्ञानप्राप्त्यर्थम् । 'सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः' (अणु.भा.अ-३श्लो-६)इति ज्ञानस्य सर्वपुरुषार्थप्रदत्वादिति भावः । **अहरहः** प्रतिदिनम् ॥ **अगुरुं** अविद्यमानगुरुम् ॥ **गुरुतमं** परमगुरुम् ॥ **देवदेवं** देवोत्तमं श्रीवेदव्यासम् ॥ **भक्तितः** भक्त्या नमामि प्रणतोऽस्मि । अत्र श्लोकद्वये स्कान्दपुराणस्थितोऽर्थः प्रतिपादितः । तथाहि–

'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥

शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥

चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥

कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा' इति ॥ ३७ ॥

## बालबोधिनी

व्यासत्वेनावतीर्णो भगवान् किमकरोदित्याकाङ्क्षायां व्यासावतारप्रयोजनपूर्वकं तं प्रणमति– **अस्तमिति** ॥ गुणानामानन्दादीनां गणः समूहस्तस्य निलयो निवासः । व्यास इत्यभिधानं नाम यस्य स तथोक्तः । योऽसावप्राकृतशरीरत्वेनावतीर्णो भगवान् । अधमैर्नीचैज्ञानशून्यैरित्यर्थः ॥ **अन्धैर्यथा** अन्धैरिव । 'इव वद्वा यथाशब्दा उपमाने प्रकीर्तिताः' इत्यभिधानम् ॥ **अस्तव्यस्तम्** अन्यथाप्रतिपादितम् । रत्नपूगपक्षे तरतमाभावेन प्रोतम् । समस्ता याः श्रुतयो वेदास्तेषु गतं प्रतिपाद्यतया स्थितम् । रत्नपूगपक्षे प्रसिद्धतया सकलजनश्रोत्रपथगम् । कृत्स्नं समस्तमर्थं रत्नानां पूगः समूहस्तमिव ॥ **लोकोपकृत्यै** सज्जनोपकाराय **सूत्रयामास** 'अथातो ब्रह्मजिज्ञासा इत्यादिसूत्रेषु प्रतिपादयामास । 'सूत्रवेष्टने(सूचने)' लिट् । रत्नपूगपक्षे तन्तुप्रोतं चकारेत्यर्थः । अहं तव प्रसादस्त्वत्प्रसादस्तस्मात् **सद्यः** अविलम्बेन **विद्योपलब्ध्यै** तत्वज्ञानप्राप्त्यै । अहरहः प्रतिदिनम् । न विद्यते गुरुर्यस्य स तथा ते सर्वोत्तमत्वेन गुरुरहितमित्यर्थः ॥ **गुरुतमं** मुख्यगुरुं देवदेवं ब्रह्मादिदेवतानामपि देवं तं व्यासं **भक्तितो** भक्त्या नमामि 'णमु प्रह्वत्वे शब्दे च' लट् ॥ ३७ ॥

## मन्दबोधिनी

व्यासत्वेनावतीर्णो भगवान् किं करोतीत्याकाङ्क्षायां व्यासावतारप्रयोजनपूर्वकं प्रणमति– **अस्तव्यस्तमिति** ।। हे मुख्यप्राण । अहं तं वेदव्यासाभिधानं हरिम् ।। **त्वत्प्रसादात्** तव प्रसादात् । **सद्यः** ।। अविलम्बेन ।। **विद्योपलब्ध्यै** ।। ज्ञानलाभाय ।। **अहरहः** ।। प्रतिदिनम् । भक्त्या **नमामि** ।। 'णमु प्रह्वत्वे शब्दे च' इत्यतः लट् परस्मैपदम् । नमामि नमावः नमामः इति रूपाणि । कथम्भूतम् । **गुरुतमम्** ।। अतिशयेन गुरुः गुरुतमः तं मूलगुरुमित्यर्थः । पुनः कथम्भूतम् ।। **अगुरुम्** ।। न विद्यते गुरुः उपदेष्टा यस्य तम् । तस्यैव सर्वोपदेष्टृत्वादित्यर्थः ।। देवैः ब्रह्मादिभिः । देवं स्तुत्यम् । देवानां देवं क्रीडादिगुणप्रदमिति वा तम् । कथम्भूतः ।। **यः असौ व्यासाभिधानः** ।। व्यासनामा भगवान् ।। **समस्तश्रुतिगतम्** । समस्ताश्च ताः श्रुतयश्च तासु गतं प्रतिपाद्यम् । **कृत्स्नम्** । समस्तम् ।। **अर्थं** परापरतत्वरूपं अर्थम् ।। **लोकोपकृत्यै** ।। सकलसज्जनोपकाराय ।। **सूत्रयामास** ।। असूत्रयत् । 'ॐ अथातो ब्रह्मजिज्ञासा ॐ' इत्यादिसूत्रेषु प्रतिपादयामासेत्यर्थः । कथम्भूतमर्थम् । अन्यथा प्रतिपादितम् । क इव सूत्रयामास । यथा कश्चिन्निपुणः **रत्नपूगं** माणिक्यसमूहम् । सूत्रयामास तन्तुप्रोतं चकार तथेत्यर्थः । कथम्भूतं रत्नपूगम् । अधमैरुपक्रमादिषड्विधतात्पर्यलिङ्गानभिज्ञैः अन्धैः अन्धसदृशैः । सूक्ष्मदृष्टिरहितैरिति यावत् ।। **अस्तव्यस्तम्** ।। अन्यथाप्रोक्तम् । व्यत्यासेन प्रोक्तमित्यर्थः । पुनः कथम्भूतं रत्नपूगम् ।। **समस्तश्रुतिगतम्** ।। समस्तजनकर्णेषु अलङ्कारतया विद्यमानम् । कथम्भूतः असौ ।। **गुणगणनिलयः** ।। गुणाः ज्ञानादयः तेषां समूहः तस्य निलयः आवासभूतः ।। ३७ ।।

## भावप्रदीपिका

एवमवतीर्णो भगवान् व्यासः किमकरोदित्याकाङ्क्षायां तदवतारप्रयोजनं निरूपयन् स्वाभीष्टमर्थयंस्तं भगवन्तं प्रणमति– **अस्तव्यस्तमिति** ।। योऽसाववतीर्णः

गुणगणनिलयः । 'निरः कुषः' (पा.सू-७.२.४६) इति पाणिनीयसूत्रे निःसह इति वक्तव्ये निर इति निर्देशेन रेफान्तस्योपसर्गान्तस्य ज्ञापितत्वात् । उपसर्गरेफस्य 'उपसर्गस्यायतौ' (पा.सू-८.२.१९) इति लत्वं ज्ञेयम् । अन्यथा रेफस्यासिद्धत्वात् लत्वं न स्यात् । ज्ञानादिगणानां निलयः निलीयते तिष्ठत्यस्मिन्नर्थे इति निलयः आश्रयः । 'अयगतौ' इत्यस्मात् पचादित्वादच् । व्यस्यति वेदान् सम्यग्विभजति । विशिष्टानां विविधदोषान् आ सम्यगस्यति निरस्यतीति वा । वि विविधस्थानेषु नीचमध्योच्चेषु विशेषेणान्तर्यामित्वादिना आ सम्यगसङ्गत्वेन तत्तत्कृतलेपशून्यत्वे आस्ते तिष्ठति इति वा । विशिष्टेषु ब्रह्मादिषु आ सम्यक्फलदत्वेनास्त इति वा । वि विशिष्टे वैकुण्ठादिस्थाने आ सम्यग्व्यक्तत्वेन सर्वदाऽस्त इति वा व्यासः । व्यास इत्यभिधानं नाम यस्य स तथोक्तः । समस्तश्रुतिगतं सर्वेषु वेदेषु प्रतिपाद्यत्वेन विषयतया वर्तमानम् । सर्वैर्वेदैर्गतं प्रतिपादितं वा । गत्यर्थानां प्रतिपत्त्यर्थत्वात् । अधमैः सर्ववेदोत्पन्नं उपक्रमादिषड्विधतात्पर्यलिङ्गानभिज्ञैः । अन्यथाभिज्ञैर्वेत्यर्थः । 'अधमे न्यूनकुत्सितौ' इत्यमरः । अस्तश्चासौ व्यस्तश्चेति विशेषणसमासः । तम् ॥ **अस्तम्** अज्ञातम् ॥ **व्यस्तम्** वैपरीत्येन ज्ञातम् ॥ **कृत्स्नं** समस्तम् । समस्तश्रुतिगतमर्थं प्रमेयम् । ईश्वरस्वातन्त्र्यादिरूपं इतरपारतन्त्र्यादिरूपमित्यर्थः । लोकोपकृत्यै सकलसज्जनानामुपकाराय ॥ **सूत्रयामास** 'अथातो ब्रह्मजिज्ञासेत्यादिब्रह्मसूत्रेषु प्रतिपादयामासेत्यर्थः । कमिव अलङ्कार्यजनोपकाराय समस्तजनकर्णेषु अलङ्कारतया विद्यमानम् ॥ **अन्धैः** चक्षुरहितैः । अस्तं तरतमभावेनाज्ञातम् । व्यस्तं अन्यथा प्रोतम् । रत्नपूगं यथा वज्रादिरत्नसमूहमिव । 'इव वद्वा यथाशब्दा उपमानस्य वाचकाः' इत्यभिधानम् । जनालङ्काराय माणिक्यादिरत्नसमूहरूपमर्थस्तं तान्तवसूत्रेषु प्रोतं चकारेव इत्यर्थः । अहम् । सद्यः शीघ्रम् ॥ **विद्योपलब्ध्यै** अपरोक्षज्ञानप्राप्तये । 'सर्वेऽपि पुरुषार्थास्स्युर्ज्ञानादेव न संशयः' (अणु.भाष्य.अ-३,श्लो-६) इत्यपरोक्षज्ञानस्य सकलपुरुषार्थसाधनत्वादिति भावः ॥ **त्वत्प्रसादात्** भक्तितः । सर्वप्रातिपदिकात्तसिरिति तसिप्रत्ययः । तव प्रसादोत्पन्नभक्त्येत्यर्थः । 'भक्त्या त्वनन्यया

शक्यमहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप' (भ.गी.अ-११.श्लो-५४) इति गीतोक्तेः ॥ **देवदेवं** देवोत्तमम् । देवानां क्रीडादिभोगप्रदं वा ॥ **गुरुतमं** जगद्गुरुब्रह्मादिगुरुत्वात् ॥ **अगुरुं** न विद्यते गुरुरुपदेष्टा यस्य स तथोक्तः तम् । स्वतः सर्वज्ञमित्यर्थः । तं वेदान्तशास्त्रप्रणेतारं वेदव्यासम् ॥ **अहरहः** प्रतिदिनम् ॥ **नमामि** नमस्करोमि । अथवा त्वत्प्रसादात् या विद्योपलब्धिः अपरोक्षज्ञानप्राप्तिः । तस्यै । भक्तित इत्यादियोज्यम् । एवमेव खलु सौम्य 'आचार्यवान् पुरुषो वेद' (छां.उ-६.१४.२) इति श्रुतेः । अचार्यप्रसादैकलभ्यो हि भगवानिति भावः ॥ ३७ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवमवतारकथां निरूप्येदानीमवतारकृत्यं ब्रह्मसूत्ररचनारूपं निरूपयति– **अस्तव्यस्तमिति** ॥ योऽसौ व्यासाभिधानो भवान् समस्तश्रुतिगतं कृत्स्नमर्थमधमैः कल्यादिभिरस्तव्यस्तम् । क्वचिदस्तं क्वचिद्व्यस्तम् । सामान्येन विशेषेण चान्यथाप्रतिपादितमिति यावत् । लोकोपकृत्यै सूत्रयामास । वेदार्थनिर्णयाय ब्रह्मसूत्राणि चकरेति यावत् । तत्र दृष्टान्तः । यथा कश्चित्कुशलोऽन्धैर्जनैरस्तव्यस्तं इतस्ततः प्रक्षिप्तं रत्नपूगं सूत्रप्रोतं करोति तथेति । तं गुरुतमं अगुरुं गुरुरहितं त्वां त्वत्प्रसादात्सद्योविद्याप्राप्त्यै अहरहर्भक्त्या नमामि इत्यन्वयः । एतेनात्र सूत्राणामाप्ति श्रुतियुक्तिमूलत्वेन प्रामाण्यमत्युपादेयता च सूचिता भवति । तथा हि । गुरुतममिति कर्तुः विवक्षितार्थतत्वज्ञानं 'असंशयः संशयच्छिद्गुरुरुक्तो मनीषिभिः' (म.भा.ता.नि-१.१२२) इति वचनात् । गुणगणनिलयश्चिन्मात्रमूर्तिरित्यादिना करणपाटवम् । सूत्रयामासेत्यनेनैव विवक्षा । लोकानां ब्रह्मादीनामुपकृत्यै उपकारायेत्यनेन श्रोत्रानुकूल्यं प्रसङ्गानुकूल्यं च । ब्रह्मादिलोकस्य तत्वज्ञानयोग्यतायाः भगवत्प्रेमास्पदतायाश्च सुप्रसिद्धत्वात् । समस्तश्रुतिगतमित्यनेन श्रुतिमूलत्वम् । सूत्रयामासेत्यनेनैव युक्तिमूलत्वम् । न्यायनिबन्धनात्मकत्वात् सूत्राणाम् । समस्तश्रुतीत्यनेनैव सूत्राणां विश्वतो मुखता लक्षणं च सूचितं भवति । लोकोपकृत्यै निमित्तत्वोक्त्या उपादेयतापीति ॥ ३७ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– अस्तव्यस्तमिति** ।। गुणगणनिलयः योऽसौ व्यासाभिधानः हरिः अन्धैः रत्नपूगं यथा तथा अस्तव्यस्तं समस्तश्रुतिगतं कृत्स्नं अर्थं लोकोपक्लृप्त्यै सूत्रयामास तं गुरुतमम् देवदेवं व्यासाभिधानं हरिं अहं त्वत्प्रसादात् सद्यो विद्योपलब्ध्यै अहरहः नमामि ।

**विग्रहवाक्यानि– समस्तश्रुतिगतम्** ।। समस्ताश्च ता श्रुतयश्च समस्तश्रुतयः । समस्तश्रुतिषु गतः समस्तश्रुतिगतः । तम् ।। **रत्नपूगं** रत्नानां पूगः रत्नपूगः । तं रत्नपूगम् ।। **लोकोपक्लृप्त्यै** लोकानाम् उपक्लृप्तिः लोकोपक्लृप्तिः । तस्यै लोकोपक्लृप्त्यै । गुणानां गणाः गुणगणाः गुणगणानां निलयः गुणगणनिलयः ।। **सूत्रयामास** सूत्रयाम् आंप्रत्ययान्ताव्ययम् ।। **आस** 'अस भुवि' लिट् परस्मैपदं प्रथमपुरुषैकवचनम् ।। **व्यासाभिधानः** व्यास इति अभिधानं यस्य सः व्यासाभिधानः ।। **त्वत्प्रसादात्** तव प्रसादः त्वत्प्रसादः । तस्मात् त्वत्प्रसादात् ।। **विद्योपलब्ध्यै** विद्याया उपलब्धिः विद्योपलब्धिः । तस्यै विद्योपलब्ध्यै । **गुरुतमम्** अतिशयेन गुरुः गुरुतमः । तम् ।। **अगुरुम्** न विद्यते गुरुर्यस्यासौ अगुरुः । तम् ।। **देवदेवम्** देवानां देवः देवदेवः । तम् ।। **नमामि** 'णमु प्रह्वत्वे शब्दे च' लट् परस्मैपदं उत्तमपुरुषैकवचनम् ।। ३७ ।।

**आज्ञामन्यैरधार्यां शिरसि परिसरद्रश्मिकोटीरकोटौ**
**कृष्णस्याक्लिष्टकर्मा दधदनुसरणादर्थितो देवसङ्घैः ।**
**भूमावागत्य भूमन्नसुकरमकरोर्ब्रह्मसूत्रस्य भाष्यं**
**दुर्भाष्यं व्यस्य दस्योर्मणिमत उदितं वेदसद्युक्तिभिस्त्वम् ।। ३८ ।।**

## कविकर्णामृतम्

भगवता बादरायणेन ब्रह्मसूत्राणि कृत्वाऽऽज्ञापितभाष्यादिकरणरूपकार्यस्त्वं तदाज्ञां शिरसाऽङ्गीकृत्य भूमाववतीर्णः सन् यावत्परमतं न निराक्रियते

शक्यमहमेवं विधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप' (भ.गी.अ-११.श्लो-५४) इति गीतोक्तेः ॥ **देवदेवं** देवोत्तमम् । देवानां क्रीडादिभोगप्रदं वा ॥ **गुरुतमं** जगद्गुरुब्रह्मादिगुरुत्वात् ॥ **अगुरुं** न विद्यते गुरुरुपदेष्टा यस्य स तथोक्तः तम् । स्वतः सर्वज्ञमित्यर्थः । तं वेदान्तशास्त्रप्रणेतारं वेदव्यासम् ॥ **अहरहः** प्रतिदिनम् ॥ **नमामि** नमस्करोमि । अथवा त्वत्प्रसादात् या विद्योपलब्धिः अपरोक्षज्ञानप्राप्तिः । तस्यै । भक्तित इत्यादियोज्यम् । एवमेव खलु सौम्य 'आचार्यवान् पुरुषो वेद' (छां.उ-६.१४.२) इति श्रुतेः । अचार्यप्रसादैकलभ्यो हि भगवानिति भावः ॥ ३७ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवमवतारकथां निरूप्येदानीमवतारकृत्यं ब्रह्मसूत्ररचनारूपं निरूपयति– **अस्तव्यस्तमिति** ॥ योऽसौ व्यासाभिधानो भवान् समस्तश्रुतिगतं कृत्स्नमर्थमधमैः कल्यादिभिरस्तव्यस्तम् । क्वचिदस्तं क्वचिद्व्यस्तम् । सामान्येन विशेषेण चान्यथाप्रतिपादितमिति यावत् । लोकोपक्लृप्त्यै सूत्रयामास । वेदार्थनिर्णयाय ब्रह्मसूत्राणि चकरेति यावत् । तत्र दृष्टान्तः । यथा कश्चित्कुशलोऽन्धैर्जनैरस्तव्यस्तं इतस्ततः प्रक्षिप्तं रत्नपूगं सूत्रप्रोतं करोति तथेति । तं गुरुतमं अगुरुं गुरुरहितं त्वां त्वत्प्रसादात्सद्योविद्याप्राप्त्यै अहरहर्भक्त्या नमामि इत्यन्वयः । एतेनात्र सूत्राणामाप्ति श्रुतियुक्तिमूलत्वेन प्रामाण्यमत्युपादेयता च सूचिता भवति । तथा हि । गुरुतममिति कर्तुः विवक्षितार्थतत्वज्ञानं 'असंशयः संशयच्छिद्गुरुरुक्तो मनीषिभिः' (म.भा.ता.नि-१.१२२) इति वचनात् । गुणगणनिलयश्चिन्मात्रमूर्तिरित्यादिना करणपाटवम् । सूत्रयामासेत्यनेनैव विवक्षा । लोकानां ब्रह्मादीनामुपक्लृप्त्यै उपकारायेत्यनेन श्रोत्रानुकूल्यं प्रसङ्गानुकूल्यं च । ब्रह्मादिलोकस्य तत्वज्ञानयोग्यतायाः भगवत्प्रेमास्पदतायाश्च सुप्रसिद्धत्वात् । समस्तश्रुतिगतमित्यनेन श्रुतिमूलत्वम् । सूत्रयामासेत्यनेनैव युक्तिमूलत्वम् । न्यायनिबन्धनात्मकत्वात् सूत्राणाम् । समस्तश्रुतीत्यनेनैव सूत्राणां विश्वतो मुखता लक्षणं च सूचितं भवति । लोकोपक्लृप्त्यै निमित्तत्वोक्त्या उपादेयतापीति ॥ ३७ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– अस्तव्यस्तमिति ॥** गुणगणनिलयः योऽसौ व्यासाभिधानः हरिः अन्धैः रत्नपूगं यथा तथा अस्तव्यस्तं समस्तश्रुतिगतं कृत्स्नं अर्थं लोकोपक्लृप्त्यै सूत्रयामास तं गुरुतमम् देवदेवं व्यासाभिधानं हरिं अहं त्वत्प्रसादात् सद्यो विद्योपलब्ध्यै अहरहः नमामि ।

**विग्रहवाक्यानि– समस्तश्रुतिगतम् ॥** समस्ताश्च ता श्रुतयश्च समस्त-श्रुतयः । समस्तश्रुतिषु गतः समस्तश्रुतिगतः । तम् ॥ **रत्नपूगं** रत्नानां पूगः रत्नपूगः । तं रत्नपूगम् ॥ **लोकोपक्लृप्त्यै** लोकानाम् उपक्लृप्तिः लोकोपक्लृप्तिः । तस्यै लोकोपक्लृप्त्यै । गुणानां गणाः गुणगणाः गुणगणानां निलयः गुणगणनिलयः ॥ **सूत्रयामास** सूत्रयाम् आंप्रत्ययान्ताव्ययम् ॥ **आस** 'अस भुवि' लिट् परस्मैपदं प्रथमपुरुषैकवचनम् ॥ **व्यासाभिधानः** व्यास इति अभिधानं यस्य सः व्यासाभिधानः ॥ **त्वत्प्रसादात्** तव प्रसादः त्वत्प्रसादः । तस्मात् त्वत्प्रसादात् ॥ **विद्योपलब्ध्यै** विद्याया उपलब्धिः विद्योपलब्धिः । तस्यै विद्योपलब्ध्यै । **गुरुतमम्** अतिशयेन गुरुः गुरुतमः । तम् ॥ **अगुरुम्** न विद्यते गुरुर्यस्यासौ अगुरुः । तम् ॥ **देवदेवम्** देवानां देवः देवदेवः । तम् ॥ **नमामि** 'णमु प्रह्वत्वे शब्दे च' लट् परस्मैपदं उत्तमपुरुषैकवचनम् ॥ ३७ ॥

**आज्ञामन्यैरधार्यां शिरसि परिसरद्रश्मिकोटीरकोटौ**
**कृष्णस्याक्लिष्टकर्मा दधदनुसरणादर्थितो देवसङ्घैः ।**
**भूमावागत्य भूमन्नसुकरमकरोर्ब्रह्मसूत्रस्य भाष्यं**
**दुर्भाष्यं व्यस्य दस्योर्मणिमत उदितं वेदसद्युक्तिभिस्त्वम्** ॥ ३८ ॥

## कविकर्णामृतम्

भगवता बादरायणेन ब्रह्मसूत्राणि कृत्वाऽऽज्ञापितभाष्यादिकरणरूपकार्यस्त्वं तदाज्ञां शिरसाऽङ्गीकृत्य भूमाववतीर्णः सन् यावत्परमतं न निराक्रियते

तावत्स्वमतमप्रतिष्ठितं भवतीति न्यायादितरदुर्भाष्यनिराकरणपूर्वकं श्रीमद्भाष्यं कृतवानसीति विज्ञापयति– **आज्ञामिति** ॥ **हे भूमन्** महामहिमन् ॥ **कृष्णस्य** श्रीवेदव्यासस्य । **अन्यैः** त्वदितरैर्देवैः **अधार्याम्** अङ्गीकर्तुमशक्याम् ॥ **आज्ञां** अनुशासनम् । परिसरन्तः प्रसरन्तः रश्मयो यासां ताः । कोटीराणां मुकुटानां कोटयः अग्राणि यस्य तस्मिन् । 'कोटिरग्रे प्रकर्षे च सङ्ख्या चापाग्रयोरपि' इति निघण्टुः । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' (पा.सू-७.१.७४) इति पुंवद्भावे 'इकोऽचि विभक्तौ' (पा.सू-७.१.७३) इति नुमभावः ॥ **शिरसि** दधत् दधानः । 'नाभ्यस्ताच्छतुः' (पा.सू-७.१.७८) इति नुमप्रतिषेधः ॥ **अक्लिष्टकर्मा** अनवद्यव्यापारः त्वम् ॥ **देवसङ्घैः** देवसमूहैः ॥ **अनुसरणात्** अनुसरणं प्राप्य । कर्मणि ल्यब्लोपे पञ्चमी ॥ **प्रार्थितः** अभ्यर्थितः सन् ॥ **भूमौ** आगत्य । आगमनक्रियाधिकरणविवक्षायां सप्तमी ॥ **दस्योः** चोरात् । विश्वापहारित्वादिति भावः ॥ **मणिमतः** सङ्करात् **उदितं** उत्पन्नम् । **दुर्भाष्यम्** ॥ अनुभवश्रुतिस्मृति-विरुद्धत्वात्तस्य दुष्टत्वादिति भावः ॥ **वेदैः** सद्युक्तिभिः सदुपपत्तिभिश्च **व्यस्य** निरस्य ॥ **असुकरं** असर्वज्ञैः कर्तुमशक्यम् ॥ **ब्रह्मसूत्रस्य भाष्यं अकरोः** कृतवानसि ॥ ३८ ॥

## बालबोधिनी

श्रीवेदव्यासेन ब्रह्मसूत्राणि कृत्वा तद्भाष्यकरणार्थमाज्ञापितस्त्वं तदाज्ञां शिरसादाय भूमाववतीर्णः सन्नितरदुर्भाष्यनिराकरणपूर्वकं श्रीमद्भाष्यं कृतवानसीति विज्ञापयति– **आज्ञामिति** ॥ हे भूमन् महामहिमन् ॥ **कृष्णस्य** श्रीवेदव्यासस्य ॥ **अन्यैः** त्वदितरैर्देवैः **अधार्यां** धर्तुमशक्यामङ्गीकर्तुमशक्यामित्यर्थः ॥ **आज्ञाम्** अनुशासनम् । परिसरन्तः । प्रसरन्तो रश्मयो यासां तास्तथोक्तास्तादृशाः कोटि-कोटयः किरीटाग्राणि यस्मिन् तत्तथोक्तं तस्मिन् । 'कोटिरग्रे प्रकर्षे च सङ्ख्या-चापाग्रयोरपि' इत्यभिधानम् । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' (पा.सू-७.१.७४) इति पुंवद्भावे 'इकोऽचि विभक्तौ' (पा.सू-७.१.७३) इति

नुमभावः ॥ **शिरसि दधत्** दधानः । 'नाभ्यस्ताच्छतुः' (पा.सू-७.१.७८) इति नुमभावः । 'अक्लिष्टमनवद्यं कर्म यस्य स तथोक्तः त्वं देवसङ्घा देवसमूहा-स्तैरनुसरणमनुसृतिस्तस्मादनुसरणं प्राप्येत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे च' (पा.सू-३.३.९३) इति वचनात् । 'अर्थितोऽभ्यर्थितः सन् **भूमावागत्य** आगमनक्रियाविवक्षायां सप्तमी ॥ **दस्योः** चोरस्य जगन्मिथ्यात्ववादित्वेन विश्वाप-हारित्वादिति भावः ॥ **मणिमतः** सङ्करात् **उदितम्** उत्पन्नं **दुर्भाष्यम्** दुष्टं च तद्भाष्यं च दुर्भाष्यं तदीयभाष्यप्रतिपादितार्थस्यात्मब्रह्मैक्यादेरनुभवश्रुतिस्मृत्यादि विरुद्धत्वादिति भावः । वेदाश्च सद्युक्तयश्च ताभिः ॥ **व्यस्य** निरस्य । सुकरं न भवति इत्यसुकरमसर्वज्ञैः कर्तुमशक्यामित्यर्थः । ब्रह्मणो वेदस्य सूत्रं तस्य जात्यैकवचनमेतत् । सकलवेदार्थनिर्णायकसूत्रसमूहात्मकब्रह्ममीमांसाशास्त्रस्येत्यर्थः । यद्वा ब्रह्मणो वेदस्य सूत्राणि ब्रह्मसूत्राणि तेषां समूहः ब्रह्मसूत्रं तस्य 'तस्य समूहः' (पा.सू-४.२.३७) इत्यण् ॥ **भाष्यमकरोः** कृतवानसि 'डुकृञ् करणे' लङ् ॥ ३८ ॥

## मन्दबोधिनी

भगवता नारायणेन सज्जनोद्धारार्थं भुवि अवतीर्णः सन् ब्रह्मसूत्रभाष्यादिकं कुर्वित्याज्ञापितः सन् भुवि अवतीर्य इतरदुर्भाष्यनिराकरणपूर्वकं श्रीमद्भाष्यं कृतवानसीति विज्ञापयति– **आज्ञामिति** ॥ **हे भूमन्** ॥ हर्यैकाधीन गुणपूर्ण हे मुख्यप्राण । त्वं **भूमौ आगत्य** ॥ अवतीर्य । महाबदरीं प्राप्य । वेदव्यासाय नारायणायेति पूरणीयम् । मध्वविजये तथोक्तत्वात् ॥ **अन्यैः** असर्वज्ञैः ॥ **असुकरम्** ॥ कर्तुं अशक्यम् ॥ **ब्रह्मसूत्रस्य** ॥ ग्रन्थस्य भाष्यं व्याख्यानम् ॥ **अकरोः** कृतवानसि । 'डु कृञ् करणे' इत्यस्माद्धातोर्लङ् परस्मैपदम् । अकरोः अकुरुतं अकुरुत । इति रूपाणि । किं कृत्वा सद्युक्तिभिः वेदैः श्रुतिभिः । सुद्युक्तिभिः निर्दोषाभिः युक्तिभिश्च ॥ **दस्योः** चोरात् । प्रमाणप्रसिद्ध-विश्वापहारित्वादिति भावः ॥ **मणिमतः** ॥ तन्नामकासुरस्वरूपात् सङ्करात् ॥ **उदितं** उत्पन्नम् ॥ **दुर्भाष्यम्** ॥ स्वस्य भाष्यत्वेनाभिमतश्रुत्यादिविरुद्धत्वादस्य

दुष्टत्वादिति भावः ॥ **व्यस्य** ॥ निरस्य । कथम्भूतः त्वम् ॥ **अन्यैः** रुद्रादिभिः ॥ **अधार्याम्** । धर्तुमशक्याम् । कर्तुमशक्यामिति यावत् ॥ **कृष्णस्य** । कृष्ण-शब्दवाच्यस्य विष्णो**राज्ञाम्** ॥ अनुशासनम् ॥ **शिरसि** ॥ **दधत्** । दधानः । ननु कृष्णशब्दस्य नारायणे प्रयोगादर्शनात् कथमेवं व्याख्यानमिति चेत् । न । 'अथाजामिल आकर्ण्य दूतानां कृष्णयोरिति' श्रीमद्भागवते कृष्णशब्दस्य विष्णौ प्रयोगदर्शनात् । कथम्भूते शिरसि ॥ **परिसरद्रश्मिकोटीरकोटौ** ॥ परिसरन्तः गच्छन्तः रश्मयः किरणाः यासां ताः परिसरद्रश्मयः । कोटीराणां मुकुटानां कोटयः अग्राणि यस्मिन् तथोक्तम् । तस्मिन् । यद्वा **परिसरद्रश्मिकोटीरकोटिः** ॥ प्रकर्ष उत्कर्ष इति यावत् । तस्मिन् तथोक्तम् । देदिप्यमानकिरीटेन शोभमानशिर-सीत्यर्थः । 'कोटिरग्रे प्रकर्षे च सङ्ख्या चापाग्रयोरपि' इति निघण्टुः ॥ **अक्लिष्ट-कर्मा** ॥ न विद्यते क्लेशकराणि कर्माणि यस्य स तथोक्तः । अनायासेन सर्व-व्यापारान् करोतीत्यर्थः । पुनः कथम्भूतस्त्वम् ॥ **देवसङ्घैः** ॥ रुद्रादिभिः । देवसमूहैः ॥ **अनुसरणात्** । ल्यप् लोपनिमित्ता पञ्चमी । अनुसरणं कृत्वा अर्थितः प्रार्थितः ॥ ३८ ॥

## भावप्रदीपिका

एवं भगवता बादरायणेन सतां प्राणिनां निःश्रेयसाय प्रणीतस्य ब्रह्मसूत्र-जातस्याविद्यापटलपिहितनयनैरन्यैः दुर्वादिभिरन्यथा व्याख्यातत्वेन सत्सम्प्रदाय-प्रवर्तकाभावेन च तत्त्वनिर्णयाभावात् क्लिश्यमानेषु सज्जनेषु दयालुभिः ब्रह्मादिदेवैः प्रार्थितेन भगवता नारायणेन अवताराय प्रेरितो मुख्यप्राणोऽवतीर्य ब्रह्मसूत्रभाष्यं कृतवान् त्वमिति विज्ञापयति– **आज्ञामिति** ॥ **हे भूमन्** श्रीहर्यैकाधीनगुणपूर्ण । विपुलार्थात् बहुशब्दात् पृथ्वादित्वादिभ्यः इमनिज्वा' (पा.सू-५.१.१२२) इति इमनिच् प्रत्यये 'बहोर्लोपो भू च बहोः' इति भ्वादेशे च कृते भूमेति सिद्ध्यति । भावभवित्रोरभेदविवक्षया धर्म्यभिधायकत्वात् ॥ **अन्यैः** त्वदितरैः रुद्रादिदेवैः ॥ **अधार्यां** धर्तुमशक्याम् । कर्षति नियमादिना सर्वं चेतानाचेतनात्मकं विश्वं स्वाधीनं करोतीति कृष्णः । 'कृष विलेखने' इत्यस्मादौणादिको नङ्प्रत्ययः । 'यतः कर्षसि

देवेश नियम्य सकलं जगत् । अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' (गी.भा-अ-५.श्लो-२) इति वचनात् । यद्वा कृषिः पूर्णो णः आनन्दो यस्यासौ कृष्णः । 'कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः । तयोरैक्यात् परं ब्रह्म कृष्ण इत्यभिधीयते' (ब्रह्मसंहिता-१०.८.१४) इति च । तस्य विष्णोराज्ञां **शिरसि** मस्तके **परिसरद्रश्मिकोटीरकोटौ** परिसरन्तः परितो गच्छन्तः । रश्मयः किरणाः यस्य तच्च तत् परिसरद्रश्मि । तत् च तत् कोटीरं मुकुटं च । तस्य कोटौ अग्रप्रदेशे । 'कोटिरग्रे प्रकर्षे च सङ्ख्यां चापाग्रयोरपि' इत्यभिधानम् । **दधत्** दधानः ॥ **देवसङ्घैः** देवसमूहैः ॥ **अनुसरणात्** ॥ ल्यब्लोपनिमित्ता पञ्चमी । अनुसरणं कृत्वेत्यर्थः ॥ **अर्थितः** प्रार्थितः सन् ॥ **भूमावागत्य** एत्य । आगमन-क्रियाजन्यव्यापाराधिकरणविवक्षया सप्तमी । अक्लिष्टं निर्मलं कर्म कृत्यं यस्यासौऽक्लिष्टकर्मा । निर्मलव्यापारत्वम् । **वेदसद्युक्तिभिः** श्रुतिगतहितोपपत्तिभिः ॥ **दस्योः** तस्करात् विश्वापहारित्वादिति भावः । 'दस्युतस्करमोषकाः' इत्यमरः ॥ **मणिमतः** मणिमन्नामकादसुरात् ॥ **उदितं** उद्भूतम् । 'भुवः प्रभवः'(पा.सू-१.४.३१) इति अपादानत्वात्पञ्चमी ॥ **दुर्भाष्यम्** परस्य भाष्यत्वेनाभिमतम् । दुष्टत्वं च सकलश्रुतीतिहासपुराणानुभवतदनुगृहीततर्कव्याख्येयब्रह्मसूत्रविरुद्धत्वात् आत्यन्तिकानर्थसाधनत्वाच्च । दुष्टं विरुद्धं, जीवेश्वरैक्यादि भाष्यते प्रतिपाद्यते अनेन इति वा दुर्भाष्यम् ॥ **व्यस्य** निरस्य । **असुकरं** अन्यैरसर्वज्ञैः सुतरां कर्तुमशक्यम् ॥ **ब्रह्मसूत्रभाष्यमकरोः** ॥ कृतवानसि लङ् । परपक्षनिराकरणमन्तरा स्वपक्ष-दार्ढ्याऽसम्भवात् । निराकरणस्य पूर्वकालत्वं व्यस्येति क्त्वा प्रत्ययेनाह । प्रागुविद्यमानमेव बौद्धशास्त्रं सङ्करेण प्रच्छन्नतया वैदिकमतत्वेन वर्णितमित्युदितशब्दं प्रयुञ्जानस्येति भावः ॥ ३८ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

सूत्रेषु च सर्वोत्तमं परब्रह्मैव प्रत्यपीपद इति विज्ञापयति– **आज्ञामिति** ॥ हे परिसरद्रश्मिकोटीर परितः सरन्त ज्ञानरश्मयो ब्रह्माद्यास्तेषां कोटिर किरीट ।

भूमन् । मणिमतो मणिवत्प्रकाशमान श्रीवेदव्यास अनन्तत्वात् अन्यैरधार्या-मवधर्तुमशक्यामाज्ञां स्वाज्ञारूपां श्रुतिम् । 'श्रुतिस्मृतीहरेराज्ञा' इति वचनात् ॥ **दधत्** ॥ हृदीति शेषः । अनन्तागमसम्पदोऽपि गतिसामान्यं जानान इति यावत् ॥ **अक्लिष्टकर्मा** ॥ **त्वम्** ॥ देवसङ्घैरनुसरणात् । अनुसरणपूर्वकमर्थितः सन् ॥ **भूमावागत्य** अवतीर्य । सूत्रं कृत्वा तस्य च सूत्रस्य विश्वतो मुखत्वादिरूपप्रकर्षात् कृष्णशब्दवाच्यस्य भाष्यं प्रतिपाद्यं ब्रह्मैवाकरोः कीदृशं ब्रह्म ॥ **कोटौ** प्रकर्षे । निमित्तसप्तमीयम् । ज्ञानानन्दादिप्रकर्षनिमित्तेन शिरसि रमाब्रह्मादिजगन्मूर्ध्नि स्थितम् । तदाधिपत्ये स्थितमिति यावत् । सर्वोत्तमत्वेन विष्णुमेव सूत्रे प्रतिपादितवानसीति फलितार्थः । पुनः कीदृशम् । असुकरम् । वायुकर्तारम् । एतदप्युक्तं सूत्रे– 'ॐ एतेन मातरिश्वा व्याख्यातः ॐ' (ब्र.सू-२.३.८) इति । यद्वा अन्यैः कर्तुमशक्यं अनन्यमिति यावत् । एतदप्युक्तम् । 'ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ' (ब्र.सू-२.३.९) इति । परपक्षप्रतिक्षेपोऽपि कृतोऽत्रेत्याह **व्यस्येति** ॥ **दस्योः** सांख्यादिदुर्वादिजातादुदितं दुर्भाष्यं प्रकृतिकर्तृत्वादिदुष्प्रतिपाद्यं **व्यस्य** निराकृत्य अकरोरिति सम्बन्धः । स्वपक्षसाधने परपक्षप्रतिक्षेपे च साधनमाह– **वेदसद्युक्तिभिः इति** ॥ वेदवचनैर्निर्दोषयुक्तिभिश्चेति ॥ ३८ ॥

## श्रीनिवासतीर्थीया

**अन्वयः– आज्ञामिति** ॥ हे भूमन् अन्यैः अधार्याम् कृष्णस्य आज्ञाम् परिसरद्रश्मिकोटीरकोटौ शिरसि दधत् अक्लिष्टकर्मा त्वम् देवसङ्घैः अनुसरणात् प्रार्थितः सन् भूमावागत्य दस्योर्मणिमतः उदितं दुर्भाष्यं वेदसद्युक्तिभिः यस्य अन्यैः असुकरं ब्रह्मसूत्रस्य भाष्यम् अकरोः ।

**विग्रहवाक्यानि– अधार्याम्** ॥ धर्तुं योग्या धार्या । न धार्या अधार्या । ताम् अधार्याम् ॥ **परिसरद्रश्मिकोटीरकोटौ** ॥ परिसरतो रश्मयो यस्य तत् परिसर-द्रश्मि । परिसरद्रश्मि च तत् कोटीरं च परिसरद्रश्मिकोटीरम् । कोटीरस्य कोटिः यस्य तत् परिसरद्रश्मिकोटीरकोटि । तस्मिन् परिसरद्रश्मिकोटीरकोटौ ॥ **अक्लिष्ट-**

**कर्मा** न क्लिष्टम् अक्लिष्टम् । अक्लिष्टं कर्म यस्य सः अक्लिष्टकर्मा ॥ **देवसङ्घैः** देवानां सङ्घाः देवसङ्घाः । तैः देवसङ्घैः ॥ **असुकरम्** सुष्ठु कर्तुं शक्यं सुकरम् । न सुकरम् असुकरम् । तत् असुकरम् ॥ **अकरोः** 'डु कृञ् करणे' लङ् परस्मैपदं मध्यम-पुरुषैकवचनम् ॥ **दुर्भाष्यम्** दुष्टं च तत् भाष्यं च दुर्भाष्यम् । तत् ॥ **व्यस्य** ल्यप् प्रत्ययान्ताव्ययम् ॥ **वेदसद्युक्तिभिः** सत्यश्च ता युक्तयश्च सद्युक्तयः । वेदाश्च सद्युक्तयश्च वेदसद्युक्तयः । ताभिः वेदसद्युक्तिभिः ॥ ३८ ॥

**भूत्वा क्षेत्रे विशुद्धे द्विजगणनिलये रूप्यपीठाभिधाने**
**तत्रापि ब्रह्मजातिस्त्रिभुवनविशदे मध्यगेहाख्यगेहे ।**
**पारिव्राज्याधिराजः पुनरपि बदरीं प्राप्य कृष्णं च नत्वा**
**कृत्वा भाष्याणि सम्यग्व्यतनुत च भवान् भारतार्थप्रकाशम् ॥ ३९ ॥**

## कविकर्णामृतम्

स्तोत्रकर्तेदानीं तज्जन्मभूमिनिजगृहवर्णाश्रमान् विवृण्वन् न केवलं तत्र भवद्भि-र्ब्रह्मसूत्रभाष्यमेव कृतम् । किन्तु पुनः बदरिकाश्रमं च गत्वा भगवद्बादरायण-नमस्कारपूर्वकं श्रीगीताभाष्यादिकं च कृतमिति विज्ञापयति– **भूत्वेति** ॥ हे मुख्य-प्राण ॥ **भवान् विशुद्धे** पवित्रे ॥ **द्विजगणनिलये** ॥ द्विजगणस्य ब्राह्मणसमूहस्य निलये आश्रये ॥ **रूप्यपीठाभिधाने** रजतपीठनाम्नि ॥ **त्रिभुवनविशदे** लोकत्रय-प्रसिद्धे ॥ **क्षेत्रे** देशविशेषे ॥ **तत्रापि** देशविशेषेऽपि ॥ **मध्यगेहाख्यगेहे** मध्य-गृहाभिधानस्य गृहे ॥ **ब्रह्मजातिः** ब्राह्मणो भूत्वा **पारिव्राज्याधिराजः** सन्न्यास-साम्राज्यसार्वभौमः सन् **पुनरपि बदरीं** श्रीमद्बदरिकाश्रमं **प्राप्य** ॥ **कृष्णं** वेदव्यासं **च नत्वा** प्रणम्य ॥ **भाष्याणि** श्रीमद्गीताभाष्यादीनि **कृत्वा भारतार्थप्रकाशं** च **व्यतनुत** अकुरुत । श्रीमहाभारततात्पर्यनिर्णयाख्यग्रन्थविशेषेणेत्यर्थः ॥ ३९ ॥

## बालबोधिनी

स्तोत्रकर्तेदानीं तज्जन्मभूमिनिजगृहवर्णाश्रमान् विवृण्वन् न केवलं त्वया

ब्रह्मसूत्रभाष्यमेव कृतं किन्तु पुनर्बदरिकाश्रमं प्रति गत्वा बादरायणनमस्कारपूर्वकं उपनिषद्भाष्यादिकं कृतमिति विज्ञापयति– **भूत्वेति** ॥ हे मुख्यप्राण **भवान् विशुद्धे** पवित्रे । **द्विजगणनिलये** द्विजानां विप्राणां गणस्समूहस्तस्य निलय आश्रय-स्तस्मिन् । **रूप्यपीठाभिधाने** । रूप्यपीठमित्यभिधानं नाम यस्य तत्तथोक्तं तस्मिन् । **त्रिभुवनविशदे** त्रीणि च तानि भुवनानि च तेषु विशदं प्रसिद्धं तस्मिन् क्षेत्रे देशविशेषे । **तत्रापि** देशविशेषेऽपि । मध्यगेहमित्याख्या नाम यस्य तत्तथोक्तं तादृशं यद्गेहं गृहं तस्मिन् । ब्रह्मणो ब्राह्मणस्य जातिर्यस्य स तथोक्तो भूत्वा परिव्राज्यस्य सन्यासाश्रमग्रहणात्पूर्वमपि बदरिकाश्रमगमनं सूचितम् । एतच्च वेङ्कटेशमाहात्म्ये प्रसिद्धं 'सप्तसंवत्सरादूर्ध्वं गत्वा बदरिकाश्रमम् । प्रपेदे सर्वशास्त्राणि । इत्थं हि सर्वविद्याश्च व्यासदेवान्महात्मनः । अवाप्तसर्वशास्त्रोऽसौ वटुस्तदिदमब्रवीत्' इति । **कृष्णं** वेदव्यासं च **नत्वा भाष्याणि** उपनिषद्भाष्यादीनि कृत्वा । **भारतार्थप्रकाशं** भारतस्य योऽर्थास्तेषां प्रकाशो यस्मिन् ग्रन्थे स भारतार्थप्रकाशस्तं श्रीमद्भारततात्पर्यनिर्णयाख्यग्रन्थमित्यर्थः । सम्यग् **व्यतनुत** अकुरुत 'तनु विस्तारे करणे च' लङ् ॥ ३९ ॥

## मन्दबोधिनी

स्तोत्रकर्ता इदानीं तज्जन्मभूमिं निजगृहवर्णाश्रमविवरणपूर्वकं तत्कृतग्रन्थसन्दर्भं विज्ञापयति– **भूत्वेति** ॥ हे मुख्यप्राण **भवान्** ॥ **रौप्यपीठाभिधाने** ॥ रौप्यपीठ इति अभिधानं नाम यस्य तत्तथोक्तं तस्मिन् ॥ **क्षेत्रे** ॥ पुण्यस्थाने ॥ **तत्रापि** ॥ तत्क्षेत्रप्रदेशेऽपि । पाजकपदाख्यक्षेत्रविशेषे **मध्यगेहाख्यगेहे** ॥ मध्यगेह इति आख्या यस्य स मध्यगेहाख्यः तस्य गेहे गृहे ॥ **भूत्वा** ॥ अवतीर्य । **ब्रह्मजातिः** । भावप्रधानो निर्देशः । ब्रह्मत्वजातिर्यस्य स तथोक्तः । ब्रह्मणो भूत्वा ॥ **पारि-व्राज्याधिराजः** ॥ पारिव्राज्यमित्ययं निर्देशः भवितृप्रधानः । अधिकश्चासौ राजा च अधिराजः । ततश्च पारिव्राज्यानां सन्यासिनां अधिराजः सार्वभौमः सन्नित्यर्थः । यद्वा परिव्राजः सन्यासिनः भावः पारिव्राज्यम् । तस्मिन्नधिराजः । श्रेष्ठः

यत्याश्रमोचितकर्मकरणे दक्ष इत्यर्थः । पुनः बदरिकाश्रमं प्राप्य **कृष्णं** वेदव्यासं **नत्वा** ॥ **भाष्याणि** ॥ ऋगादिभाष्याणि ॥ **कृत्वा** ॥ **भारतार्थप्रकाशम्** । श्रीमन्महाभारततात्पर्यनिर्णयाख्यग्रन्थम् ॥ **सम्यग्व्यतनुत** ॥ चकार । 'तनु विस्तारे' इत्यतो लङात्मनेपदम् । अतनुत अतन्वातां अतन्वत इति रूपाणि । कथम्भूते क्षेत्रे ॥ **विशुद्धे** ॥ पवित्रे ॥ **द्विजगणनिलये** द्विजगणानां ब्राह्मणसमूहानां निलये आवासभूते ॥ **त्रिभुवनविशदे** ॥ त्रीणि च तानि भुवनानि च तेषु प्रसिद्धे । रजतपीठपुरात् सूत्रभाष्यनिर्माणात्पूर्वमप्येवं प्रकारं बदरीं प्राप्य । तदपेक्षया पुनरपि बदरीं प्राप्येत्युक्तम् ॥ ३९ ॥

## भावप्रदीपिका

कुत्र कथं वावतीर्णः किं वान्यच्च कृतवानित्याशङ्कायां तत्सर्वं विशदयन् विज्ञापयति– **भूत्वेति** ॥ हे मुख्यप्राण **भवान्** (सर्वादित्वेन) अत्त्वन्तत्वाद्दीर्घः ॥ **तत्रापि** भूमावपि ॥ **विशुद्धे** ॥ पवित्रे । वि विना परमात्मना श्रीमदनन्तशयनेन शुद्धे पवित्रे इति वा ॥ **द्विजगणनिलये** ब्राह्मणसमूहाश्रये ॥ **त्रिभुवनविशदे** लोकत्रयप्रसिद्धे ॥ **रौप्यपीठाभिधाने** रूप्यपीठं इति अभिधानं नाम यस्य तत् तथोक्तं तस्मिन् ॥ **क्षेत्रे** पुण्यस्थाने । 'क्षेत्रं पुरे गृहे देहे केदारे योनिभार्ययोः । पुण्यस्थाने समूहे च घृतमाज्याम्बुसर्पिषु' इति यादवः ॥ **तत्रापि** पुण्यस्थानेऽपि ॥ **मध्यगेहाख्यगेहे** मध्यगेह इति आख्या नाम यस्य स मध्यगेहाख्यः ब्राह्मणविशेषः तस्य गेहे । 'गृहं गेहोदवसिते वेश्म सद्म निकेतनम्' इत्यमरः । 'गृहिणी गृहमुच्यते' इति वचनात् । तत्पत्न्यामिति वा । ब्रह्मजातिः ब्राह्मणत्वं जातिर्यस्य स तथोक्तः । 'बृहजातिजीवकमलासनशब्दराशिषु' इत्यस्मादौणादिको मनिन् प्रत्ययः । यद्वा भावप्रधानो निर्देशः । ब्रह्मत्वं चतुर्मुखत्वं जातिरसाधारणधर्मो यस्य स ब्रह्मजातिः । ब्रह्मणा विष्णुना श्रिया जातिर्जनिर्यस्येति वा । 'उभा यदस्य जनुषं यदिन्वत'(बळित्थासूक्तम्-४) इत्यादिमन्त्रात् ॥ **भूत्वा** ब्राह्मणः सन्

अवतीर्येत्यर्थः । मध्यगेहभट्टपत्नीजठरोत्पन्नसुलक्षणशरीरात् गर्भवासाद्यनुभवार्थ-मन्तःप्रवेशितं शेषजीवं निष्कासयन् स्वयं प्रविश्यावतीर्ण इति भावः । अथोपनयनेन **ब्रह्मजातिः** ब्राह्मणो भूत्वेति वाऽऽवृत्या योज्यम् । परिव्राजः सन्यासिनः । कर्मभावो वा पारिव्राज्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू-५.१.१२४) इति ष्यञ् प्रत्ययः । अधिको राजा अधिराजः । 'कुगतिःप्रादयः' (पा.सू-२.२.१८) इति समासः । 'राजाहः सखिभ्यष्टच्' (पा.सू-५.४.९१) इति टच् प्रत्ययः ॥ **पारिव्राज्याधिराजः** पारिव्राज्यस्याधिराजः पारिव्राज्याधि-राजः । सन्यासाश्रमसार्वभौम इत्यर्थः । एवंविधः सन् **पुनरपि बदरीं** बदरिकाश्रमं **प्राप्य ॥ कृष्णं** श्रीवेदव्यासं च शब्दादाश्रमान्तरे स्थितं श्रीनारायणं च । सम्यक् भक्तिश्रद्धातिशयपूर्वकं **नत्वा ॥ भाष्याणि** 'निजां त्रयाणां गुणः श्लौ' (पा.सू-७.४.७५) श्रीमद्भगवद्गीतादिभाष्याणि **कृत्वा भारतार्थप्रकाशं** बह्वर्थप्रतिपाद-कत्वादिरूपेण भारेण गुरुत्वेनातिशयेन ततत्वाद्भारतम् 'तनोतेर्डः' । महत्वाद्भार-वत्वाच्च महाभारतमुच्यते इति निर्वचनात् । यद्वा 'प्राणो हि भारतो नाम सर्वस्य भरणाच्छ्रुतः' इति वचनात् । भरतं श्रीभीमसेनमधिकृत्य भारतं प्रवृत्तम् । तस्यार्थोऽभिधेयं प्रयोजनं च । 'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यमरः । तस्य प्रकाशः प्रकाशयतीति प्रकाशो ग्रन्थः तम् । श्रीमहाभारततात्पर्य-निर्णयादिकमपि सम्यक्कृतवानित्यपि द्रष्टव्यम् । अत्र भगवन्नमनस्य पूर्वकालत्व-कथनेन ग्रन्थकारस्य तदाज्ञापूर्वकत्वमभिप्रैति । ननु भारतादेरतिदुर्ज्ञेयार्थत्वात् कथमेतस्य तदर्थनिर्णायकत्वमित्यतो नैतज्जगज्जीवनस्याशक्यम् । 'कश्छन्दसां योगमावेद धीरः कोधिष्ण्यां प्रतिवाचं पपाद' (घर्मसूक्तम्-९) । 'स्वयं व्यासो हि तद्वेद ब्रह्मा वा तत्प्रसादतः' (म.भा.ता.नि.अ-२,श्लो-१४७) । इत्यादि-प्रमाणेनास्य तन्निर्णयकर्तृत्वस्य प्रमितत्वादिति भवानिति प्रसिद्धार्थवाचकपदं प्रयुञ्जानस्य भावः ॥ ३९ ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

उक्तानुवादपूर्वकमवतारचरितान्तरमपि निरूपयति– **भूत्वेति** ।। हे **रौप्यपीठ** ।। रूपं सौन्दर्यं तदेव रौप्यं तस्याश्रय । 'रूपं शब्दे पशौ ग्रन्थे शोकावर्तहितादिषु । लावण्ये च' इत्यभिधानात् । अभिधाः सर्वनामानि स्ववाचकत्वेन नयतीत्यभिधानिः सर्वशब्दवाच्यस्तस्य सम्बुद्धिर्हे **अभिधाने** वेदव्यास **द्विजगणनिलये** शुकपिकादिविहगसमूहाश्रये ।। **विशुद्धे क्षेत्रे** यमुनाद्वीपे । तत्रापि **त्रिभुवनविशदे मध्यगेहाख्यगेहे** ।। हृत्कमलमध्यगतत्वान्मध्यगः श्रीहरिः स मम मध्यग उदरमध्यगः पुत्रो भवत्वितीहया इच्छया ईहा तपो लक्षणा प्रवृत्तिर्यस्यासौ मध्यगेहः । स इत्याख्या ख्यातिर्यस्यासौ मध्यगेहाख्यः । पराशरस्तस्य मध्यगेहाख्ये उक्तरीत्या मध्यगेह इति प्रसिद्धमति गेहे भार्यायां सत्यवत्यां ब्रह्मजातिः भूत्वा प्रादुर्भावं प्राप्य । तदुक्तं निर्णये । 'वसिष्ठनामा कमलोद्भवात्मजः सुतोऽस्य शक्तिस्तनयः पराशरः । तस्योत्तमं सोऽपि तपोऽचरद्धरिः सुतो मम स्यादिति तद्धरिर्ददौ' (म.भा.ता.नि-अ-१०.श्लो-४२) इति । 'या पूर्वसर्गे पितृपुत्रिका सती चचार विष्णोस्तप उत्तमं चिरम् । यस्यै वरं विष्णुरदात्पुराहं सुतस्तव स्यामिति या वसोः सुता' (म.भा.ता.नि.अ-११.श्लो-७०-७१) इति च ।। **पारिव्राज्याधिराजः** ।। परिव्राजां शुकादिसंन्यासिनां समूहस्यायमधिराजो गुरुर्भवान् पुनरनन्तरं बदरीम्, अपिशब्देन मेरुं च प्राप्य । तत्र कृताश्रम इति यावत् । कृष्ण श्रीहरिमात्मानमेव ग्रन्थादौ लोकशिक्षणाय कचिन्नारायणं सुरगुरुमित्यादौ वन्दे भवघ्नमित्यादिना नत्वा चशब्देन कचिजन्माद्यस्य यत इत्यादौ धीमहीत्यादिना ध्यात्वा भाष्याणि वेदव्याख्यानरूपाणि पुराणादीनि कृत्वा ।। **भारतार्थप्रकाशम्** ।। भगवत्तत्वप्रकाशकं भारतं च भवान् **व्यतनुत** निर्ममे इत्यन्वयः ।। ३९ ।।

## श्रीनिवासतीर्थीया

**अन्वयः– भूत्वेति** ।। हे मुख्यप्राण भवान् विशुद्धे द्विजगणनिलये त्रिभुवनविशदे रौप्यपीठाभिधाने क्षेत्रे तत्रापि मध्यगेहाख्यगेहे ब्रह्मजातिर्भूत्वा

पश्चात् पारिव्राज्याधिराजो भूत्वा गीताभाष्यं कृत्वा बदरीं पुनः प्राप्य तत्र कृष्णं नत्वा तदाज्ञया पुनरपि रौप्यपीठं प्राप्य भारतार्थप्रकाशं सम्यक् व्यतनुत ।

**विग्रहवाक्यानि– द्विजगणनिलये** ।। द्विजानां गणः द्विजगणः द्विजगणस्य निलयः तस्मिन् द्विजगणनिलये ।। **रौप्यपीठाभिधाने** रौप्यपीठमिति अभिधानं यस्य तत् रौप्यपीठाभिधानं तस्मिन् रौप्यपीठाभिधाने ।। **त्रिभुवनविशदे** त्रीणि च तानि भुवनानि च त्रिभुवनानि । त्रिभुवनेषु विशदम् । तस्मिन् त्रिभुवनविशदे ।। **मध्यगेहाख्यगेहे** मध्यगेह इति आख्या यस्य सः मध्यगेहाख्यः । मध्यगेहाख्यस्य गेहः मध्यगेहाख्यगेहः । तस्मिन् मध्यगेहाख्यगेहे ।। **पारिव्राज्याधिराजः** पारिव्राज्यं येषामस्तीति पारिव्राज्याः । पारिव्राज्यानां अधिराजः पारिव्राज्याधिराजः । **व्यतनुत** वीत्युपसर्गः अतनुत । 'तनु विस्तारे' लुङ् आत्मनेपदं प्रथमपुरुषैकवचनम् ।। **भारतार्थप्रकाशम्** भारतस्य अर्थः भारतार्थः । भारतार्थस्य प्रकाशः भारतार्थप्रकाशः । तं भारतार्थप्रकाशम् ।। ३९ ।।

**वन्दे तं त्वा सुपूर्णप्रमतिमनुदिनासेवितं देववृन्दैर्वन्दे**
**वन्दारुमीशे श्रिय उत नियतं श्रीमदानन्दतीर्थम् ।**
**वन्दे मन्दाकिनीसत्सरिदमलजलासेकसाधिक्यसङ्गं**
**वन्देऽहं देव भक्त्या भवभयदहनं सज्जनान्मोदयन्तम् ।। ४० ।।**

## कविकर्णामृतम्

स्तोत्रावसाने स्तोता भक्त्युद्रेकाद्भगवन्तं भूयोभूयः प्रणमति– **वन्दे इति** ।। **हे देव** श्रीमुख्यप्राण । **तं** तथा लोकवेदप्रसिद्धम् ।। **त्वा** त्वाम् । 'त्वामौ द्वितीयायाः' (पा.सू-८.२.२३) इति त्वादेशः ।। **अहं भक्त्या वन्दे** नमामि स्तौमि च । 'वदि अभिवादनस्तुत्योः' इत्यस्माल्लडुत्तमपुरुषैकवचनम् ।। **देववृन्दैः** सुरनिकरैः । दिनेदिने **अनुदिनम्** ।। वीप्सायामव्ययीभावः ।। **आसेवितम्** ।। आसमन्तात्सेवया पूजितमित्यर्थः ।। **सुपूर्णप्रमतिम्** । सुपूर्णा अन्यूना प्रमतिः प्रज्ञा यस्य तम् । पूर्णप्रज्ञनामानमित्यर्थः ।। **वन्दे** ।। **ईशे** श्रीविष्णौ । कर्मणोऽधिकरणविवक्षायां

सप्तमी ॥ **नियतं** अवश्यम् ॥ **वन्दारुं** अभिवादकम् । 'वन्दारुरभिवादकः' इत्यमरः । श्रियः उत श्रीदेव्याश्च वन्दारुं वन्दनशीलम् । 'शृवन्द्योरारुः' (पा.सू-३.२.१७३) इत्यारु प्रत्ययः । श्रिय इति कर्मणः शेषत्वविवक्षायां षष्ठी । न तु कृद्योगलक्षणा । तस्याः 'न लोका.....' (पा.सू-२.३.६९) इत्यादिना प्रतिषेधात् ॥ **श्रीमदानन्दतीर्थं वन्दे** ॥ **मन्दाकिनीसत्सरित्** पुण्यनदी । तस्याः अमलजलं निर्मलोदकम् । तस्य सह वर्तत इति साधिक्यः सङ्ग यस्य तम् ॥ **भवभयदहनम्** ॥ भवः संसारः । तस्माद्भयं साध्वसम् । तस्य दहनं अग्निम् । दाहकमित्यर्थः ॥ **सज्जनान्** साधुजनान् **मोदयन्तं** हर्षयन्तं भवन्तं **वन्दे** नमामि ॥ ४० ॥

## बालबोधिनी

स्तोत्रावसाने स्तोता भक्त्युद्रेकाद्भगवन्तं भूयोभूयः प्रणमति– **वन्दे इति** ॥ हे मुख्यप्राण **तं** तथा लोकवेदप्रसिद्धं **त्वा** त्वाम् **अहं वन्दे** नमामि, स्तौमि । देवानां वृन्दानि समूहास्तैर्दिनेऽनुदिनं वीप्सायामव्ययीभावः । आ समन्तात् सेवितं पूजितं सुपूर्णा प्रमतिः प्रज्ञा यस्य स तं पूर्णप्रज्ञनामानमित्यर्थः ॥ **वन्दे** ॥ **ईशे** स्वामिनि विष्णौ । कर्मणोऽधिकरणविवक्षायां सप्तमी ॥ **नियतम्** अवश्यं **वन्दारुं** वन्दनशीलं श्रियं उत श्रीदेव्याश्च वन्दारुमभिवादनशीलं 'शृवन्द्योरारुः' इत्यारु-प्रत्ययः । श्रिय इति शेषत्वविवक्षायां षष्ठी । न तु कृद्योगलक्षणा । तस्या 'न लोक....' (पा.सू-२.३.६९) इत्यादिना प्रतिषेधात् ॥ **श्रीमदानन्दतीर्थं वन्दे** ॥ **मन्दाकिनीसत्सरिदमलजलासेकसाधिक्यसङ्गम्** ॥ मन्दाकिनी गङ्गा सा च सा सती पुण्या या सरित् नदी तस्या अमलं यज्जलं तस्य आसेकोऽभिषेकः । अधिकस्य भाव आधिक्यं तेन सह वर्तते इति साधिक्यं मन्दाकिनीसत्सरिदम-लजलासेकात् साधिक्यं सङ्गो यस्य स तथा तम् । भवः संसारस्तस्माद्भयं साध्वसं तस्य दहनो दाहकस्तं **सज्जनान् मोदयन्तं** हर्षयन्तं भवन्तं **वन्दे** ॥ ४० ॥

## मन्दबोधिनी

स्तोत्रावसानसमये स्तोता भक्त्युद्रेकात् भगवन्तं भूयो भूयः प्रणमति– **वन्द इति** ॥ हे मुख्यप्राण **अहं तं** लोकवेदप्रसिद्धम् । **त्वा** त्वाम् **भक्त्या वन्दे** नमामि स्तौमि च । धात्वादिकं तूक्तमिव । कथम्भूतं त्वाम् ॥ **पूर्णप्रमतिम्** ॥ पूर्णा प्रमितिर्यस्य स पूर्णप्रमितिः तम् । पूर्णप्रज्ञनामानमित्यर्थः । पुनः कीदृशम् ॥ **देववृन्दैः** ॥ देवसमूहैः ॥ **अनुदिनासेवितम्** ॥ अनुदिनं प्रतिदिनम् । आसेवितम् । हे **देव** श्रीमदानन्दतीर्थ । त्वां पुनः वन्दे । कथम्भूतं श्रीमदानन्दतीर्थम् ॥ **ईशे** ॥ भगवति ॥ **नियतं** नियमेन ॥ **वन्दारुम्** वन्दनशीलम् । **श्रिय उत** ॥ श्रीदेव्या अपि वन्दारुम् । हे भगवन् । अहं त्वां भूयो वन्दे । कथम्भूतम् **मन्दाकिनी-सत्सरिदमलजलासेकसाधिक्यसङ्गम्** ॥ मन्दाकिनी गङ्गा । सैव सत्सरित् । निर्दोषा नदी । तस्या अमलजलं निर्मलोदकम् । तेन आसेकः अभिषेचनम् । स्नानमिति यावत् । तस्मादपि आधिक्यसङ्गः । अधिकस्य भावः आधिक्यं तेन सहितः साधिक्यः । गङ्गास्नानादपि अधिक इत्यर्थः । आधिक्यः सङ्गो यस्य स तथोक्तः । तद्दर्शनस्पर्शनालापादिभगवत्सङ्गः सतां गङ्गास्नानादपि अधिक इति भावः । हे देव अहं त्वां **भवभयदहनम्** ॥ भवभयं संसारभयं दहति भस्मीकरोतीति स तथोक्तः तम् । पुनः कीदृशम् ॥ **सज्जनान्मोदयन्तम्** ॥ आनन्दयन्तम् ॥४०॥

## भावप्रदीपिका

एवं भक्त्यौपयिकं जगज्जीवनमहत्त्वमवतारकथानिरूपणमुखेन सम्यङ्निरूप्य ग्रन्थं समापयितुकामः तदुपवर्णनसमुत्थानन्दसन्दोहसमुद्रनिमज्जनादुद्रिक्त-भक्तिस्त्रिविक्रमाचार्यः श्रीमद्भक्तेरादरनैरन्तर्याभ्यां कर्तव्यतां सूचयन्नन्तेऽपि मङ्गलाचरणस्यावश्यकत्वात् नम्यस्तुत्यताप्रयोजकधर्मविशिष्टतया जगत्समीरणं वर्णयन् भूयो भूयः स्तवनप्रणामौ करोति– **वन्द इति** ॥ हे मुख्यप्राण ॥ **अहं भक्त्या** तं स्तुत्यताप्रयोजकधर्मविशिष्टतया श्रुत्यादिप्रसिद्धम् ॥ **देववृन्दैः** रुद्रादि-देवसमूहैः ॥ **अनुदिनासेवितम्**, दिने दिने अनुदिनम् । वीप्सायामव्ययीभावः ।

अनुदिनं आ सम्यक् आदरनैरन्तर्याभ्यां सेवितो अनुदिनासेवितः ॥ **तं** सुपूर्णप्रमतिम् । सुष्ठु पूर्णा प्रकृष्टा मतिः ज्ञानं यस्य सः तथोक्तः । तं पूर्णप्रज्ञनामानमित्यर्थः । प्रलयेऽप्यविलुप्तज्ञानत्वात् ॥ **त्वा** त्वाम् । 'त्वामो द्वितीयायाः' (पा.सू-८.१.२३) इति त्वादेशः ॥ **वन्दे** नमामि स्तौमि च । अनेन दशप्रमतिशब्दार्थ उक्तो भवति । 'दशेति सर्वमुद्दिष्टं पूर्णं सर्वमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञः ततः स्मृतः' (ऐ.उ.भाष्योदाहृतयजुःशाखावचनम्) इति वचनात् । नियतमिति क्रियाविशेषणस्य यथायोगं वक्ष्यमाणक्रियासम्बन्धो द्रष्टव्यः । अहम् । श्रियः रमायाः । 'ङिति ह्रस्वश्च'(पा.सू-१.४.६)इति वा नदीत्वात् 'आण् नद्याः'(पा.सू-७.३.११२) इत्याडभावः ॥ **ईशे** विष्णौ विषये । **वन्दारुम्** ॥ उतशब्दो विशेषणसमुच्चयार्थः । यद्वा 'ईकारोऽब्जदललक्ष्म्याम्' इत्यभिधानात् ईकारवाच्यायाः रमायाः ईशे लक्ष्मीशे विषये । नियतं यथा भवति तथा । वन्दारुं वन्दनशीलं अभिवादकमित्यर्थः । 'वन्दारुरभिवादके' इत्यमरः । 'शृवन्द्योरारुः'(पा.सू-३.२.१७३)इति ताच्छील्ये आरुप्रत्ययः । उतशब्दोऽप्यर्थे । श्रियोऽपि भगवद्युक्तत्वेनेति शेषः । अत एव न पौनरुक्तिः । भगवद्युक्तत्वेन लक्ष्म्याश्च नियतं निरन्तरं यथा भवति तथा वन्दारुं इत्यर्थः । कर्मणः शेषत्वविवक्षया 'षष्ठी शेषे' (पा.सू-१.३.५०) इति षष्ठी । न तु कृद्योगलक्षणा षष्ठी । 'न लोक...' (पा.सू-२.३.६९) इत्यादिना प्रतिषेधात् । एतेन केवलाव्यक्तोपासनस्यात्यन्तिकानर्थफलकत्वात् अनुपासने च निःश्रेयसावाप्तेरेवायोगात् । किञ्चित्कालं भगवन्तमुपास्य तत्प्रसादार्थं बहुकालमव्यक्तोपासने विलम्बितफलकत्वेनाधिकतरक्लेशदत्वात् । अव्यक्तावियोगित्वेन भगवदुपासनं भगवदवियोगित्वेनाव्यक्तोपासनं च कर्तव्यमिति सूचयति । उक्तं हि गीतायाम्– 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' (भ.गी-अ-१२,श्लो-५) इति । तात्पर्यं च 'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः । शपेदुपासिताप्येषा श्रीस्तां स्तद्धरितत्त्ववित् । तद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा । तेन तुष्टा तु साऽच्छिद्रं दद्याद्विष्णोरुपासनम् । ततस्तद्दर्शनान्मुक्तिं

यात्यसौ नात्र संशयः । तथापि सर्वपरमां सर्वदोषविवर्जिताम् । ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् । विज्ञायोपासते नित्यं ते हि युक्ततमा मताः । यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् । विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत् । अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् । अच्छिद्रमेव कर्तव्यम् इति मुक्तिश्चिराद्भवेत् । तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णमुपासताम्' (गी.ता-अ.१२,श्लोक-२,३) इति । अत्र श्रिया सहेति टीकाकारैः व्याख्यातम् । एवं विशिष्टं श्रीमदानन्दतीर्थं रमाविशिष्टानन्दरूपभगवदाभासभूतबुद्धिः । तं त्वां नियतं वन्दे । अनेन मन्त्रस्थमध्वशब्दार्थ उक्तो भवति । हे देव विशिष्टव्यवहारादिगुण । अहं **मन्दाकिनीसत्सरिदमलजलासेकसाधिक्यसङ्गम्** मन्दाकिनी आकाशगङ्गा । 'मन्दाकिनी वियद्गङ्गा स्वर्नदी सुरदीर्घिका' इत्यमरः । सैव निर्दुष्टभगवच्चरणोद्भूतत्वात् सती निर्दुष्टा या सरित् नदी तस्याः अमलं यज्जलम् ।

यद्वा न विद्यते मा तत्वज्ञानं येषां ते अमाः । तान् ज्ञानाधिकारिणः । अन्तःकरणशुद्धिदत्वेन ब्रह्मोपदेष्टृसङ्गसम्पादकत्वेन च लाति अनुगृह्णाति इत्यमलम् । तेन जलेनासेकं आसेचनं सम्यक्स्नानम् । तस्मादपि साधिक्यम् । अधिकस्य भाव आधिक्यं तेन सह वर्तमानः साधिक्यः सङ्गः सम्बन्धो यस्य स तथोक्तः । यद्वा सङ्गशब्दो आवर्तनीयः । 'सङ्गस्तु गुणसम्प्रीतिः' इति वचनात् गुणसम्प्रीतिपूर्वकसङ्गः सम्बन्धो यस्य स तथोक्तः । सम्बन्धमात्रस्य दैत्यादीनामपि सत्त्वात् । तथा च यत्संयोगो गङ्गास्नानादप्यधिकतमश्रेयःसाधनमिति भावः । एवं विधं **तं त्वा** त्वां **वन्दे** ॥ अनेन 'तदस्य प्रियमभि पाथो अश्याम्' (विष्णुसूक्तम्-५) इत्येतदुक्तार्थकं भवति । अस्यार्थः । अहं अस्य श्रुत्यादिप्रसिद्धस्य विष्णोः । तत्प्रसिद्धं प्रियम् । पाथः तीर्थम् । अभि अश्यां उपजीव्यत्वेन समाश्रयेयम् । 'व्यवहिताश्च' (पा.सू-१.४.८२) इति अभेः व्यवहितः प्रयोगः । तत्किं यत्र यस्मिन् पाथसि तीर्थे । संसेविते सति । देवयवो देवं क्रीडादिगुणवन्तं भगवन्तम् । आत्मनः इच्छन् तत्प्रसादकामाः नराः नेतारो रुद्राद्याः । 'नृ नये' इत्यस्मात्क्विप् । मदन्ति हृष्यन्ति । कुत इत्यपेक्षायां उक्तं हि यस्मात् । स पाथःशब्दोक्तो मध्व

आनन्दतीर्थः । विष्णोः परमे । परा परिपूर्णा उत्कृष्टा वा । मा ज्ञानं अस्य । परमा श्रीरस्येति वा । परैः ब्रह्मादिभिः मीयत ज्ञायते इति वा । परोऽरि-परमात्मनोः' इत्यभिधानात् । परं शत्रुं संसारं मिनोति हिनस्ति इति वा । 'पॄ पालनपूरणयोः' इत्यस्मात्पचाद्यच् । मायाः रमाया परं उत्कृष्टं इति वा परमं तस्मिन् पद्यते इति पदम् । प्राप्योत्तमं ज्ञेयोत्तमं वा । स्वरूपं तस्मिन् विषये इच्छा । अनेन श्रुत्याद्युक्तप्रकारेण उत्सः उत्सरति उत्कृष्टतया जानाति इति उत्सः । उत्पूर्वात् सृजतौ इत्यस्मात् डः । तस्मात् उत्क्रमस्य उरुः उत्कृष्टः क्रमः पादविक्षेपः पराक्रमो वा सृष्ट्यादिक्रमो वा यस्य, तारणक्रमो येनेति वा । उरुक्रमस्य बन्धुः । सुहृदतो युक्तमिति भावः । 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः' (भ.गी-७.१७) । 'ज्ञानी प्रियतमोऽतो मे विद्वानेव चामृतः' (अनु.व्या-१.१.११) इति वचनात् इति । हे देव । अहं **भवभयदहनम्** ॥ भवः संसारो रुद्रो वा । 'भवो भद्रे हरे प्राप्तौ सत्ता संसारजन्मसु' इति यादवः । तत्सम्बन्धि भयं दहति भस्मीकरोति इति भवभयदहनः तम् । भवभये दहनोऽग्निरिव इति वा तम् । तद्वद्दाहकमित्यर्थः । यथा अग्निस्तृणादिकं दहति तथायं भवभयदहन इति भावः । 'तवयोभरतो मे जयन्त' इत्यादिश्रुतेः ॥ **सज्जनान्** साधुजनान् **मोदयन्तम्** ॥ तत्वोपदेशादिना आनन्दयन्तं त्वामाचार्यं वन्दे । तथा च संस्तवो बळित्थेत्यादि-मन्त्रार्थ इति भावः ॥ ४० ॥

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

स्तोत्रमुपसंहरन् भक्तिभरेण भगवन्तं पुनः पुनः प्रणमति– **वन्दे इति** ॥ ईशे त्वयि वन्दारुं तथा श्रियो लक्ष्म्याश्च वन्दारुं श्रीवन्दनशीलं श्रीमदानन्दतीर्थं श्रीमध्वाचार्यनियतं नितरां प्रवर्तकम् । तन्नियामकमिति यावत् । यद्वा ईशे त्वयि वन्दारुं जनं प्रतिनियतं नियमेन श्रियःप्रापकमिति शेषः ॥ **श्रीमदानन्दतीर्थम्** ॥ श्रीमन्तमानन्दनिधिम् । मन्दाकिनीसत्सरिदमलजलाभिषेकापेक्षया साधिक्योधिकः सङ्गो भक्तिर्यस्यासौ तम् । भागीरथीजलस्नानापेक्षया स्वस्मिन् भक्तिमतां विशिष्टफलदातारमिति यावत् ॥ ४० ॥

## श्रीनिवासतीर्थीया

**अन्वयः– वन्दे तं त्वेति ।।** हे देव वायो । अहं देववृन्दैः अनुदिनासेवितम् तं त्वा त्वां वन्दे । हे वायो । अहं श्रियः ईशो नियतं यथा भवति तथा वन्दारुं श्रीमदानन्दतीर्थं त्वां वन्दे । हेश्रीमदानन्दतीर्थ अहं मन्दाकिनीसत्सरिदमल-जलासेकसाधिक्यसङ्गं त्वां वन्दे । हे देव अहं भवभयदहनं सज्जनान्मोदयन्तं त्वां भक्त्या वन्दे ।

**विग्रहवाक्यानि– वन्दे** 'वदि अभिवादनस्तुत्योः' लडात्मनेपदि उत्तमपुरुषैक-वनचम् ।। **सुपूर्णप्रमतिम्** सुष्ठु पूर्णामतिर्यस्य सः सुपूर्णप्रमतिः तं सुपूर्णप्रमतिम् ।। **अनुदिनासेवितम्** आ सम्यक् सेवितः आसेवितः तम् । अनुदिनं आसेवितः अनुदिनासेवितः । तम् अनुदिनासेवितम् ।। **देववृन्दैः** देवानां वृन्दाः देववृन्दाः तैः । वन्दनशीलो वन्दारुः तं वन्दारुम् ।। **श्रीमदानन्दतीर्थम्** श्रीमांश्चासौ आनन्दतीर्थश्च श्रीमदानन्दतीर्थः । तं श्रीमदानन्दतीर्थम् ।। **मन्दाकिनीसत्सरि-दमलजलासेकसाधिक्यसङ्गम्** सती च सा सरिच्च सत्सरित् । मन्दाकिन्येव सत्सरित् मन्दाकिनी सत्सरित् । न विद्यते मलं यस्य तत् अमलम् । अमलं च तत् जलं च अमलजलम् । सत्सरितः अमलजलम् सत्सरिदमलजलम् । जलस्य आसेकः जलासेकः । अधिकस्य भावः आधिक्यम् । आधिक्येन सहितः साधिक्यः । अमलजलासेकस्य साधिक्यः सङ्गः यस्य सः अमलजलासेकसाधिक्य-सङ्गः । तम् । मन्दाकिनीसत्सरिदमलजलासेकासाधिक्यसङ्गम् ।। **भवभयदहनम्** भवात् प्राप्तं भयं भवभयम् । भवभयं दहतीति भवभयदहनः । तं भवभयदहनम् । सन्तश्च ते जनाश्च सज्जनास्तान् सज्जनान् ।। **मोदयन्तम्** मोदयतीति मोदयन् । तं मोदयन्तम् ।। ४० ।।

**सुब्रह्मण्याख्यसूरेः सुत इति सुभृशं केशवानन्दतीर्थ-**
**श्रीमत्पादाब्जभक्तः स्तुतिमकृत हरेर्वायुदेवस्य चास्य ।**

**तत्पादार्चादरेण ग्रथितपदलसन्मालया त्वेतया ये**
**संराध्यामू नमन्ति प्रततमतिगुणा मुक्तिमेते व्रजन्ति ॥ ४१ ॥**

**॥ इति श्रीमत्कविकुलतिलकत्रिविक्रमपण्डिताचार्यविरचिता वायुस्तुतिः ॥**

## कविकर्णामृतम्

सम्प्रति भगवांस्तोत्रकर्ता त्रिविक्रमाचार्यः स्तोत्रमुपसंहरन् स्वाभिजात्यप्रख्यापनायाऽत्मीयप्रसिद्धकुलदेवताचार्यजनकनामाभिधानपूर्वकमेतत् स्तोत्रपाठकानां फलमभिधत्ते– **सुब्रह्मण्येति** ॥ **सुब्रह्मण्याख्यसूरेः** सुब्रह्मण्यविपश्चितः **सुतः** पुत्रः ॥ **सुभृशं** अत्यर्थम् ॥ **केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः** ॥ केशवः श्रीनारायणः, आनन्दतीर्थश्च । तयोः श्रीमत्पादाब्जभक्तः श्रीमच्चरणनलिनसेवकः त्रिविक्रमाचार्यः ॥ **हरेः** श्रीवासुदेवस्य ॥ **अस्य** स्तोत्रनायकस्य श्रीवायुदेवस्य च ॥ **इति** पूर्वोक्तप्रकारेण । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः ॥ **स्तुतिं** स्तोत्रम् । 'स्तवः स्तोत्रं नुतिः स्तुतिः' इत्यमरः ॥ **अकृत** कृतवान् ॥ **ये तु** ये केचन सज्जनाः ॥ **एतया** मया कृतया ॥ **तत्पादार्चादरेण** तयोः केशवानन्दतीर्थयोः, पादार्चादरेण श्रीमच्चरणपूजाकरणेच्छया । **ग्रथितपदलसन्मालया,** ग्रथितया रचितया, पदानां सुप्तिङन्तरूपाणां, लसन्मालया विलसत्स्रजा । मालापदसन्निधानेन सुप्तिङन्तपदानां पुष्पत्वमवसेयम् ॥ **अमू** केशवानन्दतीर्थौ **संराध्य** सम्पूज्य **नमन्ति** नमस्कारं कुर्वन्ति । त एते जनाः **प्रततमतिगुणाः** अतिविशदापरोक्षज्ञानगुणाः सन्तः ॥ **मुक्तिं** मोक्षं **व्रजन्ति** प्रयान्ति ॥ ४१ ॥

कविकर्णामृतं नाम्ना वेदात्मयतिना कृतम् ।
व्याख्यानं वेति (भातु)नामैतदासुधांशुदिवाकरम् ॥
नारायणमरुन्मार्गपत्रं सुकृतगन्धिवत् ।
तदर्थमकरन्दस्तद्व्याख्यानं कुसुमं तयोः ॥

उक्तानुक्तदुरुक्तानि विचिन्त्यात्र विपश्चितः ।
सम्प्रदायविदो यूयमनुशिष्ट यथोचितम् ॥

**॥ इति श्रीवेदात्मतीर्थश्रीचरणविरचिता वायुस्तुतिटीका समाप्ता ॥**

## बालबोधिनी

सम्प्रति स्तोत्रकर्ता भगवांस्त्रिविक्रमाचार्यः स्तोत्रमुपसंहरन् एतत्स्तोत्रपाठकानां फलमभिधत्ते– **सुब्रह्मण्येति** ॥ **सुब्रह्मण्याख्यसूरेः**, सुब्रह्मण्य इति नाम यस्य स तथोक्तः । स चासौ सूरिश्च तस्य सुब्रह्मण्यनाम्नो विदुषः ॥ **सुतः** पुत्रः ॥ **सुभृशम्** अत्यर्थं ॥ **केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः** केशवश्चानन्दतीर्थश्च तयोः । श्रीमती ये पादाब्जे तयोर्भक्तस्त्रिविक्रमाचार्यः ॥ **हरेः** श्रीविष्णोः ॥ **अस्य** स्तोत्रप्रतिपाद्यस्य **वायुदेवस्य च** वायुश्चासौ देवश्च तस्य च । **इति** पूर्वोक्तप्रकारेण **स्तुतिं अकृत** कृतवान् । कृञो लुङ् । ये तु केचन भक्तजनाः ॥ **एतया** मया कृतया ॥ **तत्पादार्चादरेण** तयोः केशवानन्दतीर्थयोः पादावङ्घ्री तयोरर्चा पूजा, तस्यामादर आसक्तिस्तेन ॥ **ग्रथितपदलसन्मालया** ग्रथिता रचिता या पदानां सुप्तिङन्त-रूपपदानां लसन्ती शोभमाना माला स्रक् तया । मालापदसन्निधानात्सुप्तिङन्त-पदानां पुष्पत्वमवभाषितम् ॥ **अमू** केशवानन्दतीर्थौ ॥ **संराध्य** सम्पूज्य ॥ **नमन्ति** नमस्कारं कुर्वन्ति । एते जनाः ॥ **प्रततमतिगुणाः** मतिः मतिरपरोक्षज्ञानं सा च गुणा भक्त्यादिगुणास्ते च मतिगुणाः प्रतता अतिविशदा मतिगुणा येषां ते तथोक्ताः । सन्तो **मुक्तिं** मोक्षं **व्रजन्ति** 'व्रज गतौ' लट् ॥ ४१ ॥

बालानां बोधनेच्छापरवशमतिना यः कृतः सङ्ग्रहोऽयं
पूर्वाचार्यैः कृतानां प्रविततप्रतिभिर्ज्ञेयपूर्णार्थभाजाम् ।
टीकानां तेन तोषं भजतु बुधजनाभीष्टदो विठ्ठलोऽलं
श्रीमुख्यप्राणभावस्तदनु सुरगणाश्चैव नित्यं महान्तः ॥

**॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीविश्वपतितीर्थकृत वायुस्तुतिटीकासङ्ग्रहः समाप्तः ॥**

## मन्दबोधिनी

सम्प्रति स्तोत्रकर्ता भगवान् त्रिविक्रमपण्डिताचार्यः स्तोत्रमुपसंहरन् सज्जनानां आदरातिशयजननाय स्वस्वरूपप्रख्यापनपूर्वकं एतत्स्तोत्रपाठकानां फलमभिधत्ते– **सुब्रह्मण्येति** ॥ **सुब्रह्मण्याख्यसुरेः** ॥ सुब्रह्मण्य इति आख्या यस्य स तथोक्तः । स चासौ सूरिः पण्डितश्च तस्य लिकुचकुलोत्पन्नसुब्रह्मण्याख्यपण्डितस्येत्यर्थः ॥ **सुतः** पुत्रः त्रिविक्रमपण्डिताख्यः ॥ **इति** पूर्वोक्तप्रकारेण ॥ **हरेः** संहरति पाप-समूहमिति हरिः । यद्वा हरति आहरति स्वीकरोति भक्तैर्दत्तं पत्रपुष्प-फलादिकमिति हरिः ॥ **तस्य** विष्णोः ॥ **अस्य** स्तुतिनायकस्य स्तुत्यत्वेन प्रकृतस्य वा वासुदेवस्य मुख्यप्राणस्य च **स्तुतिं** स्तोत्रम् ॥ **अकृत** चक्रे । 'डुकृञ् करणे' इत्यस्माल्लुङ् । अकृत अकृषातां अकृषत इति रूपाणि । कथम्भूतः सुतः ॥ **सुभृशम्** अत्यर्थम् ॥ **केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः** ॥ केशवश्च आनन्द-तीर्थश्च केशवानन्दतीर्थौ । पादौ अब्जे इव पादाब्जे । श्रीमती च ते पादाब्जे च श्रीमत्पादाब्जे । केशवानन्दतीर्थयोः श्रीमत्पादाब्जे । तयोः भक्तः । भजकः । **ये** जनाः ॥ **तत्पादार्चादरेण** ॥ तयोः केशवानन्दतीर्थयोः पादौ चरणौ तयोः अर्चा पूजा तस्या आदरेण ॥ **एतया** ॥ मया कृतया ॥ **ग्रथितपदलसन्मालया** ॥ ग्रथितानि च तानि पदानि च सुप्तिङन्तरूपाणि च तैः । लसन्ती च सा माला च तया एतद्रूपया स्तुत्येत्यर्थः । अत्र मालापदसन्निधानेन पदानां सुपुष्पत्वमव-सेयम् ॥ **अमू** ॥ केशवानन्दतीर्थौ ॥ **संराध्य** ॥ सम्पूज्येत्यर्थः ॥ **नमन्ति** ॥ नमस्कारं कुर्वन्ति ॥ **एते** जनाः । **प्रततमतिगुणाः** ॥ विस्तृतापरोक्षज्ञानगुणाः सन्तः । भक्तिं अनिष्टनिवृत्तिविशिष्टपरमानन्दावाप्तिरूपं मोक्षम् ॥ **व्रजन्ति** ॥ प्राप्नुवन्ति । 'व्रज गतौ' इत्यतो लट् परस्मैपदम् । व्रजति व्रजतः व्रजन्ति इति रूपाणि । इत्यशेषमतिमङ्गलम् ॥ ४१ ॥

मध्वाचार्यमनोधामा मध्वमानसमश्चके ।
शयानः श्रीधराश्लिष्टस्तुष्येत्मत्कृतितो हरिः ॥

छलारिनरसिंहार्यशिष्यस्य कृतिमुत्तमाम् ।
विदां कुर्वन्तु विद्वांसः किमन्यैः कितवैरिह ॥

**॥ इति छलारिनरसिंहाचार्यशिष्यशेषाचार्यविरचिता वायुस्तुतिटीका मन्दबोधिनी समाप्ता ॥**

## भावप्रदीपिका

एवं विरचितविशिष्टस्तुतिः त्रिविक्रमपण्डिताचार्यः स्तुतिं समापयन्नेतद्ग्रन्थस्य अप्रसिद्धाविशिष्टकर्तृकत्वनिरासार्थं इष्टदेवताचार्यजनकाभिधानेन स्वनाम सूचयन् अन्यपरत्वशङ्कानिवृत्त्यर्थं तत्प्रतिपाद्यदेवते च निरूपयन् तात्पर्यद्योतकं प्रेक्षावत्प्रवृत्त्यौपयिकं फलमभिधत्ते– **सुब्रह्मण्येति ॥ केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः** । कश्चेशश्च केशौ चतुर्मुखशङ्करौ वर्तयति सृष्ट्यादिना नियमयतीति केशवः । 'वृतु वर्तने' इत्यस्मादौणादिको डप्रत्ययः । 'को ब्रह्मेति समाख्यातः ईशोऽहं सर्वदेहिषु । आवां तवाङ्गसम्भूतौ ततः केशवनामवान्' इति हरिवंशे । रुद्रेण निर्वचनात् । 'हिरण्यगर्भः कः प्रोक्तः ईशः शङ्कर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' (गीताभाष्योदाहृत हरिवंशवचनम्) इति निर्वचनान्तरात् । यद्वा 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायात् प्रशस्ताः परिपूर्णाः केशाः अस्य सन्तीति केशवः । 'केशाद्वोऽन्यतरस्यां' (पा.सू-५.२.१०९) इति मत्वर्थीयो वप्रत्ययः । द्यावा पृथिव्योरिदमन्तरं हि' (भ.गी.अ-११,श्लो-२०) इत्यादिना कृष्णकेशस्यापि कृष्णस्य सर्वदेशकालगुणव्याप्त्युक्तेः । केशवश्चानन्दतीर्थश्च केशवानन्दतीर्थौ । तयोः श्रीमत्पादाब्जयोः शश्वल्लसच्चरणाम्भोजयोः भक्तो भक्तिमान् ॥ **सुब्रह्मण्याख्यसूरेः** सुब्रह्मण्येति आख्या नाम यस्य । तस्य सूरेः पण्डितस्य ॥ **सुतः** पुत्रः । हरेः हरति संहरति पापसमूहमिति । हरति आहरति पुरुषार्थान् भक्तेभ्यः इति वा हरिः । तस्य विष्णोः ॥ **अस्य** तन्मुख्यप्रतिमात्वेन प्रसिद्धस्य । स्तुत्यत्वेन प्रकृतस्य वा । वायुदेवस्य मुख्यप्राणस्य च । इत्युक्तप्रकारेण

'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः ॥ **सुभृशं** आदरनैरन्तर्यादिपूर्वकम् यथा ॥ **अकृत** कृतवान् । कर्तरि लुङ् । क्रियाफलस्य कर्तृगामित्वादात्मनेपदम् । तुशब्दो विशेषणार्थो भिन्नक्रमः । पाठक्रमादर्थक्रमस्य बलीयस्त्वात् । ये तु केचन जना जनविशेषाः विष्णुभक्त्यादिगुणवन्त सज्जना इत्यर्थः । 'विष्णुभक्ति र्हि सर्वेषां सद्गुणानां स्वलक्षणम्' (कथा.ल-७) इति वचनात् ॥ **तत्पादार्चादरेण** तयोः हरिमुख्यप्राणयोः पादौ चरणौ । तयोः अर्चा पूजा । तस्यां आदरेण ॥ **ग्रथित-पदलसन्मालया** ग्रथितानि रचितानि यानि पदानि सुप्तिङन्तानि । तैर्लसन्ती शोभायमाना या माला स्रक्लक्षणा तया ।

यद्वा ग्रथितया रचितया पदानां सुप्तिङन्तरूपाणां लसन्मालया कान्तिमत्स्रग्रूपया ॥ **एतया** मया कृतया स्तुत्या । अत्र ग्रन्थस्य मालात्ववर्णनेन पदानां पुष्परूपत्वमुपवर्षति ॥ **अमू** श्रीहरिप्राणौ **संराध्य** सम्पूज्य ॥ **नमन्ति** मत्तस्त्व-मुत्कृष्टस्त्वत्तोऽहमपकृष्ट इत्युत्कृष्टत्वज्ञानपूर्वकदासभावेन प्रवणा भवन्ति । त एते कृत श्रीहरिमुख्यप्राणाराधनप्रणामाः जनाः ॥ **सन्तः** ॥ **प्रततमतिगुणाः** मतिशब्देन ज्ञानविशेषो मननम् । यतो ज्ञानं च गृह्यते । तेन तद्बद्धेतुश्रवणादिकमुपलक्ष्यते । हेतुहेतुमद्भावादिसूचनं लाक्षणिकपदप्रयोगप्रयोजनम् ।

यद्वा प्रकृष्टे ब्रह्मणि तताः विस्तृताः बहु तन्निष्ठगुणविषयकश्रवणमननपूर्वकगुणाः निदिध्यासनादयो येषां ते तथोक्ताः सन्तः । अतिविशदापरोक्षज्ञानलक्षणा इति वा । 'श्रवणं शब्दजं ज्ञानं उपपत्यनुचिन्तनम् । मतिर्निरन्तरा चिन्ता निदि-ध्यासनमुच्यते' इति तल्लक्षणम् ॥ **मुक्तिं** अविद्यानिवृत्तिः विशिष्टस्वस्वरूप-परमानन्दावाप्तिलक्षणाम् । 'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' (भाग.स्कं-२, अ-१०, श्लो-६) इति भागवतवचनात् ॥ **व्रजन्ति** आप्नुवन्ति । श्रीहरिमुख्यप्राणाराधनमननादिजन्यप्रसादसञ्जात वैराग्यभक्त्यतिशयश्रवणमनन-निदिध्यासनापरोक्षज्ञानोत्तमभगवत्प्रसादरूपमुक्तिसाधनसम्पत्तिमन्तः सन्तो मुक्ता भवन्तीत्यर्थः । तथा च 'ब्रह्मविदाप्नोति परम्' (तै.ब्र.वल्ली-२) । 'तमेवं

विद्वानमृत इह भवति' । 'नान्यः पन्था अयनाय विद्यते' (महा.ना.उ.हि.सू-२) । 'तरति शोकमात्मवित्' (छां.उ.अ-७,खं-१,मं-३) इत्यादिश्रुत्यादिनाऽपरोक्षज्ञानस्य मुक्तिसाधनत्वावगमात् । तस्य च 'आचार्यवान् पुरुषो वेद' इत्याचार्यप्रसादं विनाऽनुपपत्तेः । 'स एनान् ब्रह्म गमयति' (छां.उ.अ-४,खं-१५,मं-५) इत्यादिना वायोर्मुख्यगुरुत्वात् मुमुक्षुणा मुक्तिसाधनोभयप्रसादः सम्पाद्यः । स चैतत्संस्तवेनापि जायत इति इदमवश्यमादरनैरन्तर्याभ्यां अभ्यसनीयमिति भावः ॥ ४१ ॥

**कूर्मपूर्वपदाख्येन विदुषा मारुतस्तुतेः ।**
**नृसिंहेन कृता व्याख्या तया प्रीणातु माधवः ।**

**॥ इति श्रीमत्कविचक्रचूडामणिसर्वविद्यापारावारीणसर्वदुर्वादिमतमातङ्ग-दुःस्स्तर्कशतकुम्भविदारणपटीयः सतर्कनखनरसिंहायमानाध्यात्मविद्या-प्रवर्तक्साक्षात्श्रीमत्भगवत्पादाचार्यलब्धाचार्यपदत्रिविक्रमपण्डिताचार्य-विरचितवायुस्तुतिटीका भावप्रदीपिका कूर्मनरसिंहेन विरचिता समाप्तिमिता ॥**

## भगवन्तरायकृत लघुनिगूढार्थप्रकाशिका

एवं समापितहरिवायुस्तुतिः कविकुलतिलकः श्रीमत्त्रिविक्रमपण्डिचार्यवर्यः स्वकृतस्तुत्या हरिवायुपादाराधकानां मुक्तिरेव फलमित्याह– **सुब्रह्मण्याख्यसूरेरिति ॥ सुतः** त्रिविक्रमपण्डितनामा इति । एवंरूपेण । ग्रथितपदानां लसन्मालारूपया एतया स्तुत्या ॥ **अमू** हरिवायू ॥ **ये आराध्य नमन्ति ॥ एते मुक्तिं व्रजन्ति** इत्यशेषमतिमङ्गलम् ।

**चित्तादीन्द्रियदेवहृद्गतमहावायुप्रविष्टो हरिः**
**मां स्वाभासमजः प्रविश्य करुणापीयूषवारांनिधिः ।**
**एतत्स्तोत्रगमस्तुवत्स्वयमहो स्वात्मानमेवानया**
**वाचां मालिकया यदेष हि ततो नेयं कृतिर्मामकी ।**

यत्पादाब्जरजः कणाः सुनिपुणा बालस्य मे साहसं
योगो वायुगिरां हरौ करुणया पारं हि विन्युर्जवात् ।
अब्धेर्वाचटकस्य पारगमने तद्वैशिकार्यान्तरा
भोजांतस्मितमध्वमानसगतः कृष्णोऽनया तुष्यतु ।

हरिरत्नं मरुत्स्तोत्रभूगं दृक्स्रक्सतामियम् ।
सन्दर्शय त्वं जनवन्निगूढार्थप्रकाशिका ॥

॥ इति श्रीमद्भास्करीवेङ्कटपत्याचार्यपूज्यचरणचरणाराधकेन भगवता विरचिता लघुनिगूढार्थप्रकाशिका सम्पूर्णा ॥

## श्रीनिवासतीर्थीया

**अन्वयः–सुब्रह्मण्याख्येति** ॥ सुभृशं केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः सुब्रह्मण्याख्यसूरेः सुतः हरेः अस्य वायुदेवस्य च इति स्तुतिम् अकृत । तया तत्पादार्चादरेण ग्रथितपदलसन्मालया । अमू संराध्य नमन्ति एते प्रततमतिगुणाः सन्तः मुक्तिं व्रजन्ति ।

**विग्रहवाक्यानि–सुब्रह्मण्याख्यसूरेः** ॥ सुब्रह्मण्य इति आख्या यस्य सः सुब्रह्मण्याख्यः सुब्रह्मण्याख्यश्चासौ सूरिश्च सुब्रह्मण्याख्यसूरिः । तस्य सुब्रह्मण्याख्यसूरेः ॥ **केशवानन्दतीर्थश्रीमत्पादाब्जभक्तः** केशवश्च आनन्दतीर्थश्च केशवानन्दतीर्थौ । श्रीमन्ति च तानि पादाब्जानि च श्रीमत्पादाब्जानि । केशवान्दतीर्थयोः श्रीमत्पादाब्जानि । पादाब्जानां भक्तः श्रीमत्पादाब्जभक्तः ॥ **अकृत** 'डुकृञ् करणे' लुङात्मने पदं प्रथमपुरुषैकवचनम् ॥ **तत्पादार्चादरेण** तयोः पादाः तत्पादाः तत्पादानाम् अर्चा तत्पादार्चा । अर्चायाम् आदरः तेन तत्पादार्चादरेण ॥ **ग्रथितपदलसन्मालया** लसन्ती च सा माला च लसन्माला पदानां लसन्माला पदलसन्माला । ग्रथिता च सा पदलसन्माला च ग्रथितपदलसन्माला । तया ग्रथितपदलसन्मालया ॥ **नमन्ति** 'णमु प्रह्वत्वे शब्दे च' लट् परस्मैपदं प्रथमपुरुषबहुवचनम् ॥ **प्रततमतिगुणाः** प्रतता च सा मतिश्च

प्रततमतिः प्रततमतिरेव गुणो येषां ते प्रततमतिगुणाः ॥ **व्रजन्ति** 'व्रजगतौ' लट् परस्मैपदं प्रथमपुरुषबहुवचनम् ॥ ४१ ॥

**श्रीमदित्यादिश्लोकानामन्वयो विग्रहश्च मे ।**
**दर्शिता बालबोधाय मध्वेशः प्रीयतां ततः ॥**

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन**
**श्रीनिवासेन विरचितः वायुस्तुतिविग्रहः समाप्तः ॥**

# ನಖಸ್ತುತಿ-ವಾಯುಸ್ತುತಿಯ ವ್ಯಾಖ್ಯಾನವಿಶೇಷ ಸಹಿತ ಕನ್ನಡ ಅನುವಾದ

ಭಗವಂತನನ್ನು ತಿಳಿಯುವುದು ಪ್ರತಿಯೊಬ್ಬ ಸಾತ್ವಿಕನ ಮುಖ್ಯ ಕರ್ತವ್ಯ. ಅವನ ಅರಿವೇ ಆತ್ಯಂತಿಕದುಃಖನಿವೃತ್ತಿಗೆ ಹಾಗೂ ಇಷ್ಟಪ್ರಾಪ್ತಿಗೆ ಕಾರಣ. ಆ ಹರಿಯ ಅರಿವು ಅಷ್ಟು ಸುಲಭದ ಮಾತಲ್ಲ. ಹರಿಯನ್ನು ಅರಿತ ಹಿರಿಯ ಗುರುಗಳು ಅವನ ಅರಿವು ಮೂಡಿಸ-ಬೇಕು. ಅನ್ನುವದಕ್ಕಾಗಿಯೇ ಪರಮಕರುಣಾಳುಗಳಾದ ಶ್ರೀಮದಾನಂದತೀರ್ಥರು ಸರ್ವಾರಿಷ್ಟನಿವಾರಕನಾದ ಭಕ್ತೇಷ್ಟಚಿಂತಾಮಣಿಯಾದ ಪರಮಾತ್ಮನ ನಖಸ್ತೋತ್ರವನ್ನು ಮಾಡಲು ಇಚ್ಛಿಸಿದರು. ನನ್ನ ಭಕ್ತರು ಸಂಸಾರಕ್ಕೆ ಕಾರಣವಾದ ಅಜ್ಞಾನ-ವಿಪರೀತ-ಜ್ಞಾನಗಳಲ್ಲಿ ಮುಳುಗಿ ಹೋಗುತ್ತಾರೆ ಎಂಬ ಕಾರಣಕ್ಕೆ ಬ್ರಹ್ಮಾದಿಸಕಲದೇವತೆಗಳಿಂದಲೂ ಉಪಾಸ್ಯನಾದ ಆ ಭಗವಂತನ ಮಹಿಮೆಯನ್ನು ತಿಳಿಸಲೋಸುಗ ನರಸಿಂಹದೇವರ ನಖಸ್ತುತಿಯನ್ನು ಮಾಡುತ್ತಿದ್ದಾರೆ.

ಪಾಂತ್ವಸ್ಮಾನ್ ಪುರುಹೂತವೈರಿಬಲವನ್ಮಾತಂಗಮಾದ್ಯದ್ಘಟಾ-
ಕುಂಭೋಚ್ಚಾದ್ರಿವಿಪಾಟನಾಧಿಕಪಟುಪ್ರತ್ಯೇಕವಜ್ರಾಯಿತಾಃ ।
ಶ್ರೀಮತ್ಕಂಠೀರವಾಸ್ಯ ಪ್ರತತಸುನಖರಾ ದಾರಿತಾರಾತಿದೂರ-
ಪ್ರಧ್ವಸ್ತಧ್ವಾಂತಶಾಂತಪ್ರವಿತತಮನಸಾ ಭಾವಿತಾ ನಾಕಿವೃಂದೈಃ ॥ 1 ॥

ಪ್ರತತ-ದೇಶಕಾಲಗುಣಗಳಿಂದ ಅತ್ಯಂತ ವ್ಯಾಪ್ತನಾದ ಹೇ ಶ್ರೀಮತ್ಕಂಠೀರವಾಸ್ಯ-ಕಾಂತಿಯಿಂದ ಕೂಡಿದ, ಲಕ್ಷ್ಮೀಸಹಿತನಾದ, ಸಿಂಹ ಸದೃಶವಾದ ಮುಖವುಳ್ಳ ನರಸಿಂಹ-ದೇವರೇ ಪುರುಹೂತವೈರಿಬಲವನ್ಮಾತಂಗಮಾದ್ಯದ್ಘಟಾಕುಂಭೋಚ್ಚಾದ್ರಿವಿಪಾಟನಾಧಿ ಕಪಟುಪ್ರತ್ಯೇಕವಜ್ರಾಯಿತಾಃ-ಪುರುಹೂತ-ಇಂದ್ರನ ವೈರಿ-ವೈರಿಗಳಾದ ಅಸುರರೆಂಬ ಬಲವತ್-ಬಲಿಷ್ಠವಾದ ಮಾತಂಗ-ಆನೆಗಳ ಮಾದ್ಯತ್-ಮದಿಸಿದ ಘಟಾ-ಗುಂಪಿನ ಕುಂಭ-ಕುಂಭಸ್ಥಳಗಳೆಂಬ ಉಚ್ಚಾದ್ರಿ-ಉನ್ನತ ಪರ್ವತಗಳ ವಿಪಾಟನ-ಸೀಳುವಿಕೆಯಲ್ಲಿ ಅಧಿಕ-ಅತ್ಯಂತ ಪಟು-ನಿಪುಣವಾಗಿ ಪ್ರತ್ಯೇಕವಜ್ರಾಯಿತಾಃ-ಒಂದೊಂದೂ ವಜ್ರಾಯುಧದಂತೆ ಇರುವ ದಾರಿತಾರಾತಿದೂರಪ್ರಧ್ವಸ್ತಧ್ವಾಂತಶಾಂತಪ್ರವಿತತಮನಸಾ-ದಾರಿತ-ಸೀಳಲ್ಪಟ್ಟ ಅರಾತಿ-ಕಾಮಾದಿಶತ್ರುಗಳುಳ್ಳ (ಶತ್ರುಗಳನ್ನು ಸೀಳಿದ) ದೂರ-ದೂರದಿಂದಲೇ ಪ್ರಧ್ವಸ್ತಧ್ವಾಂತ-ಕತ್ತಲೆಯನ್ನು ಪರಿಹರಿಸಿಕೊಂಡ ಶಾಂತ-ಶಾಂತವಾದ ಪ್ರವಿತತ-ಅತ್ಯಂತ ವಿಶಾಲವಾದ ಮನಸಾ-ಮನಸ್ಸಿನಿಂದ ನಾಕಿವೃಂದೈಃ-ದೇವತಾ ವೃಂದಗಳಿಂದ ಭಾವಿತಾಃ-ಆರಾಧಿಸಲ್ಪಡುವ ಸುನಖರಾಃ-ಶೋಭನನಖಗಳು ಅಸ್ಮಾನ್-ನಮ್ಮನ್ನು ಪಾಂತು-ಪಾಲಿಸಲಿ. (ರಕ್ಷಿಸಲಿ)

**ಭಾವಾರ್ಥ-** ಸಕಲವಾಙ್ಮನೋ ನಿಯಾಮಕಳಾದ ಲಕ್ಷ್ಮೀದೇವಿಯಿಂದ ಸಹಿತರಾದ ನರಸಿಂಹದೇವರ ಉಗುರುಗಳು ದೇವೇಂದ್ರನ ಶತ್ರುಗಳಾದ ದೈತ್ಯರೆಂಬ ಬಲಿಷ್ಠಮದ್ದಾನೆಗಳ ಹಿಂಡಿನ ಗಂಡಸ್ಥಳವೆಂಬ ಎತ್ತರದ ಬೆಟ್ಟಗಳನ್ನು ಸೀಳಲು ಅತ್ಯಂತ ಸಮರ್ಥವಾಗಿವೆ.

ಒಂದೊಂದೂ ವಜ್ರಾಯುಧದಂತೆ ಇವೆ. ಕಾಮಾದಿಶತ್ರುವರ್ಗವನ್ನು ನಾಶಗೊಳಿಸಿ ಅಜ್ಞಾನವೆಂಬ ಕತ್ತಲೆಯನ್ನು ದೂರದಲ್ಲೇ ಕಳೆದುಕೊಂಡು ಭಗವಂತನನ್ನು ಬಿಟ್ಟು ಬೇರೆ-ಕಡೆಗೆ ವಿರಕ್ತವೂ, ವಿಷ್ಣುಭಕ್ತಿಸಂಪನ್ನವೂ ಆದ ಮನಸ್ಸಿನಿಂದ ದೇವತೆಗಳು ಧ್ಯಾನ ಮಾಡುವಂತಹ ಉಗುರುಗಳಾಗಿವೆ. ಅಂತಹ ಭಗವಂತನ ಉಗುರುಗಳು ನಮ್ಮನ್ನು ರಕ್ಷಿಸಲಿ.

**ವ್ಯಾಖ್ಯಾನವಿಶೇಷ-**

**ಮೊದಲು ಲಕ್ಷ್ಮಿಗೆ ನಮಸ್ಕಾರ.**

ಸಕಲವಾಙ್ಮನೋದೇವತೆಯಾದ ಲಕ್ಷ್ಮೀದೇವಿಯ ಉಪಾಸನೆಯಿಲ್ಲದೇ ಗ್ರಂಥದ ಪಠಣ-ಪಾಠಣಗಳು ಕಷ್ಟಸಾಧ್ಯ. ಅವಳನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಉಪಾಸನೆ ಮಾಡಿದರಾಯಿತು ಎನ್ನುತ್ತೇವೆ ಎಂದರೆ ಹಾಗೆ ಹೇಳಲು ಬರುವದಿಲ್ಲ. ಅವಳನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಉಪಾಸನೆ ಮಾಡುವಂತೆಯೂ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಆಚಾರ್ಯರು ತಾವು ರಚಿಸುತ್ತಿರುವ ನರಸಿಂಹನಖಸ್ತುತಿ ಅತಿ ಪುಟ್ಟದಾಗಿದ್ದರೂ ಅಲ್ಲಿ ಈ ಲಕ್ಷ್ಮೀಸಹಿತನಾದ ಭಗವಂತನನ್ನು ಉಪಾಸನೆ ಮಾಡಬೇಕು ಎಂಬ ತತ್ತ್ವವನ್ನು ತಿಳಿಸಿ ಕೊಡುವದಕ್ಕಾಗಿಯೇ ಶೀಮತ್ಕಂಠೀರವಾಸ್ಯ ಎಂದು ಉದ್ಗಾರ ಎತ್ತಿದ್ದಾರೆ. ಇಲ್ಲಿ ಶ್ರೀಸಹಿತ ನರಸಿಂಹದೇವರನ್ನು ಸ್ತುತಿಸುವ ಮೂಲಕ ಮುಂದೆ ಮಾಡಲಿರುವ ವಾಯುದೇವರ ಸ್ತೋತ್ರರೂಪವಾದ ವಾಗ್ವ್ಯಾಪಾರವು ನಿರ್ವಿಘ್ನವಾಗಿ ನಡೆಯಲಿ ಎನ್ನುವದು ಅವರ ಹೃದಯವೆಂದು ತಿಳಿಯಬಹುದಾಗಿದೆ.

ಈ ಶ್ಲೋಕದಲ್ಲಿ ನರಸಿಂಹನನ್ನು ಸ್ತುತಿಸದೇ ಅವನ ವಿಸ್ತೃತವಾದ ಸುಂದರವಾದ ಉಗುರುಗಳನ್ನು ಸ್ತುತಿಸಿದ್ದಾರೆ. ಕಾರಣ ಭಗವಂತನ ಉಗುರುಗಳಿಗೂ ಅವನಿಗೂ ಕಿಂಚಿತ್ತು ಬೇಧವಿಲ್ಲ ಎಂದು ತಿಳಿಸುವ ಉದ್ದೇಶದಿಂದ. ಸಾಮಾನ್ಯವಾಗಿ ನಮ್ಮ ದೇಹದಲ್ಲಿ ಕಾಣಿಸಿಕೊಳ್ಳುವ ಕೂದಲು, ಉಗುರುಗಳು ನಮ್ಮಿಂದ ಭಿನ್ನ ಎಂದು ವ್ಯವಹರಿಸಲ್ಪಡುತ್ತವೆ. ಆದರೆ ನಾರಾಯಣನಿಗೂ ಅವನ ಅವಯವಗಳಿಗೆ ಕಿಂಚಿತ್ತು ಭೇದ ಇಲ್ಲ ಎಂದು ತಿಳಿಸುವದಕ್ಕಾಗಿ ಉಗುರುಗಳನ್ನು ಸ್ತುತಿಸಲಾಗಿದೆ.

**ವಾಯುಸ್ತುತಿಯ ಅವತಾರದ ರಹಸ್ಯ**

ಛಲಾರಿಶೇಷಾಚಾರ್ಯರು ತಮ್ಮ ಮಂದಬೋಧಿನಿ ಎಂಬ ವಾಯುಸ್ತುತಿಯ ವ್ಯಾಖ್ಯಾನದ ಆರಂಭದಲ್ಲಿ ಒಂದು ಆಖ್ಯಾಯಿಕೆಯನ್ನು ಪ್ರಸ್ತುತಪಡಿಸುತ್ತಾರೆ. ಒಂದು ಸಂದರ್ಭದಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರ ವಿಶಿಷ್ಟ-ಶಿಷ್ಯಶಿಷ್ಯರಾದ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾ-ಚಾರ್ಯರು ಆಚಾರ್ಯರ ಜೊತೆಗೆ ಬದರಿಕಾಶ್ರಮಕ್ಕೆ ತೆರಳಿದರು. ಅಲ್ಲಿ ಶ್ರೀಮನ್ಮಧ್ವಾ-ಚಾರ್ಯರು ದೇವಾಲಯದ ಬಾಗಿಲನ್ನು ಮುಚ್ಚಿಕೊಂಡು ನರನಾರಾಯಣರನ್ನು ಪೂಜಿಸುತ್ತಿರಲು ಈಗ ಶ್ರೀಮನ್ಮಧ್ವಾಚಾರ್ಯರು ಏನು ಮಾಡುತ್ತಿದ್ದಾರೆ ಎಂಬ

ಉತ್ಕಟಜಿಜ್ಞಾಸೆಯಿಂದ ಬಾಗಿಲರಂಧ್ರಗಳಿಂದ ಆಚಾರ್ಯರನ್ನು ನೋಡಲು ಹನುಮ-ಭೀಮ-ಮಧ್ವರೂಪಗಳಿಂದ ರಾಮ-ಕೃಷ್ಣ-ವೇದವ್ಯಾಸರನ್ನು ಪೂಜಿಸುತ್ತಿದ್ದ ವಿಚಿತ್ರ ಹಾಗೂ ಆಶ್ಚರ್ಯಕರವಾದ ದೃಶ್ಯವನ್ನು ತ್ರಿವಿಕ್ರಮಪಂಡಿತರು ಕಂಡರು. ಭಕ್ತಿ ಭಾವ ಉಕ್ಕೇರಿತು. ತಮ್ಮ ಗುರುಗಳಾದ ಮಧ್ವಾಚಾರ್ಯರು ವಾಯುದೇವರ ಅವತಾರರೆಂದು ನಿಶ್ಚಯಿಸಿ ಈ ಪ್ರಸಂಗದಲ್ಲಿ ಗುರುಸ್ತುತಿ ಮಾಡುವದು ಅತ್ಯಂತ ಸಂಗತವೆಂದು ಭಾವಿಸಿ ಅವಶ್ಯ ಕರ್ತವ್ಯ-ವಾದ ಗುರುಸ್ತುತಿಯನ್ನು ಮಾಡಲು ಉಪಕ್ರಮಿಸಿದರು. ಅದು ಮುಕ್ತಾಯಗೊಳ್ಳುತ್ತಿದ್ದಂತೆ ಅತ್ಯಮೂಲ್ಯವಾದ ವಾಯುದೇವರ ಅವತಾರತ್ರಯಗಳ ಕ್ರಮಪ್ರಕಾರದ 'ವಾಯುಸ್ತುತಿ' ಎಂಬ ಮಂತ್ರತುಲ್ಯವಾದ ಸ್ತೋತ್ರರಾಜವನ್ನು ಗುರುಗಳಾದ ಮಧ್ವರಲ್ಲಿ ಭಕ್ತಿಯಿಂದ ಸಮರ್ಪಿಸಿದರು. ಈ ಸ್ತುತಿಯ ಖ್ಯಾತಿಗೋಸ್ಕರ ಇದನ್ನು ಪುರಶ್ಚರಣ ಮಾಡುವ ಜನರಿಗೆ ಒಂದೊಂದು ಶ್ಲೋಕಕ್ಕೂ ಬೇರೆ ಬೇರೆ ಫಲಪ್ರದಾನಶಕ್ತಿ ಪ್ರಕಟವಾಗುವಂತೆ ವರವನ್ನು ಬೇಡಿಕೊಂಡರು. ತ್ರಿವಿಕ್ರಮರ ಪ್ರಾರ್ಥನೆಯಂತೆ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ಅದೇ ಪ್ರಕಾರವಾಗಿ ವರವನ್ನು ಕೊಟ್ಟು ಆ ಸ್ತೋತ್ರದ ವೀರ್ಯವತ್ತತೆಗೆ ಕುರುಹು ಎನ್ನುವಂತೆ ಶ್ರೀಮನ್ನರಸಿಂಹ ನಖಸ್ತುತಿಯನ್ನು ಮುನ್ನುಡಿಯಾಗಿ ನೀಡಿದರು. ತಾವು ರಚಿಸಿದ ಈ ಶ್ಲೋಕದ್ವಯವನ್ನು ಸಂಪುಟಾಕಾರದಿಂದ (ಆದ್ಯಂತದಲ್ಲಿ) ಯಾರು ಪಠಿಸುತ್ತಾರೋ ಅವರಿಗೆ ಆ ಆ ಫಲಗಳು ಸಿದ್ಧಿಸಲಿ ಎಂದು ಆಶೀರ್ವದಿಸಿದರು.

## ನರಸಿಂಹ ನಖಸ್ತುತಿಯ ರಚನೆಯ ಔಚಿತ್ಯ

ಇಲ್ಲಿ ಕೆಲವು ವಿಚಾರಗಳನ್ನು ಹೀಗೆ ತಿಳಿಯಬಹುದು. ಮಧ್ವಾಚಾರ್ಯರು ತಾವು ರಚಿಸಿದ ನರಸಿಂಹನಖಸ್ತುತಿಯನ್ನು ಹರಿವಾಯುಸ್ತುತಿಯ ಮುನ್ನುಡಿಯಾಗಿ ನೀಡಿದ್ದೇಕೆ ? ಆಚಾರ್ಯರಿಗೆ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರು ರಚಿಸಿದ ವಾಯುಸ್ತುತಿಯು ವಿಷ್ಣುಸ್ತುತಿ ಇಲ್ಲದ ಕೇವಲ ಆತ್ಮಸ್ತುತಿರೂಪವಾಗಿದೆ. ಕಾರಣ ನಾವು ನರಸಿಂಹನಖಸ್ತುತಿಯನ್ನು ನೀಡಿದರೆ ಇದು ಪೂರ್ಣವಾಗುತ್ತದೆ ಎಂಬ ಅರ್ಥದಲ್ಲಿ ನಖಸ್ತುತಿಯನ್ನು ನೀಡಿದ್ದಾಗಿ ಹೇಳಿದ್ದಾರೆ ಎಂಬುದು ಸರಿಯಲ್ಲ. ಕಾರಣ ತ್ರಿವಿಕ್ರಮ ಪಂಡಿತಾಚಾರ್ಯರು ತಾವು ರಚಿಸಿದ ಸ್ತುತಿ ಇದು ಕೇವಲ ವಾಯುಸ್ತುತಿಯಲ್ಲ ಇದು ಹರಿವಾಯುಸ್ತುತಿ. ಇದಕ್ಕೆ ಆಧಾರ ವೆಂಬಂತೆ 'ಯೋಽಸೌ ವ್ಯಾಸಾಭಿಧಾನಃ' ಎಂದು ಹೇಳುವ ಮೂಲಕ ಇದು ಹರಿವಾಯುಸ್ತುತಿ ಎಂದು ಧೃಡಪಡಿಸಿರುತ್ತಾರೆ. ಹೀಗಿರುವಾಗ ವಿಷ್ಣುಸ್ತುತಿಯನ್ನು ಬಿಟ್ಟು ಕೇವಲ ಆತ್ಮಸ್ತುತಿಯನ್ನು ಮಾಡಿದ್ದಾರೆ ಎಂದು ನರಸಿಂಹನಖಸ್ತುತಿಯನ್ನು ರಚಿಸಿದರು ಎಂಬ ವಾದವು ಸರಿಯಲ್ಲ. ಹಾಗಾದರೆ ಪ್ರಾಚೀನವ್ಯಾಖ್ಯಾನಗಳ ಅಭಿಪ್ರಾಯವೇನು ಎಂಬ ಶಂಕೆಗೆ ಹೀಗೆ ಸಮಾಧಾನವನ್ನು ತಿಳಿಯಬಹುದು.

ಈ ಸ್ತುತಿಯು ಹರಿವಾಯು ಉಭಯ ಪರವಾಗಿದೆ ಎಂಬ ವಿಷಯದಲ್ಲಿ ಪ್ರಾಚೀನ-ವ್ಯಾಖ್ಯಾನಗಳಲ್ಲಿ ಯಾವ ವಿವಾದವೂ ಇಲ್ಲ. 'ಸ್ತುತಿಮಕೃತಹರೇರ್ವಾಯುದೇವಸ್ಯ ಚಾಸ್ಯ'

ಇತ್ಯಾದಿಯಾಗಿ ಹರಿಸ್ತವನಭಾಗವು ಅತ್ಯಲ್ಪವಾಗಿದ್ದರೂ ವಿಶೇಷವಾಗಿ ವಾಯು ಪರವಾಗಿ ವಾಯುಸ್ತವನಭಾಗವಾಗಿ ತೋರುತ್ತದೆ. ಪ್ರಾಸಂಗಿಕವಾಗಿ ಅಲ್ಲಲ್ಲಿ ಹರಿವಾಚಕಶಬ್ದಗಳು ಬಳಕೆಯಾಗಿದ್ದರಿಂದಲೂ ಹರಿವಾಯುಸ್ತುತಿಯೆಂದು ಗ್ರಂಥಕಾರರು ಹೆಸರಿಸಿದ್ದರೂ ವಾಯುಸ್ತವನದಲ್ಲಿಯೇ ಈ ಸ್ತುತಿಗೆ ಮುಖ್ಯತಾತ್ಪರ್ಯ ಇದೆ ಎಂಬ ಮಂದ ಜನರ ಸಂದೇಹಕ್ಕೆ ಸುಂದರ ಉತ್ತರ ಎಂಬಂತೆ ಶ್ರೀಮದಾಚಾರ್ಯರು ನರಸಿಂಹನಖಸ್ತುತಿಯನ್ನು ರಚಿಸಿದರು. ಹಾಗಾದರೆ 'ವಿಷ್ಣುಸ್ತುತಿಂ ವಿನಾ ಕೇವಲಮಾತ್ಮಸ್ತುತಿಮಸಹಮಾನಾಃ' ಎಂಬ ಪ್ರಾಚೀನವ್ಯಾಖ್ಯಾನಕಾರರ ದಿಟ್ಟ ಮಾತಿನ ಅಭಿಪ್ರಾಯವೇನು ಎಂಬ ಶಂಕೆಗೆ ಹೀಗೆ ಸಮಾಧಾನವನ್ನು ತಿಳಿಯಬಹುದಾಗಿದೆ. ವಿಷ್ಣು ಸ್ತುತಿಂ ವಿನಾ ಎಂಬುದಕ್ಕೆ ಅಸಹಮಾನಾಃ ಎಂಬುದರ ಜೊತೆಗೆ ಅನ್ವಯವನ್ನು ಮಾಡಬೇಕು. ಹೀಗೆ ಹೇಳುವದರಿಂದ ಶ್ರೀಮದಾಚಾರ್ಯರು ತಾವು ಈ ಸ್ತುತಿಗೆ ಉಭಯಪರತ್ವವಿದೆ ಎಂದು ತಿಳಿದು ಅದರಲ್ಲಿ ವಿಷ್ಣುಪರತ್ವ ವಿಷಯದಲ್ಲಿ ಅಸಹನವನ್ನು ಹೊಂದಲಿಲ್ಲ. 'ಕೇವಲಂ' ಅಸಹಮಾನಾಃ ಅಂದರೆ ಮುಖ್ಯವಾಗಿ ಅಂದರೆ ಹರಿಸಮಾನವಾಗಿ ತಮಗೂ ಸ್ತುತ್ಯುದ್ದೇಶ್ಯತ್ವವನ್ನು ಮಾತ್ರ ಸಹಿಸಲಿಲ್ಲ. ಆದಕಾರಣ ನಖಸ್ತುತಿಯನ್ನು ರಚಿಸಿದರು. ಭಗವನ್ನಖ ಸಾಮರ್ಥ್ಯದಲ್ಲಿ ಅನಂತಾಂಶಕ್ಕೆ ತಾವು ಸಮರಲ್ಲ ಜೊತೆಗೆ ಆತ್ಮ ಸ್ತುತಿಯನ್ನು ಕೇಳಿ ಮೈಮರೆತು ಅಹಂಕಾರಕ್ಕೆ ಒಳಗಾಗುವದು ಒಳ್ಳೆಯದಲ್ಲ ಎಂಬ ಸಂದೇಶವನ್ನು ಸಾರುವದಕ್ಕಾಗಿ ನರಸಿಂಹನಖಸ್ತುತಿ-ಯನ್ನು ರಚಿಸಿದರು ಎಂದು ತಿಳಿಯಬೇಕು ಎನ್ನುವದು ಪ್ರಾಚೀನವ್ಯಾಖ್ಯಾನಕಾರರ ಅಭಿಪ್ರಾಯವಾಗಿದೆ.

## ಬ್ರಹ್ಮಾದಿಯೋಗಿನಾಂ ಜ್ಞಾನಾಭಾವಃ ಸರ್ವದಾ ನಾಸ್ತಿ

ಬ್ರಹ್ಮಾದಿಗಳಿಗೆ ಭಗವದ್ವಿಷಯಕ ಅಂತಃಕರಣರೂಪವಾದ ಜ್ಞಾನಪ್ರವಾಹವು ಅನಾದಿಕಾಲದಿಂದಲೂ ಇದೆ. ಎಂದು ಶ್ರೀವಿಶ್ವಪತಿತೀರ್ಥರು ದೂರಪ್ರಧ್ವಸ್ತ ಎಂಬ ಶಬ್ದವನ್ನು ವ್ಯಾಖ್ಯಾನಿಸುವಾಗ ತಿಳಿಸಿದ್ದಾರೆ. ಆ ವಿಷಯವನ್ನು ಅವರ ಮಾತಿನಲ್ಲಿಯೇ ತಿಳಿಯುವ-ದಾದರೆ- **ದೂರಪ್ರಧ್ವಸ್ತತ್ವಮ್**-ದೂರಾತ್ ಪ್ರಧ್ವಸ್ತಂ ದೂರಪ್ರಧ್ವಸ್ತಮ್ । ಅನಾದಿತಃ ಅವಿದ್ಯಮಾನಮಿತ್ಯರ್ಥಃ। ಬ್ರಹ್ಮಾದಿಯೋಗಿನಾಂ ಭಗವದ್ವಿಷಯಕ ಅಂತಃಕರಣವೃತ್ತಿರೂಪ-ಜ್ಞಾನಪ್ರವಾಹಸ್ಯಾಪೀದಂ ಪ್ರಥಮತಾಭಾವೇನ ಅನಾದಿತ್ವಾತ್ ಭಗವದ್ವಿಷಯಕ-ಜ್ಞಾನಾಭಾವಲಕ್ಷಣಾಜ್ಞಾನಸ್ಯ ದೂರಪ್ರಧ್ವಸ್ತತ್ವಮಿತಿ ಭಾವಃ।

ಇಲ್ಲಿ ಬಾಲಬೋಧಿನಿಕಾರರಾದ ಶ್ರೀವಿಶ್ವಪತಿತೀರ್ಥರು ದೂರಪ್ರಧ್ವಸ್ತ ಎಂಬ ಶಬ್ದವನ್ನು ಅನಾದಿತಃ ಅವಿದ್ಯಮಾನಂ ಎಂದು ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ. ಈ ಶಬ್ದಕ್ಕೆ ದೂರದಿಂದಲೇ ಅಜ್ಞಾನವನ್ನು ಪರಿಹರಿಸಿಕೊಂಡ ಎಂಬ ಅರ್ಥವು ತೋರುತ್ತಿದ್ದರೂ ಈ ಶಬ್ದದ ಒಳಾರ್ಥ-ವನ್ನು ತಿಳಿಸುವದಕ್ಕಾಗಿ ಅದನ್ನು ಹೀಗೆ ವಿವರಿಸಿದ್ದಾರೆ. ಬ್ರಹ್ಮಾದಿಯೋಗಿಗಳಿಗೆ ಭಗವ-ದ್ವಿಷಯಕ ಅಂತಃಕರಣರೂಪವಾದ ಜ್ಞಾನಪ್ರವಾಹವು ಅನಾದಿಕಾಲದಿಂದಲೂ ಇದೆ

ಆದ್ದರಿಂದ ಇದು ಮೊದಲು ಎಂದು ಯಾವುದೂ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಭಗವದ್ವಿಷಯಕ-ಜ್ಞಾನಾಭಾವರೂಪ ಅಜ್ಞಾನವು ದೂರಪ್ರಧ್ವಸ್ತವಾಯಿತು ಎಂದು.

### ನಮ್ಮ ಉದ್ಧಾರಕ್ಕಾಗಿಯೂ 'ಅಸ್ಮಾನ್ ಪುನಂತು' ಎಂದು ಪ್ರಾರ್ಥಿಸಿದವರು

**ಅಸ್ಮಾನ್ ಪುನಂತು-** ಮಂಗಲಪದ್ಯದಲ್ಲಿ ಆಚಾರ್ಯರು ನರಸಿಂಹದೇವರನ್ನು ಪ್ರಾರ್ಥಿಸಿದ್ದಾರೆ. ಇಲ್ಲಿ ಪ್ರಾರ್ಥಿಸುತ್ತಿರುವವರು ಆಚಾರ್ಯರು. ಅವರು ತಾವು ಪ್ರಾರ್ಥನೆ ಮಾಡುವಾಗ ಮಾಂ ಪಾಂತು ಎಂದು ಏಕವಚನಪ್ರಯೋಗ ಮಾಡಬೇಕಾಗಿತ್ತು. ಅಸ್ಮಾನ್ ಎಂದು ಪ್ರಯೋಗಿಸಿದ್ದು ಹೇಗೆ ? 'ಅಸ್ಮದೋದ್ವಯೋಶ್ಚ' (ಪಾ.ಸೂ-1.2.59) ಏಕತ್ವೇ ದ್ವಿತ್ವೇ ಚ ವಿವಕ್ಷಿತೇಽಸ್ಮದೋ ಬಹುವಚನಂ ವಾ ಸ್ಯಾತ್ ಎಂಬ ಸೂತ್ರದ ಪ್ರಕಾರ ಏಕತ್ವ ದ್ವಿತ್ವಗಳು ವಿವಕ್ಷಿತವಾದಾಗಲೂ ಅಸ್ಮದ್ ಶಬ್ದದ ಬಹುವಚನವನ್ನು ಪ್ರಯೋಗಿಸಬಹುದು ಎಂದು ಹೇಳಿರುವದರಿಂದ ಇಲ್ಲಿ ಅಸ್ಮಾನ್ ಎಂದದ್ದು ಯುಕ್ತವೇ ಆಗಿದೆ.

ಈ ಪಕ್ಷದಲ್ಲಿ ಒಂದು ಸ್ವಾರಸ್ಯವಿದೆ. ಇಲ್ಲಿ ಪ್ರಾರ್ಥನೆ ಮಾಡುತ್ತಿರುವವರು ಆಚಾರ್ಯರು. ಅವರು ನರಸಿಂಹದೇವರಿಗೆ ನಮ್ಮನ್ನು ರಕ್ಷಿಸು ಎಂದು ರಕ್ಷಣೆಯ ಪ್ರಾರ್ಥನೆ ಮಾಡಿದ್ದು ತಮಗೆ ಮಾತ್ರ. ಕಾರಣ ಅವರ ಪ್ರಾರ್ಥನೆಯು ಜ್ಞಾನ-ಭಕ್ತಿ-ವೈರಾಗ್ಯದ ಹೊರತು ಪಡಿಸಿ ಬೇರೆ ಯಾವ ವಿಷಯಕವಾಗಿ ಇರುವದಿಲ್ಲ. ಏಕಾಂತ ಭಕ್ತ-ರಾದ ಆಚಾರ್ಯರು ಭಗವಂತನನ್ನು ಬಿಟ್ಟು ಬೇರೆ ಏನನ್ನೂ ಪ್ರಾರ್ಥಿಸುವುದಿಲ್ಲ. ಇದು ಅವರ ಸ್ವಭಾವ. ಆದ್ದರಿಂದ ಇಲ್ಲಿ ಅಸ್ಮಾನ್ ಎನ್ನುವದಕ್ಕೆ ಆಚಾರ್ಯರೊಬ್ಬರನ್ನೇ ಎಂದು ತಿಳಿಯುವದು ಅತ್ಯಂತಸೂಕ್ತವೆನಿಸುತ್ತದೆ.

ಇನ್ನೊಂದು ರೀತಿಯಿಂದ ತಿಳಿಯುವದಾದರೆ ಬಹುವಚನಕ್ಕೆ ಆದ್ಯರ್ಥವನ್ನು ಕೆಲವು ಸ್ಥಳಗಳಲ್ಲಿ ಹೇಳಿರುವದು ಕಂಡಿದೆ. ಹಾಗೆ ಹೇಳುವದಾದರೆ ಅಸ್ಮಾನ್ ಎಂಬುದಕ್ಕೆ ಅಸ್ಮದಾದಿಗಳನ್ನು ಎಂದು ಅರ್ಥ. ಏತೇ ಚ ಅಹಂ ಚ ವಯಂ ಎಂದು ಏಕಶೇಷ-ದ್ವಂದ್ವಸಮಾಸ ಮಾಡಿ ಅಸ್ಮಾನ್ ಎಂಬುದಕ್ಕೆ ಅಸ್ಮದಾದಿಗಳನ್ನು ಅಂದರೆ ಇತರ ಸಜ್ಜನರನ್ನು ಎಂದು ಹೇಳಬಹುದು. ಹೀಗೆ ಎರಡು ರೀತಿಯಿಂದ ಅಸ್ಮಾನ್ ಎಂಬ ಪ್ರಯೋಗವು ಸಾಧು ಎಂದು ತಿಳಿಯಬಹುದಾಗಿದೆ.

### ನಖರ ಶಬ್ದಪ್ರಯೋಗ ಏಕೆ ?

ನಖರ ಶಬ್ದದ ಪರ್ಯಾಯಶಬ್ದಗಳು ಅನೇಕ. ಅದರಲ್ಲಿ ನಖಶಬ್ದವೂ ಒಂದು. ಆ ನಖಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸದೇ ನಖರ ಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸುವದರ ಔಚಿತ್ಯವನ್ನು ಹೀಗೆ ತಿಳಿಯಬಹುದು. ನಖರಾ ಎನ್ನುವದಕ್ಕೆ ಉಗುರು ಎನ್ನುವದು ಒಂದು ಅರ್ಥವಾದರೆ ನ ಖರಾಃ ಎಂದು ಬಿಡಿಸಿಕೊಂಡಾಗ ಭಯಂಕರವಲ್ಲದ, ಕ್ರೂರವಲ್ಲದ ಎಂಬ ಅರ್ಥವೂ ಬರುತ್ತದೆ. ನರಸಿಂಹದೇವರ ಉಗುರುಗಳು ಶತ್ರುಗಳಿಗೆ ಕ್ರೂರವಾಗಿದ್ದರೂ ಭಕ್ತರಿಗೆ ಮಾತ್ರ

ಕೋಮಲವಾದವುಗಳು, ಮನಸ್ಸಿಗೆ ಹಿತವನ್ನು ತಂದು ಕೊಡುವಂತವು ಎನ್ನುವದನ್ನು ತಿಳಿಸುವದಕ್ಕಾಗಿ ಸುನಖರಾಃ ಎಂದು ಹೇಳಿದ್ದಾರೆ.

### ವಜ್ರಾಯುಧದಂತೆ ಇರುವ ನರಸಿಂಹದೇವರ ಉಗುರುಗಳು

ಪ್ರತ್ಯೇಕವಜ್ರಾಯಿತಾಃ-ಒಂದು ಸಿಂಹವು ತನ್ನ ಎಲ್ಲ ಉಗುರುಗಳನ್ನು ಬಳಿಸಿ ಆನೆಯ ಕುಂಭಸ್ಥಳವನ್ನು ಬಗೆಯುವಂತೆ ನಮ್ಮ ನರಸಿಂಹದೇವರು ತಮ್ಮ ಎಲ್ಲ ಉಗುರುಗಳನ್ನು ಬಳಸಿ ದೈತ್ಯರನ್ನು ಸಂಹರಿಸುತ್ತಾರೆಯೋ ಎಂದರೆ ಅದಕ್ಕೆ ಶ್ರೀಮದಾಚಾರ್ಯರು ಹೀಗೆ ಉತ್ತರ ನೀಡುತ್ತಾರೆ. ನರಸಿಂಹದೇವರ ಒಂದೊಂದು ನಖವೇ ಪ್ರತ್ಯೇಕವಾಗಿ ಒಂದೇ ಕಾಲದಲ್ಲಿ ಅನೇಕ ದೈತ್ಯರನ್ನು ಸಂಹರಿಸುವಲ್ಲಿ ಸಮರ್ಥವಾಗಿವೆ. ಹೀಗಿರುವಲ್ಲಿ ಎಲ್ಲ ನಖಗಳು ಸೇರಿ ಸಕಲದೈತ್ಯರನ್ನು ನಾಶಮಾಡುವಲ್ಲಿ ಸಮರ್ಥವಾಗುತ್ತವೆ ಎಂದು ಬೇರೆ ಹೇಳಬೇಕಿಲ್ಲ. ಅದು ಕೈಮುತ್ಯನ್ಯಾಯ ಸಿದ್ಧ. ಇಂದ್ರದೇವರು ತಮ್ಮಿಂದ ಭಿನ್ನವಾದ ವಜ್ರಾಯುಧವನ್ನು ಶತ್ರುಗಳ ಸಂಹಾರಕ್ಕಾಗಿ ಉಪಯೋಗಿಸಿದರೆ ನರಸಿಂಹದೇವರು ತಮ್ಮಿಂದ ಅಭಿನ್ನವಾದ ನಖಗಳಿಂದ ಸಕಲಕಾರ್ಯಗಳನ್ನು ನಿರ್ವಹಿಸುತ್ತಾರೆ ಎಂಬುದನ್ನು (ನರಸಿಂಹನಖಗಳಿಗೆ ವಜ್ರಸಾದೃಶ್ಯವನ್ನು ಹೇಳುವ ಮೂಲಕ) ವಜ್ರಾಯಿತಾಃ ಎಂಬ ಪದದಿಂದ ಸೂಚಿಸಿರುತ್ತಾರೆ.

ನರಸಿಂಹ ನಖಸ್ತವನವೇ ಸರ್ವಾಭಿಷ್ಟಪ್ರದವಾಗಿರುವಾಗ ಸರ್ವಾವಯವ ಧ್ಯಾನವು ಮಹಾ ಫಲಪ್ರದವೆಂದು ಹೇಳುವದೇನು ಎನ್ನುವದನ್ನು ಕೈಮುತ್ಯನ್ಯಾಯದಿಂದ ತಿಳಿಯಬಹುದಾಗಿದೆ. ಜೊತೆಗೆ ಇತರ ನಖಗಳಂತೆ ನರಸಿಂಹದೇವರ ನಖಗಳು ಹೇಯವಲ್ಲ ಭಗವಂತನ ನಖಗಳಿಗೂ ಭಗವಂತನಿಗೂ ಭೇದವಿಲ್ಲ ಎಂಬುದನ್ನು ಅತ್ಯಂತ ಅಭೇದವೇ ಇದೆ ಎನ್ನುವದನ್ನು ನರಸಿಂಹ ನಖಸ್ತೋತ್ರಮಾಡುವ ಮೂಲಕ ತಿಳಿಸುತ್ತಾರೆ.

### ಮುಖಮಾತ್ರ ಸಿಂಹದಂತೆ

ಕಂಠೀರವಾಸ್ಯ ಇದು ನರಸಿಂಹದೇವರಿಗೆ ಹೇಳಲಾದ ವಿಶೇಷಣವು. ಇದರ ಆಂತರ್ಯ ಹೀಗಿದೆ. ಇಲ್ಲಿ ನರಸಿಂಹದೇವರಿಗೆ ಸಿಂಹದ ಮುಖಮಾತ್ರಸಾದೃಶ್ಯವನ್ನು ಹೇಳಿರುವದರಿಂದ ಮುಖಮಾತ್ರವು ಸಿಂಹಸದೃಶ. ಉಳಿದ ಅವಯವಗಳು ಮಾನುಷಾವಯವಸದೃಶವಾಗಿವೆ ಎಂಬ ವಿಷಯುವನ್ನು ತಿಳಿಸಿದ್ದಾರೆ.

### ಪ್ರಥಮಶ್ಲೋಕದಲ್ಲಿ ಎರಡು ವೃತ್ತಗಳನ್ನು ಬಳಸಿದ್ದೇಕೆ ?

ಪ್ರಥಮ ಶ್ಲೋಕವು ಎರಡು ವೃತ್ತಗಳಿಂದ ಕೂಡಿದ್ದಾಗಿದೆ. ಒಂದು ಶಾರ್ದೂಲವಿಕ್ರೀಡಿತ ಮತ್ತೊಂದು ಸ್ರಗ್ಧರಾ. ಬೇರೆ ಬೇರೆ ಛಂದಸ್ಸಿನ ವೃತ್ತಗಳು ಇಲ್ಲಿ ಇರುವದರಿಂದ ಇದನ್ನು ಉಪಜಾತಿ ಎಂದು ಕರೆಯುತ್ತಾರೆ. ಈ ಉಪಜಾತಿಯನ್ನು ಇಲ್ಲಿ ಬಳಸಲು ಕಾರಣವನ್ನು ಹೀಗೆ ತಿಳಿಯಬಹುದಾಗಿದೆ. ನರಸಿಂಹದೇವರು ಹಿರಣ್ಯಕಶಿಪುವಿನ ಸಂಹಾರಕಾಲದಲ್ಲಿ

ಶಾರ್ದೂಲದಂತೆ(ಹುಲಿಯಂತೆ) ಕ್ರೀಡೆಯನ್ನು ಮಾಡಿದರು ಎನ್ನುವದನ್ನು ತಿಳಿಸುವದಕ್ಕೆ ಶಾರ್ದೂಲವಿಕ್ರೀಡಿತವೃತ್ತವನ್ನು, ಹಿರಣ್ಯಕಶಿಪುವಿನ ಕರಳನ್ನು ಬಗೆದು ಮಾಲೆಯಾಗಿ ಧರಿಸಿದರು ಎನ್ನುವದನ್ನು ಸೂಚಿಸುವದಕ್ಕಾಗಿ ಸ್ರಗ್ಧರಾವೃತ್ತವನ್ನು ಬಳಸಿದ್ದಾರೆ.

> ಲಕ್ಷ್ಮೀಕಾಂತ ಸಮಂತತೋऽಪಿ ಕಲಯನ್ನೈವೇಶಿತುಸ್ತೇ ಸಮಂ
> ಪಶ್ಯಾಮ್ಯುತ್ತಮವಸ್ತು ದೂರತರತೋಪಾಸ್ತಂ ರಸೋ ಯೋऽಷ್ಟಮಃ ।
> ಯದ್ರೋಷೋತ್ಕರದಕ್ಷನೇತ್ರಕುಟಿಲಪ್ರಾಂತೋತ್ಥಿತಾಗ್ನಿಸ್ಫುರತ್-
> ಖದ್ಯೋತೋಪಮವಿಸ್ಫುಲಿಂಗಭಸಿತಾ ಬ್ರಹ್ಮೇಶಶಕ್ರೋತ್ಕರಾಃ ॥ 2 ॥

**॥ ಇತಿ ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದಾಚಾರ್ಯವಿರಚಿತಾ ಶ್ರೀನರಸಿಂಹನಖಸ್ತುತಿಃ ॥**

ಲಕ್ಷ್ಮೀಕಾಂತ-ಲಕುಮಿನಲ್ಲನೇ ಸಮಂತತಃ-ಎಲ್ಲೆಡೆ ವಿಕಲಯನ್- ಪರಿಪರಿಯಾಗಿ ಹುಡುಕಿದರೂ ಈಶಿತುಃ-ಸರ್ವೇಶನಾದ ತೇ-ನಿನಗೆ ಸಮಂ-ಸಮನಾದವನನ್ನು ನ ಪಶ್ಯಾಮಿ ಏವ-ಸರ್ವಥಾ ಕಾಣಲಾರೆನು ಉತ್ತಮವಸ್ತು-ಉತ್ತಮವಾದ ವಸ್ತುವು ಯಃ ಅಷ್ಟಮಃ ರಸಃ-ಎಂಟನೆಯ ರಸದಂತೆ ದೂರತರತಃ-ಅತ್ಯಂತ ದೂರದಿಂದಲೇ ಅಪಾಸ್ತಂ-ನಿರಾಕೃತವು. ಬ್ರಹ್ಮೇಶಶಕ್ರೋತ್ಕರಾಃ-ಬ್ರಹ್ಮ ರುದ್ರ ಇಂದ್ರ ಮೊದಲಾದ ದೇವತೆಗಳ ಸಮೂಹಗಳು ಯದ್ರೋಷೋತ್ಕರದಕ್ಷಿನೇತ್ರಕುಟಿಲಪ್ರಾಂತೋತ್ಥಿತಾಗ್ನಿಸ್ಫುರತ್ಖದ್ಯೋತೋಪಮವಿಸ್ಫುಲಿಂಗಭಸಿತಾಃ-ಯದ್ರೋಷೋತ್ಕರ-ಯಾವ ನಿನ್ನ ಕ್ರೋಧದಿಂದ ಕೂಡಿದ ದಕ್ಷನೇತ್ರ-ದಿಟ್ಟ ಕಣ್ಣುಗಳ ಕುಟಿಲ-ಕುಡಿನೋಟದ ಪ್ರಾಂತ-ಪ್ರಾಂತದಿಂದ (ಕೊನೆಯಿಂದ) ಉತ್ಥಿತ-ಹೊರಹೊಮ್ಮುವ ಅಗ್ನಿ-ಬೆಂಕಿಯ ಸ್ಫುರತ್-ಹೊಳೆವ ಖದ್ಯೋತೋಪಮ-ಮಿಣುಕುಹುಳದಂತೆ ಇರುವ ವಿಸ್ಫುಲಿಂಗ-ಅಗ್ನಿಯ ಕಣಗಳಿಂದ ಭಸಿತಾಃ-ಭಸ್ಮಹೊಂದುವವು.

**ಭಾವಾರ್ಥ-** ಹೇ ಲಕುಮಿನಲ್ಲನೇ ಈ ಜಗತ್ತಿನಲ್ಲಿ ಎಲ್ಲಿ ಹುಡುಕಿದರೂ ನಿನಗೆ ಸರಿಸಾಟಿಯನ್ನು ನಾ ಕಾಣೆ. ಇನ್ನು ನಿನಗಿಂತ ಉತ್ತಮವಸ್ತು ಎಲ್ಲಿಂದ? ಅದು ಎಂಟನೆಯ ರಸವಿದ್ದಂತೆ ಸರಿ. ನಿನ್ನ ಪ್ರಖರವಾದ ಕಣ್ಣಿನ ತುದಿಯಲ್ಲಿ ಸಿಟ್ಟಿನಿಂದ ಸಿಡಿದು ಹುಟ್ಟಿದ ಬೆಂಕಿಯ ಹೊಳೆವ ಕಿಡಿಗಳು ಮಿಣುಕುಹುಳದಂತಿದ್ದರೂ ಬ್ರಹ್ಮ ರುದ್ರ ಇಂದ್ರಾದಿಗಳ ಸಮೂಹವನ್ನೇ ಬೂದಿಮಾಡುತ್ತವೆ.

**ವ್ಯಾಖ್ಯಾನವಿಶೇಷ-** ಛಾಂದೋಗ್ಯೋಪನಿಷತ್ತಿನಲ್ಲಿ ಪೃಥಿವ್ಯಾದಿಗಳನ್ನು ಶ್ರೇಷ್ಠ ಎಂದು ಹೇಳುವಾಗ ಎಲ್ಲರಿಗಿಂತ ನರಸಿಂಹದೇವರು ಶ್ರೇಷ್ಠ ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಆ ವಿಷಯವನ್ನು ಆಚಾರ್ಯರು ಇಲ್ಲಿ ನೆನಪಿಸಿಕೊಟ್ಟಿದ್ದಾರೆ. ಯಃ-ಯಾವುದು ಅಷ್ಟಮಃ-(ಪರಮಃಪರಾರ್ಧೋऽಷ್ಟಮೋ ರಸಃ) ಪೃಥಿವ್ಯಾದಿಗಳಿಗಿಂತಲೂ ಭಿನ್ನವಾದ

ಎಂಟನೆಯದಾದ ರಸಃ-ರಸವೋ ಸಃ-ಆ ಅಷ್ಟಮರಸವು ನರಸಿಂಹದೇವರೇ. ಪೃಥಿವ್ಯಾದಿಗಳನ್ನು ಶ್ರೇಷ್ಠ ಎಂದು ಹೇಳಿದರೂ ಅವೆಲ್ಲದಕ್ಕಿಂತ ಶ್ರೀನರಸಿಂಹದೇವರು ಶ್ರೇಷ್ಠರು.

ಜಗತ್ತಿನಲ್ಲಿ ಇರುವದೇ ಆರು ರಸ. ಮಧುರ, ಆಮ್ಲ, ಲವಣ, ಕಟು, ಕಷಾಯ, ತಿಕ್ತ ಎಂದು. ಏಳನೆಯ ರಸವೇ ಇಲ್ಲದಿರುವಾಗ ಎಂಟನೆಯ ರಸವು ಇಲ್ಲವೆಂದು ಹೇಳುವ ಅವಶ್ಯಕತೆಯೇ ಇರುವದಿಲ್ಲ. ಹೀಗೆ ದೇವರಿಗೆ ಸಮವಸ್ತುವೇ ಇಲ್ಲದಿರುವಾಗ ಉತ್ತಮ ವಸ್ತು ಇರಬಹುದು ಎಂಬುದನ್ನು ಊಹಿಸಲು ಕೂಡ ಬರುವದಿಲ್ಲ.

ಸಮಂತತಃ ಎಂಬುದಕ್ಕೆ ಎಲ್ಲಡೆಯಲ್ಲಿ ಎಂಬ ಅರ್ಥ ಒಂದಾದರೆ ಸಮ್ ಅಂತತಃ ಎಂದು ಪದ ಬಿಡಿಸಿ ಅರ್ಥವನ್ನು ಹೇಳಬಹುದಾಗಿದೆ. ಸಮ್ ಅಂತತಃ ಎಂದರೆ ಚೆನ್ನಾಗಿ ಅಂದರೆ ಉಪಕ್ರಮಾದಿ ತಾತ್ಪರ್ಯ ಲಿಂಗಾನುಸಾರವಾಗಿ ನಿರ್ಣಯಿಸಿ ತಿಳಿಯುವದಾದರೆ ಸಮಂ ನೈವ ಪಶ್ಯಾಮಿ ಕೆಲವು ವೇದ ಭಾಗದಿಂದ ರುದ್ರಾದಿಗಳಿಗೆ ಸರ್ವೋತ್ತಮತ್ವ ತಿಳಿದರೂ ಉಪಕ್ರಮಾದಿ ತಾತ್ಪರ್ಯಲಿಂಗಾನುಸಾರವಾಗಿ ನರಸಿಂಹದೇವರಿಗೇ ಸರ್ವೋತ್ತಮತ್ವವು ತಿಳಿಯಲ್ಪಟ್ಟಿದೆ ಎಂಬುದು ಇಲ್ಲಿ ಧ್ವನಿತವಾದ ಅರ್ಥ.

ಅಥವಾ ಸಮಂತತಃ ಎಂಬುದಕ್ಕೆ ಸಮ್ ಅಂತತಃ ಎಂದು ಬಿಡಿಸಿ ಇನ್ನೊಂದು ಅರ್ಥವನ್ನು ಹೀಗೆ ತಿಳಿಯಬಹುದು. ಸಮಂತತಃ ಪ್ರಳಯಕಾಲದಲ್ಲಿ ಎಂದು ಅರ್ಥವನ್ನು ಇಟ್ಟುಕೊಂಡು ಉತ್ತರಾರ್ಧದ ಜೊತೆಗೆ ಅನ್ವಯವನ್ನು ಮಾಡಬಹುದು. ನರಸಿಂಹದೇವರು ಸೃಷ್ಟಿ ಸ್ಥಿತಿ ಸಂಹಾರ ಈ ಮೂರಕ್ಕೂ ಕಾರಣರಾಗಿದ್ದರೂ ಸಂಹಾರ ಇದು ಮುಖ್ಯಕಾರ್ಯ ಆದ್ದರಿಂದ ಇದನ್ನು ಮಾಡುವವರು ನರಸಿಂಹದೇವರು ಎಂದು ಹೇಳುವಮೂಲಕ ನರಸಿಂಹದೇವರು ಸರ್ವೋತ್ತಮರೆಂದು ತಿಳಿಸಿದಂತಾಯಿತು. ನೈವ ಎಂದು ಹೇಳಿರುವದರಿಂದ ನಾಸ್ತಿ ನಾರಾಯಣಸಮಂ ನ ಭೂತಂ ನ ಭವಿಷ್ಯತಿ ಇತ್ಯಾದಿ ಸಮವಸ್ತು ನಿಷೇಧ ವಾಕ್ಯಗಳು ಇರುವದರಿಂದ ನರಸಿಂಹದೇವರೇ ಸರ್ವೋತ್ತಮರು ಎಂದು ನಿಶ್ಚಿತವಾಗುತ್ತದೆ. ಇಂತಹ ಸಮಸ್ತಶಾಸ್ತ್ರಪ್ರತಿಪಾದ್ಯರಾದ ಲಕ್ಷ್ಮೀನರಸಿಂಹದೇವರೇ ತಮಗೆ ಪ್ರೇಮಾಸ್ಪದರು ಎಂಬ ಕಾರಣದಿಂದ ಶ್ರೀಮದಾನಂದತೀರ್ಥಭಗವತ್ಪಾದರು ನರಸಿಂಹದೇವರನ್ನು ಪ್ರಾರ್ಥಿಸಿದ್ದಾರೆ.

ಖದ್ಯೋತೋಪಮವಿಸ್ಫುಲಿಂಗಭಸಿತಾಃ ಎನ್ನುವದಕ್ಕೆ ಮಂದಬೋಧಿನಿಕಾರರು ಒಂದು ವಿಶೇಷ ಅರ್ಥವನ್ನು ಹೇಳುತ್ತಾರೆ.

ಖದ್ಯೋತಶಬ್ದವನ್ನು ಆವರ್ತಿಗೊಳಿಸಿ ಒಂದು ಬಾರಿ ಖದ್ಯೋತಶಬ್ದಕ್ಕೆ ದೀಪದ ಹುಳ ಎಂಬ ಪ್ರಸಿದ್ಧ ಅರ್ಥವನ್ನು ಇಟ್ಟುಕೊಂಡು ಮಿಣುಕು ಹುಳದಂತೆ ಪರಿಮಾಣದಲ್ಲಿ ಸಣ್ಣದಾದ ಕಿಡಿಯಿಂದ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳ ನಾಶವಾಗುತ್ತದೆ ಎಂದು ಹೇಳಿ ಅದೇ

ಖದ್ಯೋತಶಬ್ದಕ್ಕೆ ಸೂರ್ಯ ಎಂಬ ಅರ್ಥವನ್ನು ಇಟ್ಟುಕೊಂಡು ಪರಿಮಾಣದಲ್ಲಿ ಚಿಕ್ಕದಾದರೂ ಸೂರ್ಯನಿಗೆ ಸದೃಶವಾದವುಗಳು ಎಂಬ ಭಾವವು ಇಲ್ಲಿ ಅಡಗಿದೆ ಎನ್ನುತ್ತಾರೆ.

ಈ ಶ್ಲೋಕದಲ್ಲಿ ದೇವತೆಗಳ ಲಯವನ್ನು ಹೇಳಿದ್ದಾರೆ. ಆ ಲಯ ಯಾವುದು ಎನ್ನುವಂತಹ ಪ್ರಶ್ನೆಗೆ ಬಾಲಬೋಧಿನಿಕಾರರು ತಮ್ಮ ವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ಹೀಗೊಂದು ವಿಶದವಾದ ಚರ್ಚೆಯನ್ನು ನಡೆಸಿದ್ದಾರೆ. ಅದರ ವಿವರ ಹೀಗಿದೆ.

ಅನುವ್ಯಾಖ್ಯಾನದ ನಾಲ್ಕನೇ ಅಧ್ಯಾಯ 2ನೇ ಪಾದದ ಆರಂಭದಲ್ಲಿ 'ಸ್ರಷ್ಟ್ರುತ್ವೇನ ಹಿ ಸೃಜ್ಯಾನಾಂ ಪ್ರವೇಶೋ ಬ್ರಹ್ಮಣೋ ಲಯಃ' ಎಂದು ದೇವತೆಗಳಿಗೆ ತಮಗಿಂತ ಉತ್ತಮರಲ್ಲಿ ಲಯ ಎಂದು ಆಚಾರ್ಯರು ತಿಳಿಸಿದ್ದಾರೆ. ಇಲ್ಲಿ ಆಚಾರ್ಯರು ಬ್ರಹ್ಮಾದಿ-ದೇವತೆಗಳು ನರಸಿಂಹದೇವರಲ್ಲಿ ಸಂಹೃತರಾಗುತ್ತಾರೆ ಅಂದರೆ ನರಸಿಂಹದೇವರಿಂದ ಬ್ರಹ್ಮಾದಿಗಳಿಗೆ ಲಯ ಎನ್ನುತ್ತಿದ್ದಾರೆ ಇದು ಹೇಗೆ ಉಪಪನ್ನವಾಗುತ್ತದೆ ಎನ್ನುವದು ಆಕ್ಷೇಪ. ಇದಕ್ಕೆ ಸಮಾಧಾನವನ್ನು ಹೀಗೆ ತಿಳಿಯಬಹುದು. ದೇವತೆಗಳ ಲಯ ಇದು ಎರಡು ವಿಧ. 1. ಬ್ರಹ್ಮಾಂಡದ ಒಳಗೆ 2. ಬ್ರಹ್ಮಾಂಡದ ಹೊರಗೆ. ಅನುವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ಹೇಳಿದ ಲಯವು ಬ್ರಹ್ಮಾಂಡದ ಹೊರಗೆ ಆಗುವ ಲಯ. ಇಲ್ಲಿ ಹೇಳುತ್ತಿರುವ ಲಯ ಇದು ಬ್ರಹ್ಮಾಂಡ ಒಳಗೆ ಆಗುವ ಲಯ ಹೀಗಾಗಿ ವಿರೋಧವಿಲ್ಲ.

ಮತ್ತೆ ಇದರ ಮೇಲೆ ಒಂದು ಆಕ್ಷೇಪವನ್ನು ಹೀಗೆ ಮಾಡಿಕೊಳ್ಳುತ್ತಾರೆ. ಬ್ರಹ್ಮಾಂಡದ ಒಳಗೆ ಸಂಕರ್ಷಣರೂಪದಿಂದ ಲಯ ಎಂದು ಹೇಳುವ 'ಸಂಕರ್ಷಣಶ್ಚ ಸ ಬಭೂವ ಪುನಃ ಸುನಿತ್ಯಸಂಹಾರಕಾರಣವಪುಃ' ಎಂಬ ತಾತ್ಪರ್ಯನಿರ್ಣಯದ ವಿರೋಧ ಬರುತ್ತದೆಯಲ್ಲ ಎನ್ನುವದು ಒಂದು ಆಕ್ಷೇಪವಾದರೆ ದ್ವಾದಶಸ್ತೋತ್ರದಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರು ಹೇಳಿದಂತೆ 'ವಿಶ್ವಸ್ಥಿತಿಪ್ರಲಯ.....ಇತ್ಯಾದಿ ಯಾಗಿ ಹೇಳಿ ಮುಂದೆ ಇದೇ ಎಳನೇ ಅಧ್ಯಾಯದ ಆರನೇ ಶ್ಲೋಕದಲ್ಲಿ' 'ಶಕ್ರೋಗ್ರದೀಧಿತಿ.....ಆಶ್ರಿತ್ಯನೃತ್ಯತಿ ಶಿವಃ ಪ್ರಕಟೋರುಶಕ್ತಿಃ' ಎನ್ನುವಲ್ಲಿ ದುರ್ಗಾದೇವಿ ಹಾಗೂ ರುದ್ರದೇವರಲ್ಲಿ ದೇವತೆಗಳಿಗೆ ಲಯ ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಇವುಗಳನ್ನು ಹೇಗೆ ಕೂಡಿಸುವದು ಎಂಬ ಶಂಕೆಗೆ ಹೀಗೆ ಸಮಾಧಾನವನ್ನು ತಿಳಿಯಬಹುದು. ಬ್ರಹ್ಮಾಂಡದ ಒಳಗೆ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳ ಅನೇಕ ರೂಪಗಳಿವೆ. ಅವುಗಳಲ್ಲಿ ಕೆಲವು ರೂಪಗಳಿಗೆ ಸಂಕರ್ಷಣನಲ್ಲಿ ಲಯ ಮತ್ತೆ ಕೆಲವುಗಳಿಗೆ ನರಸಿಂಹನಲ್ಲಿ ಮತ್ತೆ ಕೆಲವು ರೂಪಗಳಿಗೆ ದುರ್ಗಾದಿಗಳಲ್ಲಿ ಲಯ ಹೀಗೆ ಹೇಳಿದರೆ ವಿರೋಧ ಬರುವದಿಲ್ಲ.

★★★

# ಅಥ ಶ್ರೀಹರಿವಾಯುಸ್ತುತಿಃ

ಶ್ರೀಮದ್ವಿಷ್ಣ್ವಂಘ್ರಿನಿಷ್ಠಾತಿಗುಣಗುರುತಮಶ್ರೀಮದಾನಂದತೀರ್ಥ-
ತ್ರೈಲೋಕ್ಯಾಚಾರ್ಯಪಾದೋಜ್ಜ್ವಲಜಲಜಲಸತ್ಪಾಂಸವೋಽಸ್ಮಾನ್ ಪುನಂತು ।
ವಾಚಾಂ ಯತ್ರ ಪ್ರಣೇತ್ರೀ ತ್ರಿಭುವನಮಹಿತಾ ಶಾರದಾ ಶಾರದೇಂದು-
ಜ್ಯೋತ್ಸ್ನಾಭದ್ರಸ್ಮಿತಶ್ರೀಧವಲಿತಕಕುಭಾ ಪ್ರೇಮಭಾರಂ ಬಭಾರ ॥1॥

ವಾಚಾಂ-ವೇದವಾಕ್ಯಗಳಿಗೆ ಪ್ರಣೇತ್ರೀ-ನಿಯಾಮಕಳಾದ ತ್ರಿಭುವನಮಹಿತಾ-ಮೂರು ಲೋಕಗಳಿಗೂ ಪೂಜ್ಯಳಾದ ಶಾರದೇಂದು-ಜೋತ್ಸ್ನಾಭದ್ರ ಸ್ಮಿತ ಶ್ರೀಧವಲಿತ-ಕಕುಭಾ ಶಾರದೇಂದು-ಶರತ್ಕಾಲಸಂಬಂಧಿಯಾದ ಚಂದ್ರನ ಜೋತ್ಸ್ನಾ-ಬೆಳದಿಂಗಳಿನಂತೆ ಮಂಗಳಕರವಾದ ಸ್ಮಿತ-ಮುಗುಳುನಗೆಯ ಶ್ರೀ-ಕಾಂತಿಯಂತೆ ಧವಲಿತ-ಶುಭ್ರವಾದ ಕಕುಭಾ-ದಿಕ್ಕುಗಳುಳ್ಳ ಶಾರದಾ-ಭಾರತೀದೇವಿಯರು ಯತ್ರ-ಯಾವ ಶ್ರೀಮದಾ-ನಂದತೀರ್ಥಭಗವತ್ಪಾದರ ಪಾದಪಾಂಸುಗಳಲ್ಲಿ ಪ್ರೇಮಭಾರಂ-ಅತಿಶಯ ಭಕ್ತಿಯನ್ನು ಬಭಾರ- ಧರಿಸಿದಳೋ(ಮಾಡಿದಳೋ)ಅಂತಹ ಶ್ರೀಮದ್ವಿಷ್ಣ್ವಂಘ್ರಿನಿಷ್ಠಾತಿಗುಣಗುರುತಮ ಶ್ರೀಮದಾನಂದತೀರ್ಥತ್ರೈಲೋಕ್ಯಾಚಾರ್ಯಪಾದೋಜ್ಜ್ವಲಜಲಜಲಸತ್ಪಾಂಸವಃ-ಶ್ರೀಮದ್ವಿಷ್ಣ್ವಂಘ್ರಿನಿಷ್ಠಾ-ಶ್ರೀಸಹಿತವಿಷ್ಣುವಿನ ಪಾದಗಳಲ್ಲಿ ಭಕ್ತಿ ಎಂಬ ಅತಿಗುಣ-ಅತ್ಯುತ್ತಮ ಗುಣವನ್ನು ಹೊಂದಿರುವ ಗುರುತಮ-ಗುರುಗಳಲ್ಲಿ ಶ್ರೇಷ್ಠರಾದ ಶ್ರೀಮದಾನಂದತೀರ್ಥ-ತ್ರೈಲೋಕ್ಯಾಚಾರ್ಯಪಾದೋಜ್ಜ್ವಲಜಲ ಜಲಸತ್ಪಾಂಸವಃ-ಶ್ರೀಮದಾನಂದತೀರ್ಥ-ಶ್ರೀಮದಾನಂದತೀರ್ಥರೆಂಬ ತ್ರೈಲೋಕ್ಯಾಚಾರ್ಯ-ತ್ರೈಲೋಕ್ಯಾಚಾರ್ಯರ ಪಾದ-ಪಾದಗಳೆಂಬ ಉಜ್ಜ್ವಲ-ಪ್ರಕಾಶಮಾನವಾದ ಜಲಜ-ಕಮಲಗಳಲ್ಲಿ ಲಸತ್-ಶೋಭಿಸುವಂತಹ ಪಾಂಸವಃ-ಪಾದಧೂಳಿಗಳು ಅಸ್ಮಾನ್-ನಮ್ಮನ್ನು ಪುನಂತು-ಪವಿತ್ರಗೊಳಿಸಲಿ. ॥ 1 ॥

**ಭಾವಾರ್ಥ-** ಇಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರ ಪಾದಧೂಳಿಯನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ. ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರು ತಮ್ಮ ಗುರುಗಳಾದ ಶ್ರೀಮದಾನಂದತೀರ್ಥರನ್ನು ಹೀಗೆ ಬಣ್ಣಿಸುತ್ತಿದ್ದಾರೆ. ಲಕುಮಿಪತಿಯಾದ ವಿಷ್ಣುವಿನ ಪಾದಗಳಲ್ಲಿ ಅತ್ಯಂತ ಭಕ್ತಿ ಇವೇ ಮೊದಲಾದ ಉತ್ತಮಗುಣಗಳಿಂದ ಅತ್ಯುತ್ತಮರಾದ ಮೂರು ಲೋಕಕ್ಕೆ ಗುರುಗಳು ಎನಿಸಿದವರು ನಮ್ಮ ಆಚಾರ್ಯರು. ಅವರ ಪಾದಕಮಲಗಳಲ್ಲಿ ತಾಕಿದ ಧೂಳಿಕಣಗಳು ನಮ್ಮನ್ನು ಪವಿತ್ರಗೊಳಿಸಲಿ. ಯಾವ ಧೂಳಿಕಣಗಳಲ್ಲಿ ತ್ರಿಲೋಕಪೂಜಿತಳಾದ ವಾಗಭಿಮಾನಿನಿಯಾದ ಭಾರತೀದೇವಿಯು ತಮ್ಮ ಅತಿಶಯವಾದ ಪ್ರೀತಿಯನ್ನು ತೋರಿದಳೋ ಅಂತಹ ಧೂಳಿಕಣಗಳು ನಮ್ಮನ್ನು ಪವಿತ್ರಗೊಳಿಸಲಿ.

**ವ್ಯಾಖ್ಯಾನವಿಶೇಷ-** ವಾಚಾಂ ಪ್ರಣೇತ್ರೀ ಎಂಬುದಕ್ಕೆ ಕವಿಕರ್ಣಾಮೃತಕಾರರು ಮಾತನಾಡಲು ಬರದೇ ಇದ್ದಾಗ ಒಳಗಿದ್ದು ಮಾತುಗಳನ್ನು ಆಡಿಸುವವಳು. ಎನ್ನುವ

ಅರ್ಥದಲ್ಲಿ 'ಪ್ರಸುಪ್ತಾಂ ವಾಚಮ್ ಸಂಜೀವಯತಿ' ಎಂದಿದ್ದಾರೆ. ಈ ಮಾತು 'ಯೋಽಂತಃ ಪ್ರವಿಶ್ಯ ಮಮ ವಾಚಮಿಮಾಂ ಪ್ರಸುಪ್ತಾಂ ಸಂಜೀವಯತಿ' ಎಂಬ ಭಾಗವತದ ಭಗವಂತನ ಮಹಿಮೆಯನ್ನು ನೆನಪಿಸುವಂತಿದೆ.

ಯಸ್ಯಾಃ ಪ್ರಸಾದಾತ್ಪರಮಂ ವಿದಂತಿ ಶೇಷಃ ಸುಪರ್ಣೋ ಗಿರಿಶಃ ಸುರೇಂದ್ರಃ ।
ಮಾತಾ ಚ ಯೈಷಾಂ ಪ್ರಥಮೈವ ಭಾರತೀ ಸಾ ದ್ರೌಪದೀ ನಾಮ ಭಭೂವ ಭೂಮೌ ॥

ಎಂದು ಬ್ರಹ್ಮಾಂಡಪುರಾಣದಲ್ಲಿ ಹೇಳದಂತೆ ವಾಚಾಂ ಎಂದರೆ ಸಕಲಶ್ರುತಿ-ಸ್ಮೃತಿ-ಇತಿಹಾಸ-ಪುರಾಣಾದಿಗಳಿಗೆ ಉಪಕ್ರಮ-ಉಪಸಂಹಾರ ಮೊದಲಾದ ಷಡ್ವಿಧ-ತಾತ್ಪರ್ಯಲಿಂಗಗಳಿಂದ ಮುಖ್ಯವೃತ್ತ್ಯಾ ವಿಷ್ಣುಪರತ್ವ ಇದೆ ಎಂದು ಗರುಡಶೇಷಾದಿ-ದೇವತೆಗಳಿಗೆ ತಿಳಿಸಿ ಕೊಡುವವಳು ಭಾರತೀದೇವಿ. ಈ ಮೂಲಕ ಶ್ರೀವಾಯುದೇವರ ದಯಾಪಾತ್ರಳಾದ ಭಾರತೀದೇವಿಯು ರುದ್ರಾದಿದೇವತೆಗಳಿಗೆ ತತ್ತ್ವೋಪದೇಶಕರು ಎಂದು ತಿಳಿಸಲಾಗಿದೆ.

ಉತ್ಕಂಠಾಕುಂಠಕೋಲಾಹಲಜವವಿದಿತಾಜಸ್ರಸೇವಾನುವೃದ್ಧ-
ಪ್ರಾಜ್ಞಾತ್ಮಜ್ಞಾನಧೂತಾಂಧತಮಸಸುಮನೋಮೌಲಿರತ್ನಾವಲೀನಾಮ್ ।
ಭಕ್ತ್ಯುದ್ರೇಕಾವಗಾಢಪ್ರಘಟನಸಘಟಾತ್ಕಾರಸಂಘೃಷ್ಯಮಾಣ-
ಪ್ರಾಂತಪ್ರಾಗ್ರ್ಯಾಂಘ್ರಿಪೀಠೋತ್ಥಿತಕನಕರಜಃಪಿಂಜರಾರಂಜಿತಾಶಾಃ ॥ 2 ॥

ಉತ್ಕಂಠಾಕುಂಠಕೋಲಾಹಲಜವವಿದಿತಾಜಸ್ರಸೇವಾನುವೃದ್ಧಪ್ರಾಜ್ಞಾತ್ಮಜ್ಞಾನಧೂತಾಂ-ಧತಮಸಸುಮನೋಮೌಲಿರತ್ನಾವಲೀನಾಮ್-ಉತ್ಕಂಠಾ-ಲವಲವಿಕೆಯಿಂದ ಅಕುಂಠಾ-ಅಭಿವೃದ್ಧಿಯಾದ ಕೋಲಾಹಲಜವ-ಕಲಕಲಧ್ವನಿಯ ವೇಗಗಳಿಂದ ವಿದಿತ-ತಿಳಿಯುವ ಅಜಸ್ರಸೇವಾ-ನಿರಂತರ ಸೇವೆಯಿಂದ ಅನುವೃದ್ಧಾ-ಹೆಚ್ಚಲ್ಪಟ್ಟ ಪ್ರಾಜ್ಞಾತ್ಮ-ಜ್ಞಾನಸ್ವರೂಪ-ನಾದ ಪರಮಾತ್ಮನ ಜ್ಞಾನ-ಜ್ಞಾನದಿಂದ ಧೂತ-ನಿರಾಕರಿಸಲ್ಪಟ್ಟ ಅಂಧತಮಸ-ಕಗ್ಗತ್ತಲೆ-ಯುಳ್ಳ ಸುಮನೋ-ದೇವತೆಗಳ ಮೌಲಿ-ಕಿರೀಟಗಳಲ್ಲಿ ಇರುವ ರತ್ನ-ರತ್ನಗಳ ಆವಲೀನಾಂ-ಪಂಕ್ತಿಗಳ ಭಕ್ತ್ಯುದ್ರೇಕಾವಗಾಢಪ್ರಘಟನಸಘಟಾತ್ಕಾರ-ಸಂಘೃಷ್ಯಮಾಣ-ಪ್ರಾಂತಪ್ರಾಗ್ರ್ಯಾಂಘ್ರಿಪೀಠೋತ್ಥಿತಕನಕರಜಃಪಿಂಜರಾರಂಜಿತಾಶಾಃ-ಭಕ್ತಿ-ಭಕ್ತಿಯ ಉದ್ರೇಕ-ಉದ್ರೇಕದ ಒತ್ತಡದಿಂದ ಅವಗಾಢ-ಧೃಡವಾಗುವುದು ಹೇಗೋ ಹಾಗೆ ಪ್ರಘಟನ-ಸಂಘಟ್ಟನೆಯಿಂದ ಸಘಟಾತ್ಕಾರ-ಘಟಾತ್ಕಾರದಿಂದ ಸಹಿತವಾಗುವದು ಹೇಗೋ ಹಾಗೆ ಸಂಘೃಷ್ಯಮಾಣ-ವರಸಲ್ಪಟ್ಟ ಪ್ರಾಂತಪ್ರಾಗ್ರ್ಯಾಂಘ್ರಿಪೀಠ-ಪ್ರಕೃಷ್ಟವಾದ ಪಾದಪೀಠದ ಕೊನೆಯ ಭಾಗದಿಂದ ಉತ್ಥಿತ-ಹೊರಹೊಮ್ಮುವ ಕನಕ-ಸುವರ್ಣದ ರಜ-ಧೂಳಿಗಳಿಂದ ಪಿಂಜರಾರಂಜಿತಾಶಾಃ-ಹೊಂಬಣ್ಣ ಹೇಗೋ ಹಾಗೆ ಅತ್ಯಂತ ಕೆಂಪಾಗಿ ಮಾಡಲ್ಪಟ್ಟ ದಿಕ್ಕುಗಳುಳ್ಳ ಪಾಂಸವಃ-ಪಾದಧೂಳಿಗಳು (ಅಸ್ಮಾನ್-ನಮ್ಮನ್ನು ಪುನಂತು-ಪವಿತ್ರವನ್ನಾಗಿ ಮಾಡಲಿ.)

**ಭಾವಾರ್ಥ**- ಗುರುಗಳ ಸೇವೆಯಿಂದ ಅಭಿವೃದ್ಧವಾದ ಪರಮಾತ್ಮನ ಜ್ಞಾನದಿಂದ ಅಜ್ಞಾನವನ್ನು ಕಳೆದುಕೊಂಡ ದೇವತೆಗಳು ತಲೆಬಾಗಿಸಿ ವಾಯುದೇವರನ್ನು ಸೇವಿಸುತ್ತಿರುವಾಗ ಅವರ ಕಿರೀಟದ ರತ್ನಸಾಲುಗಳು ಗುರುಪಾದಪೀಠದ ಮುಂತುದಿಗೆ ತಾಕುವ ಮಾತ್ರದಿಂದ ಬಂಗಾರದ ಕಿಡಿಗಳು ಹುಟ್ಟಿದವು. ಇಂತಹ ಚಿನ್ನದ ಕಿಡಿಗಳಿಂದ ಸೇರಿ ಕೊಂಡು ದಿಕ್ಕುಗಳನ್ನು ಕೆಂಪಾಗಿಸಿದ ಧೂಳಿಕಣಗಳು ನಮ್ಮನ್ನು ಪವಿತ್ರಗೊಳಿಸಲಿ.

**ವ್ಯಾಖ್ಯಾನವಿಶೇಷ**-ಹರಿವಾಯುದೇವತೆಗಳ ಪಾದಧೂಳಿಯು ಅವರ ಮಡದಿ-ಮಕ್ಕಳಿಂದ ಮಾತ್ರ ಮಾನಿತವಲ್ಲ, ಸಕಲ ದೇವತೆಗಳಿಂದಲೂ ಪೂಜನೀಯವಾಗಿವೆ ಎಂಬ ವಾಯುದೇವರ ವಿಶೇಷ ಮಹಿಮೆಯನ್ನು ಈ ಶ್ಲೋಕದಲ್ಲಿ ವಿವರಿಸಲಾಗಿದೆ.

ಜನ್ಮಾಧಿವ್ಯಾಧ್ಯುಪಾಧಿಪ್ರತಿಹತಿವಿರಹಪ್ರಾಪಕಾಣಾಂ ಗುಣಾನಾ-
ಮಗ್ರ್ಯಾಣಾಮರ್ಪಕಾಣಾಂ ಚಿರಮುದಿತಚಿದಾನಂದಸಂದೋಹದಾನಾಮ್ ।
ಏತೇಷಾಮೇಷ ದೋಷಪ್ರಮುಷಿತಮನಸಾಂ ದ್ವೇಷಿಣಾಂ ದೂಷಕಾಣಾಂ
ದೈತ್ಯಾನಾಮಾರ್ತಿಮಂಧೇ.ತಮಸಿ ವಿದಧತಾಂ ಸಂಸ್ತವೇ ನಾಸ್ಮಿ ಶಕ್ತಃ ॥ 3 ॥

ಏಷೋಽಹಂ-ಸ್ತೋತ್ರವನ್ನು ಮಾಡುವ ನಾನು ಜನ್ಮಾಧಿವ್ಯಾಧ್ಯುಪಾಧಿಪ್ರತಿಹತಿವಿರಹ-ಪ್ರಾಪಕಾಣಾಂ,ಜನ್ಮ-ಉತ್ಪತ್ತಿ ಆಧಿ-ಮನೋರೋಗ ವ್ಯಾಧಿ-ಭಗಂದರಾದಿವ್ಯಾಧಿಗಳಿಗೆ ಉಪಾಧಿ-ಕಾರಣವಾದಂತಹ ಶರೀರದ ಪ್ರತಿಹತಿ-ಮತ್ತೆ ಮತ್ತೆ ಬರುವಿಕೆಯ ವಿರಹ-ವಿಯೋಗವನ್ನು ಪ್ರಾಪಕಾಣಾಂ-ಐದಿಸುವಂತಹ ಅಗ್ರ್ಯಾಣಾಂ-ಶ್ರೇಷ್ಠವಾದಂತಹ ಗುಣಾನಾಂ-ಭಕ್ತಿಜ್ಞಾನಾದಿಗುಣಗಳನ್ನು ಅರ್ಪಕಾಣಾಂ-ಸಮರ್ಪಿಸುವ ಉದಿತ-ಚಿದಾನಂದಸಂದೋಹದಾನಾಂ-ಉದಿತ-ವ್ಯಕ್ತವಾಗುವಂತಹ ಚಿತ್-ಜ್ಞಾನ ಆನಂದ-ಸುಖಗಳ ಸಂದೋಹ-ಸಮುದಾಯವನ್ನು ದಾನಾಂ-ಕೊಡುವಂತಹ ದೋಷ-ಪ್ರಮುಷಿತ-ಮನಸಾಂ-ದೋಷ-ದೋಷದಿಂದ ಪ್ರಮುಷಿತಮನಸಾಂ-ಕಲುಷಿತವಾದ ಮನಸ್ಸುಳ್ಳ ದ್ವೇಷಿಣಾಂ-ದ್ವೇಷಿಗಳಾದ ದೂಷಕಾಣಾಂ-ದೂಷಿಸುವಂತಹ ದೈತ್ಯಾನಾಂ-ದೈತ್ಯರಿಗೆ ಅಂಧೇ-ಅಂಧರೂಪವಾದ ತಮಸಿ-ತಮಸ್ಸಿನಲ್ಲಿ ಆರ್ತಿಂ- ದುಃಖವನ್ನು ಚಿರಂ-ಬಹುಕಾಲ ಆಗುವದು ಹೇಗೋ ಹಾಗೆ ವಿದಧತಾಂ-ಮಾಡುವಂಥ ಏತೇಷಾಂ-ಪೂರ್ವೋಕ್ತವಾದ ಪಾದಪಾಂಸುಗಳ ಸಂಸ್ತವೇ-ಸ್ತೋತ್ರಮಾಡುವಲ್ಲಿ ನಾಸ್ಮಿ ಶಕ್ತಃ-ನಾನು ಸಮರ್ಥನಲ್ಲ.

**ಭಾವಾರ್ಥ**- ಉತ್ಪತ್ತಿ-ಮನೋರೋಗ-ಭಗಂದರಾದಿವ್ಯಾಧಿಗಳು ಇವುಗಳಿಗೆ ಕಾರಣವಾದ ಶರೀರವು ಮತ್ತೆ ಮತ್ತೆ ಬರದಂತೆ ಮಾಡುವ, ಶ್ರೇಷ್ಠವಾದ ಭಕ್ತಿಜ್ಞಾನಾದಿ-ಗುಣಗಳನ್ನು ಸಮರ್ಪಿಸುವ, ಜ್ಞಾನ-ಸುಖಗಳ ಸಮುದಾಯವನ್ನು ಕೊಡುವಂತಹ, ದೋಷದಿಂದ ಕೂಡಿದ ಮನಸ್ಸುಳ್ಳ ದೈತ್ಯಾದಿಗಳಿಗೆ ಅಂಧಂತಮಸ್ಸಿನಲ್ಲಿ ಬಹುಕಾಲ ದುಃಖವನ್ನು ನೀಡುವ ನಿಮ್ಮ ಪಾದಪಾಂಸುಗಳನ್ನು ಸ್ತೋತ್ರಮಾಡುವಲ್ಲಿ ನಾನು ಸಮರ್ಥನಲ್ಲ.

